श्रीकृष्णाय नमः ।

# भावप्रकाशिका ।

( ब्रह्मसूत्रवृत्तिः । )

( प्रथमाध्यायः । )

श्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचिता ।



श्रीसुरतिस्थश्रीमद्गोस्वामिश्रीमग्नलालात्मजश्रीव्रजरत्नलालचरणसंपूर्णसाहाय्येन
'भृगुपुरस्थमूलचन्द्रतुलसीदासतेलीवाला, बी. ए., एल एल. बी.,
वकील हाइकोर्ट, सुरतिस्थ धैर्यलाल व्रजदास सांकलीया,
बी. ए., एलएल. बी., वकील हाइकोर्ट,'
इत्येताभ्यां संशोध्य 'कर्णाटक' मुद्रणालये
मुद्रयित्वा प्रकटीकृता ।



श्रीवल्लभाब्दाः ४४४. संवत् १९७९.



मूल्यमेकमुद्रिका ।



## प्रस्तावना ।

આ ગ્રન્થના પ્રણેતા શ્રીકૃષ્ણચન્દ્રજી મહારાજ શ્રીદ્વારકાધીશજીના ગૃહમાં થઈ ગયા. એઓશ્રી શ્રીપુરુષોત્તમજીના ગુરુ હતા. આ બન્ને ગુરુશિષ્યનું કર્તૃત્વ આ ગ્રન્થમાં ભાસે છે. આ વૃત્તિનો પ્રથમાધ્યાય ત્રણ ગ્રન્થના આધારે શોધ્યો છે. એ પુસ્તક પં. ગટ્ટૂલાલજીના સંગ્રહમાંથી પ્રાપ્ત થયા, અને એક શ્રીનાથદ્વારના સંગ્રહમાંથી પ્રાપ્ત થયું. ટિકૈત શ્રીગોવર્ધનલાલજી, શ્રીદામોદરલાલજી તથા તદાશ્રિત શાસ્ત્રી નન્દકિશોરનો તદર્થ ઉપકાર માનીએ છીએ. રત્નગોપાલભટ્ટજીના મુદ્રિત પુસ્તકમાં ઘણી ત્રુટિઓ હતી અને અમારી પાસેની પ્રતો પણ સંતોષપ્રદ ન હતી. તેથી શ્રીઅનિરુદ્ધલાલજીને જામનગરના સંગ્રહમાંથી તે પુસ્તક મોકલી આપવા વિનતિ કરેલી. તદર્થ પત્ર પણ લખ્યાં; તથાપિ આવા નિરપેક્ષ સાંપ્રદાયિક કાર્યમાં આવા વિદ્વાન્ ગોસ્વામિબાલકે શક્ય અને સરલ હોવા છતાં સાહાય્ય ન કર્યું તેથી અમને ખેદ થાય છે. આ ભાગના શોધનમાં શ્રીપુરુષોત્તમજીનો નિજ શ્રીહસ્તાક્ષરલિખિત પ્રથમાધ્યાયનો પ્રકાશ અમને બહુ જ સહાયક થઈ પડયો. યથાશક્તિ યથામતિ અમે શોધન કર્યું છે. સાંપ્રદાયિક તથા ઇતર વિદ્વાનોને આ ગ્રન્થ સંપ્રદાયનું પાંડિત્ય કેટલું ગહન હતું તે દર્શાવવાને સમર્થ છે. શ્રીકૃષ્ણચન્દ્રજીનું ચરિત્ર વેણુનાદ માસિકમાં આપ્યું છે એટલે અત્ર પુનરુક્તિ કરતા નથી.

સુરતવાલા શ્રીવ્રજરત્નજી મહારાજ સંવત્ ૧૯૭૭ ના ભાદ્રપદમાં ભરૂચ પધાર્યા હતા. શ્રીપુરુષોત્તમજીના ઉત્સવ દિવસે–ભાદ્રપદ–શુક્લ–એકાદશીને દિવસે આપશ્રીએ એક વ્યાખ્યાન ત્યાં કર્યું. સાંપ્રદાયિક નષ્ટ થતા સાહિત્યનું રક્ષણ કરવાનો ઉપદેશ કર્યો. મહારાજશ્રીના ઉપદેશને માથે ચઢાવી નીચે જણાવેલા વૈષ્ણવોએ એ કાર્યમાટે નીચે જણાવેલું દ્રવ્ય આપ્યું. એ સંગૃહીત દ્રવ્યથી આ ગ્રન્થનું મુદ્રણ થયું છે. શ્રીકૃષ્ણચન્દ્રજીની લેખનપદ્ધતિ અત્યન્ત પ્રૌઢ છે અને તેથી શોધનાર્થ અમારા સર્વ પ્રયત્ન છતાં દોષ નથી જ રહયો એમ કહવું અશક્ય છે. એવા દોષોનેમાટે ગ્રન્થપ્રણેતા મહાનુભાવની ક્ષમા યાચી આ પરમ પરિશ્રમથી સિદ્ધ થયલો ગ્રન્થ શ્રીમત્પ્રભુચરણકમલમાં સમર્પીએ છીએ.

---

## સં. ૧૯૭૬ ના ભાદરવા સુદિ ૧૦ ના મનોરથને દિવસે પુસ્તકો છપાવવા માટે ભરાયલી રકમ મળી તેની યાદી.

**ભરૂચ**

૨૫૧) શ્રી ૬ ગોસ્વામી શ્રી વ્રજરત્નલાલજી મહારાજ સુરતવાળા
૨૦૧) શા. સુંદરલાલ ચંદુલાલ
૧૦૧) ,, લલ્લુભાઈ પ્રાણવલ્લભદાસ
૧૦૧) ,, જેકીસનદાસ કસનદાસ
૪૧) ,, ચતુર્ભુજદાસ પરમાનંદદાસ
૨૫) ,, અમરતલાલ મોહનલાલ
૨૫) ,, ઠાકોરલાલ રણછોડદાસ
૨૫) ,, હીરાલાલ અમૃતલાલ
૨૫) ,, કૃષ્ણવલ્લભ રણછોડદાસ ચોકશી
૧૫) ,, પરશોતમ ઘેલાભાઈ
૧૧) ,, કૃષ્ણલાલ ચુનીલાલ મજમુદાર
૫) ,, બાળગોવન વીજભુખણ દલાલ
૫) ,, ભોગીલાલ ફકીરભાઇ દલાલ
૫) ,, દામોદરદાસ દ્વુવારકાદાસ દલાલ
૫) ,, વીજભુખણ ગોરધનદાસ દલાલ
૫) ,, મગનલાલ અમૃતલાલ દલાલ
૫) ,, મગનલાલ ગોપાળદાસ
૫) ,, હરકીસનદાસ જગજીવનદાસ
૫) ,, તાપીદાસ લખમણદાસ
૫) ,, વલ્લભદાસ નરોતમદાસ સરકારકુન
૫) ,, નગીનલાલ રણછોડદાસ
૫) ,, મનમોહનદાસ દલપતરામ
૫) ,, મનસુખદાસ જીવણદાસ કંદોઈ
૫) ,, ભોગીલાલ મોહનલાલ
૫) ,, સેવકલાલ હરગોવન
૫) ,, સોમાભાઇ દેસાઇભાઇના મહેતાજીઓ
૧) ,, સોમાભાઇ દેસાઇભાઇ પટેલ
૫) ,, ઠાકોરલાલ ત્રીભોવનદાસ દલાલ

श्रीकृष्णाय नमः

# भावप्रकाशिका

## श्रीमद्भाष्यानुसारिब्रह्मसूत्रवृत्ति

## शास्त्रवित्तमश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रकृता ।



**नत्वा श्रीवल्लभाचार्यान् प्रभून् श्रीविट्ठलेश्वरान् ।**
**श्रीमद्भाष्यानुसारेण सूत्रवृत्तिं ब्रुवेऽधुना ॥ १ ॥**

### अथातो ब्रह्मजिज्ञासा ॥ १ ॥ (१. १. १.)

अस्यारम्भसूत्रत्वादत्राधिकारिविषयसम्बन्धप्रयोजनरूपमनुबन्धचतुष्टयं वक्तव्यम् । शास्त्रप्रवृत्त्यावश्यकत्वहेतुभूता संगतिरपि निरूपणीया । शास्त्रस्य वैधत्वमपि विचारणीयम् । तत्र तावत् 'स्वाध्यायोऽध्येतव्यः' 'अष्टवर्षं ब्राह्मणमुपनयीत, तमध्यापयीत' 'साङ्गो वेदोऽध्येयो ज्ञेय' इति वेदाध्ययने त्रयो विधयः ।

तेषु भाट्टाः, अध्ययनविधेरक्षरग्रहणमात्रपर्यवसानाङ्गीकारे अदृष्टफलकल्पनापत्तेरर्थज्ञानरूपदृष्टफलार्थत्वमङ्गीकृत्य, 'वसन्ते ब्राह्मणमुपनयीते' त्यादिवाक्येषु द्वितीयानिर्देशेन त्रैवर्णिकानां संस्कार्यत्वावगमात् संस्कारस्य च कार्यान्तरयोग्यतासम्पादनरूपत्वादुपनयनसंस्कृतानां त्रैवर्णिकानां कार्यान्तरापेक्षत्वेन तत्सन्निधिपठितस्याध्ययनस्य चानिर्दिष्टकर्तृकतया कर्त्रपेक्षत्वेन परस्पराकांक्षासन्निधियोग्यत्वैरध्ययनविधेस्त्रैवर्णिकानां यज्ञरूपकार्यान्तराधिकारनियमार्थत्वान्नियमविधित्वे आधानादिविधयोऽपि त्रैवर्णिकानेव विदुषोऽधिकुर्वन्तीत्यध्ययनविधिरर्थज्ञानमाक्षिपति, तच्च विचारशास्त्राधीनमिति तस्यापि वैधत्वमित्याहुः ।

प्राभाकरास्तु, संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु निय इत्याचार्यकरणे विहितेनोपनयीतेत्यात्मनेपदेनोपनयनरूपस्य माणवकसंस्कारस्याचार्यत्वसिद्धिप्रयोजनत्वं लभ्यते, उपनीतो माणवकोपि न तूष्णीं स्थितः संनिधिमात्रेणाचार्यत्वं साधयतीति तद्व्यापारापेक्षायां वाक्यान्तर उपनयनं प्रक्रम्य विहितमध्ययनमेवाध्यापनोपकारकत्वादुपनीतव्यापारतयाध्यवसीयते, ततोध्ययनस्यापि प्रयोजने विचार्यमाणे स्वसमवेतत्वेनान्तरङ्गत्वादर्थज्ञानमेव तथात्वेन निश्चीयते, आचार्यत्वसिद्धिस्त्वध्यापनस्यैव

प्रयोजनम्, अध्यापकसमवेतत्वात्, एवमेतन्मतेप्यर्थज्ञानस्य विध्याक्षिप्तत्वात् तदाक्षिप्तस्य विचारशास्त्रस्य वैधत्वमित्याहुः ।

रामानुजाचार्यास्तु, अध्ययनविधिना स्वाध्यायाख्यस्य वेदस्याक्षरग्रहणमात्रं विधीयते, तत्रेतिकर्तव्यताकांक्षायामध्यापनविधिना उपाकरणपूर्वकाध्ययनविधिना चाध्ययनेऽपेक्षितान्यङ्गानि विधीयन्ते, तेनाचार्योच्चारणानूच्चारणरूपमध्ययनमक्षरराशिग्रहणफलकमित्यवगम्यते, तच्चाध्ययनं विधिवाक्ये कर्मत्वेन बोधितस्य चतुर्वर्गफलस्य स्वाध्यायाख्यस्य वेदस्य संस्काररूपम्, ततश्चोत्सर्जनोत्तरमङ्गाध्ययनस्योक्तत्वात् तैः सह यथाविध्यधीयमानः स्वाध्यायः स्वभावादेवापाततोऽर्थं बोधयति, न तु सामस्त्येनेत्यर्थाक्षिप्तो विचार इति तच्छास्त्रस्यापि वैधत्वमित्याहुः ।

शाङ्करास्तु व्यवहारे वयं भाट्टा इति वदन्तीति तथैव वैधत्वम् । 'विजिज्ञासस्वे'ति विधिकारितं वा । एवं शैवमतेऽप्यर्थाक्षिप्तमेव विचारशास्त्रवैधत्वम् ।

भास्कराचार्यास्तु, स्वाध्यायविधेरर्थज्ञानपर्यवसितत्वेपि तस्य ब्रह्मज्ञानाक्षेपकत्वं न वक्तुं शक्यम्, 'यज्ञेन दानेने'ति, 'शान्तो दान्त उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं पश्ये'दिति श्रुत्या ब्रह्मज्ञानस्योपायान्तरसापेक्षत्वबोधनात्, 'श्रवणायापि बहुभिर्यो न लभ्य' इत्यादिश्रुत्या ब्रह्मणो दुर्ज्ञेयत्वाच्च, किन्तु 'श्रोतव्यो मन्तव्यः सोऽन्वेष्टव्यः, स विजिज्ञासितव्य' इत्यादिवेदान्तविधिकारितैव ब्रह्मजिज्ञासेति तेन शास्त्रस्य वैधत्वमित्याहुः ।

माध्वा अप्येवमेवाहुः । भैक्षवेऽप्येवम् ।

सिद्धान्ते तु प्राथमिकमध्ययनमध्यापनविधिरेव प्रयुंक्ते । माणवकोपनयनस्याध्ययनार्थत्वेपि तस्य बालत्वेनाध्ययने स्वतः प्रवृत्त्यभावात् । तच्च गुरूच्चारणानूच्चारणरूपं वेदाक्षरग्रहणफलकमेव । ततः सत्सङ्गादिवशात् तत्र रुचावुत्पन्नायां वयसा सामर्थ्ये च जातेऽध्येतव्य इति कृत्यप्रत्ययेन तस्यावश्यकता बोध्यते । ततस्तेन स्वाध्यायावर्तने पापापगमे 'ज्ञेयश्चे'ति वाक्येनार्थज्ञानस्याप्यावश्यकता बोध्यते । ततो ज्ञानं साक्षाद्वाक्योक्तमेवेत्याक्षेपलभ्यता वृथैव स्वसूचिभिराद्रियत इति ।

तत्र वैदिकाः प्राचीनपरम्परया गुरुमुखादङ्गैश्चार्थज्ञानस्य सम्भवान्मीमांसाद्वयकरणं वृथैवेत्याशङ्कन्ते । सिद्धान्तस्तु तत्करणं तदा वृथा स्याद्यदि कालेन गुणक्षोभेण चाध्येतॄणां स्वभावभेदो न स्यात् । जाते तु स्वभावभेदे एकादशस्कन्धीयवाक्यैश्चावगते, सङ्गादिना सात्त्विकानामपि बुद्धिमान्द्ये भगवान् वेदव्यासो वेदान् विभज्य शिष्यैः शाखाविभागं च कारयित्वा तेषां परमपुरुषार्थसिद्धये स्वयं वेदार्थं बोधयितुमतिकरुणया ब्रह्मविचारशास्त्रं प्रणीतवान् । तदेतत् प्रथमस्कन्धे चतुर्थाध्याये सूचितम् । अतो विरुद्धशास्त्रसम्भेदजन्यबुद्धिदोषाणामङ्गैर्निवृत्त्यसम्भवाद् गुरुमुखादर्थश्रवणेपि कालान्तरे यथा पदादिपाठे वैलक्षण्यदर्शनेन संहितापाठसन्देहः, तदपहारार्थं यथा प्रातिशाख्यरूपा

लक्षणग्रन्था अवश्यमुपयुक्ताः, तथार्थसन्देहनिवृत्त्यर्थं विचारशास्त्रमप्यावश्यकम् । अत एव चरणव्यूहे परिशिष्टे तस्या उपाङ्गेषु गणना । अतो विचारशास्त्रस्यार्थाक्षिप्तं वैधत्वं वा वेदान्तविधिकारितं वास्तु, तत्र नाग्रहः । उपयोगस्तु मन्दमध्यमान् प्रति सन्देहनिवृत्तौ दार्ढ्ये च । उत्तमान् प्रति तु दार्ढ्य एव । एवं पूर्वमीमांसाया अप्युपयोगो बोध्य इति। एवं चात्र शास्त्रावतरणे भगवतो व्यासस्य करुणैव सङ्गतिरिति सिध्यति ।

अत्र पूर्वमीमांसकाः, जैमिनिना धर्मजिज्ञासां प्रतिज्ञाय द्वादशलक्षण्या यज्ञादिरूपो धर्मो विचारितः, चतुर्लक्षण्या चोपासनालक्षण इति षोडशलक्षण्या सर्वोपि धर्मो वेदार्थरूपो निर्विचिकित्सः सिद्धः । नच ब्रह्मज्ञानार्थमुत्तरमीमांसेति वाच्यम् । 'आत्मा वारे द्रष्टव्यः' 'अयं हि परमो धर्मो यद्योगेनात्मदर्शन'मिति श्रुतिस्मृतिभ्यां तस्यापि धर्मत्वे निश्चिते तस्यापि विचारितप्रायत्वात् । नच सृष्ट्यादिवाक्यार्थनिर्णयाय तदपेक्षा। तेषामर्थवादरूपत्वात् । मीमांसकमते प्रवाहनित्यत्वोपगमेन जगतः स्वातन्त्र्यात् कर्तुरभावेनोपासनाविषयस्यात्मनः प्रशंसार्थत्वात् । अत एव वाक्यान्तरे तदपवादोऽपि युज्यते। अत एव पूर्वमीमांसयैव गतार्थत्वान्नारम्भणीयोत्तरमीमांसेति प्राहुः ।

तत्रोच्यते । उपासनाया मानसक्रियारूपत्वेन धर्मत्वेपि न ब्रह्मणो धर्मरूपत्वम् । नित्यज्ञानस्वरूपत्वेन चोदनालक्षणक्रियारूपत्वाभावात्, ब्रह्मण एव च सर्ववेदार्थत्वात्,'सर्वे वेदा यत् पदमामनन्ति' 'वेदास्त्रिकाण्डविषया ब्रह्मात्मविषया इमे, मां विधत्तेऽभिधत्ते मा'मित्यादिश्रुतिस्मृतिपुराणवाक्येभ्यस्तथा निर्णयात्, किंबहुना वेदे धर्मोपि ब्रह्मात्मकत्वेनैव प्रतिपाद्यः, 'धर्मो यस्यां मदात्मक' इतिवाक्यात्। 'यज्ञो वै विष्णु'रि तिश्रुतेश्च। जैमिनिस्त्वेकदेशमादाय पुरःस्फूर्तिकमेवार्थमुक्तवान्, अतो न तन्मीमांसया गतार्थत्वम्। जगत्स्वातन्त्र्यं तु 'सदेव सौम्येदमग्र आसी' दित्यादिसृष्टिवाक्यविरुद्धत्वादेवोपेक्ष्यम्। नच तेषामर्थवादरूपत्वात्तेषां स्वार्थे प्रामाण्याभावेन तद्विरोधो न दोषायेति वाच्यम् । स्वार्थे तेषामप्रामाण्यस्य प्रतारकत्वप्रसञ्जकतया सर्ववेदप्रामाण्यविघटकतया चासङ्गतत्वात् । अपौरुषेयत्वस्य सर्ववेदसाधारणत्वादेकत्र विसंवादे सर्वत्रैवाविश्वासप्रसङ्गात् । अतो भूतार्थवादत्वेन तेषां स्वार्थे प्रामाण्ये जगतः सकर्तृकत्वसिद्ध्या तत्कर्तृभूतब्रह्मस्वरूपनिर्णयार्थमावश्यकैव तन्मीमांसेति । नच साधनस्य फलशेषत्वात् फलस्य कर्मणैव सिद्धौ किं ब्रह्मज्ञानेनेति वाच्यम् । मोक्षरूपस्य केवलेन कर्मणा सिद्ध्यभावात् । 'यदेव विद्यया करोति श्रद्धयोपनिषदा वा तदेव वीर्यवत्तरं भवती'ति श्रुत्या तथा निर्णयात् । नच 'तमेव विदित्वा अतिमृत्युमेती'त्यादिश्रुत्या केवलज्ञानादेव मोक्षोक्तेः किं कर्मणेति वाच्यम् । उक्तश्रुतिविरोधात् । जरामर्याग्निहोत्रादिबोधकश्रुतिविरोधाच्च । ब्रह्मज्ञानवतां वशिष्ठादीनामपि यज्ञकरणश्रवणस्मरणाभ्यां च । पूर्वस्य काण्डस्योत्तरानुपयोगे उत्तरस्य पूर्वानुपयोगे च नैराकांक्ष्येणोभयोरैकशास्त्र्यभङ्गप्रसङ्गाद्, वेदान्तसमाख्याविरोधप्रसङ्गाद्, 'ऋचां मूर्धान'मितिश्रुतिविरोधप्रसङ्गाच्च । अतोऽधिकारिविचारेण ज्ञानकर्मसमु-

चयस्यैवावश्यकत्वाद् ब्रह्म सर्वथा जिज्ञास्यमेवेति तदुपयोगितया वेदान्ता अपि विचारणीया इति सिद्धम् ।

तथाचायं सूत्रार्थः । अथशब्दोऽधिकारे । मङ्गलस्य श्रवणमात्रेणैव सिद्धेः । अधिकारोऽत्र प्रारम्भः । अतःशब्दो हेतौ । ब्रह्मण इति शेषषष्ठी । जिज्ञासापदं विचारे रूढम् । 'अजिज्ञासितमद्धर्मो गुरुं मुनिमुपाव्रजे'दित्यादिप्रयोगात् । एवञ्च कर्मादिभ्योऽधिकं ज्ञानमेव पुरुषार्थसाधनम्, अतो हेतोर्ब्रह्मज्ञानविषयाया इच्छायाः पूरणाय ब्रह्मविचार आरभ्यत इति । अत्र केचिदथशब्दमानन्तर्ये व्याचक्षते । तन्न युक्तम् । यत्किञ्चिदानन्तर्यस्यार्थादेव सिद्धेरवक्तव्यत्वात् । ब्रह्मणो वेदार्थत्वेनानधीतवेदस्य तत्रानधिकारात् वेदाध्ययनानन्तर्यस्य ब्रह्मपदेनार्थादेव सिद्धिसंभवात् । नापि धर्मविचारानन्तर्यं युक्तम् । हृदयस्याग्रे अवद्यति 'अथ जिह्वाया अथ वक्षस' इतिवत् क्रमनियामकस्याभावेन विपर्ययस्यापि सम्भवात् । नापि पाठाद्वाचाराद्वा व्यवस्था । तत्राप्यनियमसम्भवात् । प्रत्यवायाश्रवणात् । यदि च धर्मस्य ब्रह्मज्ञानहेतुत्वात् तद्विचारोपयुक्तानां श्रुतिलिङ्गादीनां वेदचोदनार्थवादस्मृत्यादिप्रामाण्यस्य ब्रह्मविचारोपयुक्तत्वाच्च धर्मविचारानन्तर्यं ब्रह्मविचारस्य नियतमिति विभाव्यते, तदापि न वक्तव्यत्वम् । अध्ययनवदावश्यकतयैव प्राप्तत्वात् । तथाच ततोऽप्यधिकाकांक्षा स्यात् । किमनन्तरमिति । नापि नित्यानित्यवस्तुविवेकः ऐहिकामुष्मिकफलभोगविरागः शमादिसाधनसम्पन्मुमुक्षुत्वं चेति साधनचतुष्टयानन्तर्यं युक्तम् । शमादीनां पूर्वमप्रस्तुतत्वेन स्वयं शब्दानिर्दिष्टत्वेन च सूत्रकाराविवक्षितत्वात् । पूर्वमीमांसोक्तकर्मतत्फलादिजावन्यात्मनित्यत्वज्ञानाधीनतया शास्त्रद्वयविचारानन्तरभावित्वेन पूर्वं वक्तुमशक्यत्वात् । तेषां पूर्वभावे विचारवैयर्थ्यापत्तेः । शमादीनां वेदान्तविचारानन्तरभावित्वेन पूर्वं वक्तुमशक्यत्वात्, विचारस्य च तदनन्तरभावित्वेनान्योन्याश्रयादसम्भवापत्तेः । शमादिरहितानामपीदानीन्तनानां निःसन्दिग्धवेदार्थज्ञानोपलब्ध्या प्रत्यक्षविरोधाच्च । तादृशस्याधिकारिणः श्रवणमात्रेण कार्तार्थ्यात् समाधिनिरतत्वेन प्रवचनासम्भवाच्छास्त्रोच्छेदापत्तेश्च । नापि जातिकृतं गुणकृतं च ब्रह्मविद्यायामधिकारत्रैविध्यं साधनाध्यायानुसारेणात्राङ्गीकर्तुं शक्यम् । विचारब्रह्मविद्ययोरभेदाभावात् । अतो माध्वोक्तश्रुतिस्मृतीनामपि न विरोधः । अतोऽवश्यापेक्षितानन्तर्यस्य ब्रह्मजिज्ञासापदादेव प्राप्तेरधिकाकांक्षाऽभावाय अथशब्दोऽधिकारार्थ एव युक्तः । शेषषष्ठ्या च ब्रह्मसम्बन्धिनां तज्ज्ञानोपयोगिनां सर्वेषां विचारस्य प्रतिज्ञातत्वादग्रे वक्ष्यमाणेषु पदार्थेषु न कस्याप्यप्रतिज्ञातार्थत्वम् । नचैवं ब्रह्मसम्बन्धिनामेव जिज्ञास्यत्वे ब्रह्मणो गौणत्वमजिज्ञास्यत्वं वा स्यादिति शङ्कनीयम् । शब्दत एव गौणत्वेनार्थतो गौणत्वाभावात् । तत्संबन्धेनैव संबन्धिनां जिज्ञास्यताबोधनात् । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति निःसन्दिग्धेन स्वरूपलक्षणेन तत्स्वरूपे आसंसारं प्रसिद्धानुभावत्वेन तत्सत्तायां च सन्देहाभावेपि तादृशविवक्षितगुणवैशिष्ट्येन जिज्ञास्यत्वाम्नायादिति ।

प्रतिज्ञोत्तरं कार्यलक्षणस्य तत्र प्रमाणस्य च सूत्रितत्वेन सूत्रकाराशयस्याप्येवमेव सद्भावावगमाच्च । वेदप्रामाण्यं त्वास्तिकसर्वतन्त्रसिद्धत्वाज्जैमिनिना विशेषतो विचारितत्वाच्च श्रुतिलिङ्गादिवन्न पुनर्विचार्यते । तस्माद् ब्रह्म जिज्ञास्यमिति सिद्धम् । सम्बन्धिनामेव जिज्ञास्यत्वसाधनेन यथाधिकारं ज्ञानकर्मसमुच्चयस्य भक्तिमार्गीयसर्वात्मभावस्य च साधनतयाभिप्रेतत्वं सूचितं भवति । तथा ब्रह्मजिज्ञासापदेन जिज्ञासुरधिकारी । ब्रह्म ससम्बन्धिकं विषयः । प्रतिपाद्यप्रतिपादकभावः सम्बन्धः । ब्रह्मज्ञानं च फलम् । तस्यापि परप्राप्तिरूपो मोक्षश्च फलमित्यनुबन्धचतुष्टयमप्यत्र सिद्धं वेदितव्यम् ॥ १ ॥

इति प्रथमं जिज्ञासाधिकरणम् ।

## जन्माद्यस्य यतः शास्त्रयोनित्वात् ॥ २ ॥ (१. १. २.)

अत्र सर्वेऽपि योगविभागेन शास्त्रयोनित्वादिति सूत्रं भिन्नमभ्युपगच्छन्ति । तन्न युक्तम् । अग्रिमसूत्रेषु साध्यहेतुनिर्देशपूर्वकमेवाधिकरणरचनदर्शनेनात्रापि तथैव युक्तत्वात् । सांख्ये ब्रह्मपदस्य प्रकृतिवाचकत्वाङ्गीकारात् तद्वारणार्थं ब्रह्मणि शास्त्रोक्तकर्तृत्वप्रतिपादनस्यावश्यकत्वाच्च । माध्वाः शैवाश्च जन्माद्यधिकरणं शास्त्रयोनित्वाधिकरणं च भिन्नमङ्गीकुर्वन्ति । तेषामाद्यस्य हेतुशून्यत्वाद् प्रतिपादकाकांक्षिततया द्वितीयस्य च साध्यशून्यत्वात् प्रतिपाद्याकांक्षिततयातिक्लिष्टत्वाद्विवक्षितप्रमेयासाधकत्वं वा क्लेशेन साधकत्वं वा बोध्यम् ।

रामानुजाचार्या भास्कराचार्याश्च जन्माद्यधिकरणं त्रिसूत्रमङ्गीकुर्वन्ति । तेषां मतेऽथशब्देन धर्मविचारानन्तर्यस्य ब्रह्मजिज्ञासायां बोधनात् ब्रह्मणो वेदान्तवेद्यतोपतिष्ठते, तथाप्यथशब्दस्यानेकार्थत्वेनानन्तर्यस्याप्यनेकविधत्वेन चोपपादनसापेक्षत्वाद् द्रागनुपस्थितिरिति । समन्वयसूत्रस्थसाध्यनिर्देशासङ्गतिरिति च । अत ऐकसूत्र्यपक्ष एव श्रेयान् ।

शङ्कराचार्यमते जन्माद्यधिकरणं दशसूत्रम् । तत्र सूत्रद्वये पृथग्रूपनामप्रपञ्चकर्तृत्वप्रतिज्ञा । शेषेष्वष्टसु हेतूक्तिरिति । तदप्यसङ्गतम् । द्वितीयसूत्रे शास्त्रयोनिरित्येतावतैव प्रतिज्ञापूर्तौ त्वादित्यस्य वैयर्थ्यप्रसङ्गात् । समन्वयसूत्रे साध्यनिर्देशविरोधप्रसङ्गाच्च । तस्मादैकसूत्र्याङ्गीकारेणैकाधिकरण्यपक्ष एव युक्त इति ।

तथाचायं सूत्रार्थः । जन्म आदिः पूर्वावधिर्येषां भावविकाराणां ते जन्मादयः । सुपां सुलुगिति जसो लुक् । अत्र कुटादिभ्य इतिवदवयवसमासादतद्गुणसंविज्ञानो बहुव्रीहिः । विकारान्तरज्ञानदशायां जन्मनः प्रव्यक्तत्वाभावात् । नच तदसंग्रहापत्तिः । श्रुतत्वेन पूर्वमेव तस्य बुद्धावारोहात् । यद्वा । जन्म आदि यस्य स्थितिभङ्गस्य तज्जन्मादीति तद्गुणसंविज्ञानः । अस्येति पुरोवर्ती प्रपञ्च इदमा निर्दिश्यते । अनेकभूतभौतिकदेवतिर्यङ्मनुष्यानेकलोकाद्भुतरचनस्य मनसाप्याकलयितुमशक्यस्यानेककोटिब्रह्माण्डयुक्तस्यानायासेनोत्पत्तिस्थितिभङ्गकरणं भावविकारादिकं वा यतः । तद् ब्रह्मेति

त्वधिकारबलादेवायाति, न त्वध्याहारः । अथवा । आद्यस्याकाशस्य प्रधानस्य वा जन्म यत इति । शास्त्रे योनिः शास्त्रयोनिस्तस्य भावस्तस्मात् । योनिशब्दो निमित्तकारणे रूढः । 'तासां ब्रह्म महद्योनिरहं बीजप्रदः पिते'ति मातृरूपत्वबोधनात् । मातुश्च भस्त्रात्वादिति । तथाच शास्त्रोक्तनिमित्तकारणत्वादित्यर्थः । तच्च निमित्तत्वं स्वातन्त्र्यात् कर्तृत्वे पर्यवस्यति ।

शाङ्करास्तु शास्त्रस्य योनिरित्यत्र षष्ठीसमासमङ्गीकृत्य योनिपदे कारणसामान्यवाचकत्वं चाङ्गीकृत्य सर्वज्ञकल्पसर्वार्थावद्योतिशास्त्रकर्तृत्वाद् ब्रह्मणि सर्वज्ञत्वं साधयन्ति। तदन्ये न रोचयन्ते। निःश्वासवदबुद्धिपूर्वकमुत्पादने सर्वज्ञताया असम्भवात्। बुद्धिपूर्वकमर्थमवलोक्योत्पादने काणादादिशास्त्रानुसरणप्रसङ्गात् । पूर्वकल्पीयानुपूर्व्या एव यथावस्थितायाः कथनेपि राजदूतादिवत् सर्वज्ञताया असम्भवादिति । एतेन पुरुषास्वातन्त्र्यमात्रमेव वेदे अपौरुषेयत्वमिति वदतो वाचस्पतेरपि मतं न सार्वज्ञ्यसाधनक्षममिति बोद्धव्यम् । यत्तु, विमतं ब्रह्म वेदगतसर्वविषयप्रकाशनशक्त्याधारः, वेदोपादानत्वात्, दीपगतप्रकाशनशक्त्याधारदीपोपादानवह्निवदिति विवरणोक्तमनुमानम्, तदप्यसङ्गतम् । ब्रह्म न वेदगतसर्वविषयप्रकाशनशक्त्याधारः । निःश्वासात्मकवेदोपादानत्वात् । अबुद्धिपूर्वकनिःश्वासोपादानपुरुषवदिति प्रयोगान्तरेण सत्प्रतिपक्षत्वात् ।

अन्ये तु शास्त्रं योनिः कारणं मूलप्रमाणमस्येति षष्ठ्यर्थे बहुव्रीहिमङ्गीकुर्वन्ति । तदप्ययुक्तम् । लक्षणाप्रसङ्गात्, स्वारसिकार्थत्यागाच्च ।

विज्ञानेन्द्रभिक्षुस्तु सप्तम्यर्थे बहुव्रीहिमङ्गीकृत्याह । अत्र शास्त्रादिति वक्तव्ये शास्त्रयोनित्वादिति यदुक्तं तच्छास्त्राविरुद्धानुमानस्मृतियोगिप्रत्यक्षाणां संग्रहायेति ।

तदप्यसङ्गतम् । अत्यन्तापरिदृष्टे अनुमानस्यासाधकत्वात् । तथाहि । जगत् कार्यं सावयवत्वात् । महत्त्वे सति क्रियावत्त्वात्, महत्त्वे सति मूर्तत्वाच्च, घटादिवदित्यनुमानैर्जगतः कार्यत्वं साधयित्वा, जगत् स्वोपादानोपकरणसम्प्रदानप्रयोजनाभिज्ञपुरुषकर्तृकम्, कार्यत्वात्, घटवदित्यनुमानेन जीवात्मविलक्षणः सकलजगत्कर्ता परमेश्वरोऽनुमेयः। सोऽनुमातुं न शक्यते। जगद् न कार्यम् । अशक्यक्रियत्वादशक्योपादानविज्ञानत्वाच्च, आकाशवदिति साधनाभ्यां सावयवत्वस्य सत्प्रतिपक्षत्वेन कार्यत्वस्य विप्रतिपन्नत्वेन साध्यसमत्वात् । एवं क्षित्यादिवायुपर्यन्तानि अकार्याणि । महाभूतशब्दवाच्यत्वात् । आकाशवदित्यस्यापि प्रतिपक्षत्वं बोध्यम् । नचाकाशे निरवयवत्वस्य साधकतर्कस्य सत्त्वाद् अस्त्वाकाशस्य तथात्वम्, न तु जगतः, तदभावादिति वाच्यम् । सावयवानामपि महामहीधराणां कार्यत्वादर्शनात् । किञ्च । कार्यत्वेन कर्तृजन्यत्वमप्यनुमातुमशक्यम् । तस्याङ्कुरादिषु साधारणत्वात् । नचाङ्कुरादौ साध्यसन्देहस्यानन्याहितत्वेन तस्य पक्षसमत्वमिति वाच्यम् । शरीरजन्यत्वस्योपाधेः शरीराजन्यत्वस्य प्रतिपक्षस्य च विद्यमानत्वेनान्याहितत्वात् । किञ्च । क्षित्यादिकं नैककर्तृकम्, विलक्षणत्वे सत्यनेक-

कार्यत्वात्, घटपटस्तम्भादिवदिति । नैककर्तृकं, विचित्राद्भुतसन्निवेशत्वात् । महानौकाभवनादिवदिति सत्प्रतिपक्षत्वेन तस्यैकेश्वरासाधकत्वात् । एवमन्यदपि भाष्यविभागाद् दूषणान्तरं बोध्यम् । यदपि श्रीभागवते । अत्र 'मां मार्गयन्त्यद्धा युक्ता हेतुभिरीश्वरम् । गृह्यमाणगुणैर्लिङ्गैरग्राह्यमनुमानत' इत्यत्रानुमानतो मार्गणप्रकार उक्तः,सोऽपि दर्शनसामयिक इति नात्र तद्विरोधः । एवं स्मृतियोगिप्रत्यक्षयोरप्यविरुद्धयोः सन्देहवारकत्वमेव, न तु प्रमितिजनकत्वम् । अन्यथा 'तं त्वौपनिषदं पुरुषं पृच्छामी'ति श्रुतिस्थमौपनिषदपदं कुप्येत । इतः पूर्वम्, 'अगृह्यो न हि गृह्यत' इत्यत्र केवलेन्द्रियाग्राह्यत्वे विवक्षिते तद्वैयर्थ्यस्य दुर्वारत्वात् । नच 'सर्वे वेदा यत् पदमामनन्ति,' 'वेदैश्च सर्वैरहमेव वेद्य' इति श्रुतिस्मृतिभ्यां सर्ववेदवेद्यत्वकथनादुपनिषन्मूलप्रमाणकत्वं वा उपनिषन्महातात्पर्यविषयत्वं वा तदर्थ इति न तद्वैयर्थ्यमिति वाच्यम् । एवमपि पूर्वकाण्डवेद्यत्वमात्रमधिकमायाति, नतु लौकिकप्रमाणान्तरवेद्यत्वमित्येवमेवाङ्गीकार्यत्वात् । अन्यथा यस्य कस्यापि प्रमाणस्य प्राक् प्रवृत्तौ वेदानामधिगतार्थगन्तृत्वेन प्रामाण्यभङ्गप्रसङ्गात् । नच प्रमाकरणत्वमेव प्रामाण्यमित्यदोष इति वाच्यम् । तदापि गुणयोगाय करणशुद्ध्यर्थं साधनबोधकश्रुतेरेवाश्रयणीयत्वेन प्रामाण्यस्य तत्रैव पर्यवसानात् । अत एव 'नच वेदादृते किञ्चिच्छास्त्रं ब्रह्माभिधायक' मिति कौर्मे, 'विदूरकाष्ठाय मुहुः कुयोगिना' मिति श्रीभागवते चोक्तम् । तस्माद् ब्रह्मणः श्रुत्येकगम्यत्वमेवेति सिद्धम् ।

तथा सत्येवमत्राधिकरणे सन्देहः । 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति स्वरूपलक्षणं श्रुतावुक्तम्, तथा 'नित्यशुद्धबुद्धमुक्तस्वभाव' मिति च । तत्र कर्तृत्वादिप्रापञ्चिकधर्मराहित्यं प्रतीयते । 'यतो वा इमानि भूतानि जायन्ते, येन जातानि जीवन्ति, यत् प्रयन्त्यभिसंविशन्ति, तद् विजिज्ञासस्व, तद् ब्रह्मे'ति । इदं कार्यलक्षणम् । अत्र च जगज्जन्मादिकर्तृत्वं प्रतीयते । तत्र सन्देहः । किं ब्रह्म कर्तृ ? आहोस्विदकर्तृ ? किं तावत् प्राप्तम् । अकर्त्रिति । तथाहि । 'ब्रह्मविदाप्नोति पर' मिति प्रधानवाक्यम्, फलसम्बन्धात् । जैमिनिना 'कर्म फलार्थत्वा'दिति कथनेन साधने फलशेषत्वबोधनात् । 'सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमन्, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिते'ति व्याख्यानभूतचापि फलार्थे ब्रह्मज्ञानस्योक्तत्वाच्च । कर्तृत्वं तु परविवरणतया उक्तम् । परं किमित्युक्ते, यः सर्वान्तर आनन्दः । कथं तस्य सर्वान्तरत्वमित्याकांक्षायां तत्परिचायनाय भूतभौतिकसृष्टिमुक्त्वा गौणान्तर्यं परिहृतम्, गौणोपासनाफलं च प्रधानशेषतयोक्तम् । स च सर्वान्तरः परो ज्ञेयाद् ब्रह्मणो भिन्नः । तस्य सत्यज्ञानात्मकत्वाद् अनन्तत्वात् । एतस्य कर्मादिफलरूपानन्दात्मकत्वात्, सर्वान्तरत्वेन परिच्छिन्नत्वाच्च । ब्रह्मपदप्रयोगस्य साधारण्येऽपि स्वरूपभेदाच्छक्यतावच्छेदकभेदाच्चोभयोर्भेदः । आद्ये बृहत्स्वरूपं व्यापकत्वं शक्यतावच्छेदकम् । द्वितीये तु सर्वान्तरत्वेन बृंहणत्वरूपं पोषकत्वमिति । एवं सिद्ध उभयोर्भेदेऽन्यगतकर्तृत्वारोपोऽपि सम्भवति । ततश्च 'भृगुर्वै

वारुणि' रित्युपाख्याने गौणमेव कर्तृत्वमनूद्यते। फलाश्रवणात् । तस्मादकर्तृ ब्रह्मेति पूर्वः पक्षः।

सिद्धान्तस्तु, कर्तृ ब्रह्म, वेदेन ब्रह्मशब्दोक्तिपूर्वकं निरङ्कुशस्य कर्तृत्वस्य तत्र बोधितत्वात् । वेदस्य परमाप्तत्वेनाक्षरमात्रेऽपि मिथ्यावादस्य वक्तुमनुचितत्वात् । अन्यथैकत्र तथात्वे ज्ञाते, अन्यत्रापि तथा शङ्कया सर्वत्रैवानाश्वासप्रसङ्गेन सर्वसन्मार्गविप्लवापातात् । नच कर्तृत्वाङ्गीकारे स्वरूपलक्षणविरोधः शङ्क्यः । सत्यत्वादिधर्मवत् कर्तृत्वस्यापि वेदेनैव बोधितत्वात् । अचिन्त्यैश्वर्यवत्त्वेन तस्योपपद्यमानत्वाच्च । अत एव 'यतो वे'ति श्रुता 'विमानि भूतानि' इत्याकाशादीन्यन्तर्भाव्य पूर्वप्रपाठकोक्तं दृढीकृतम्। सूत्रकृता चैतदभिप्रायेणैवास्येति पदमुक्तम् । नचाकाशस्थले गौणीति युक्तम् । संभूत इति सकृत् प्रयुक्त एकस्मिन्नेव पदे गौणमुख्यवृत्त्यङ्गीकारे वाक्यभेदप्रसङ्गात्, कल्पनावैरूप्यप्रसङ्गाच्च । नच सर्वथा निर्धर्मकत्वं ब्रह्मणः शक्यवचनम् । सत्यज्ञानादिपदानां सामानाधिकरण्यभङ्गप्रसङ्गात् । धर्मभेदाभावे सामानाधिकरण्यानुपपत्तेः । नचासत्यजडसान्तव्यावृत्तत्वेनैक एवार्थस्तैरुच्यते इति वाच्यम् । व्यर्थं पौनरुक्त्यापत्तेः । तत्तद्भेदधर्मकत्वसिद्ध्या घट्टकुट्यां प्रभाताच्च । नचास्य कर्तृत्वस्य संसारिधर्मत्वं शङ्क्यम् । अलौकिकत्वात् । तस्य च लोकविलक्षणत्वात् । नच लक्षणद्वयस्यैकपरत्वे सर्वासु श्रुतिष्वेकमेव ब्रह्म निरूप्यत इति सिद्धम्, तथा सति अस्थूलादिवाक्येषु यावद्धर्मनिषेधान्निर्धर्मकत्वस्य बलादापत्तिरिति वाच्यम् । तत्र लौकिकधर्माणामेव निषेधदर्शनेन श्रौतधर्माणां निषेधानर्हत्वात्तदनापत्तेः । सत्यत्वादीनामपि लौकिकत्वादरणेन सर्वनिषेधाङ्गीकारे तु स्वरूपलक्षणस्याप्यबोधकत्वाद् ब्रह्मज्ञानस्याभावेनैतस्याः श्रुतेर्वैयर्थ्यस्यैवापातात्। यदि च प्रपञ्चस्य व्यावहारिकत्वान्नास्त्येव लोके सत्यत्वम्, किन्तु कारणगतमेव तत् प्रतीयत इत्युपेयते । तदा कर्तृत्वमपि तथाभ्युपेयताम् । ततश्च 'कर्ता कारयिता हरि' रिति कल्पस्मृतिरपि स्वीकृता भवेत् । नचागत्या सत्यत्वादिकं तथास्तु, न तु कर्तृत्वमपि, आरोपन्यायेन तस्य ब्रह्मणि वक्तुं शक्यत्वादिति वाच्यम् । तथा सत्यन्यस्य स्यात् । तत्रान्यः को वेति विचारणीयम्। यदि कर्मादिफलभूत आनन्द एव परशब्दे प्राप्यत्वेनोक्तोऽन्यत्वेन विभाव्यते, तदा त्वसङ्गतम्। तस्य जन्यत्वे निरङ्कुशस्य कर्तृत्वस्य तत्र वक्तुमशक्यत्वात्। अजन्यत्वे ब्रह्मान्तरापातेन 'एकमेवाद्वितीय' मित्यादिश्रुतिविरोधात्। तस्य प्रकृतिरूपत्वे परत्वविरोधात्। ब्रह्मज्ञानप्राप्यत्वोक्तिविरोधाच्च। तस्याः परार्थत्वेनैव सांख्यैरुपगतत्वेन तस्याः परत्वाभावाच्च । तत्प्रासेनेश्वरत्वेन तैरुपगततया तस्या अमोक्षत्वापत्तेश्च । तस्या जडत्वेन विवक्षितकर्तृत्वस्याशक्यवचनत्वाच्च । नापि जीवोऽन्यत्वेनात्र वक्तुं शक्यः । अस्वतन्त्रत्वात् । अत एव न बहवोपि, ऐकमत्यासंभवाच्च । नापि तपोयोगादिबलोपपन्नो हिरण्यगर्भादिः । प्राकृतशरीरविशिष्टस्य तस्यापि जन्यत्वात् । अशरीरत्वे कर्तृत्वस्यैवाशक्यवचनत्वात् । अतो 'विश्वतश्चक्षु' रित्यादिश्रु-

त्युक्तशरीरं ब्रह्मैव श्रुत्युक्तं कर्तृ । तद्गतमेव कर्तृत्वं भोक्तृत्वं च प्रपञ्चे भासत इति मन्तव्यम् । न वा काचिच्छ्रुतिः कर्तृत्वं निषेधति । विरोधभानात् कल्प्या तु लौकिकपरा । सांख्योक्तानां कर्तृदोषाणामपि न संसर्गः । नाप्यनुमानेन प्रदर्शितानामपि दोषाणाम् । तस्मादचिन्त्यैश्वर्यवत्त्वेन श्रुत्युक्तात् कारणत्वाद् ब्रह्म कर्तृ इति सिद्धम् ॥२॥

इति द्वितीयं जन्माद्यधिकरणम् ॥

## तत्तु समन्वयात् ॥ ३ ॥ ( १· १· ३· )

ननु कार्यलक्षणबोधिकायां 'यतो वा इमानी'ति श्रुतौ पञ्चमी श्रूयते । पञ्चम्यास्तसिलिति । 'आत्मन आकाशः संभूत' इत्यत्रापि आत्मन इति पञ्चमी । सा च 'विभाषागुणेऽस्त्रिया'मिति सूत्रे अकारप्रश्लेषेण अगुणादपि हेतोरङ्गीकृता । यथा धूमाद्वह्निमानित्यादिषु । एवमत्रापि ब्रह्मणो निमित्तत्वे सन्देहाभावात् तावन्मात्रमङ्गीकार्यम् । तच्च तटस्थत्वेपि सम्भवतीति तावन्मात्रमङ्गीकार्यम् ।

उपादानत्वे कर्तृत्वे च सन्देहः । तद्वाचकपदाश्रवणात् । नच तदुभयं कल्पयितुं शक्यम् । प्रमाणाभावात् । समवायित्वे तु सुतरां सन्देहः । अग्रे समवायस्य दूष्यत्वात् । अतस्तटस्थकारणत्वमेव युक्तम् । तावतैव श्रुत्युपपत्तेः । कल्पनागौरवाच्चेति प्राप्तेऽभिधीयते । तत्तु समन्वयादिति । तुः पूर्वपक्षनिरासे । निमित्तत्वमात्रस्य श्रुतिसिद्धत्वमङ्गीकृत्य ब्रह्मण उपादानत्वे कर्तृत्वे च न सन्देग्धव्यमित्येतत् तुशब्द आह । तत् समवायि कारणं जगतो ब्रह्मैव । कुतः ? समन्वयात् । अस्तिभातिप्रियत्वात्मकेनानागन्तुकानारोपितरूपेण सर्वत्रानुवृत्तत्वात् । प्रापञ्चिकेषु सर्वेष्वेवार्थेषु घटः सन् पटः सन्नित्येवं सर्वत्रास्तित्वानुवृत्तेर्दर्शनाद्भातिप्रियत्वयोश्चानुवृत्तेरुपपाद्यमानत्वात्तथेत्यर्थः । नच 'त्रयं वा इदं नाम रूपं कर्मे'ति श्रुतौ सर्वत्र नामाद्यनुवृत्तेरुक्तत्वाल्लोके प्रतिनियतरूपेण तेषामनुवृत्त्यभावेऽपि नामत्वादिना तथा दर्शनाच्चानुवृत्तेर्न समवायितागमकमिति वाच्यम् । तेषामेव कार्यस्वरूपत्वात् । 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति श्रुतौ नाम्नां रूपेषु नियमने कृत एव जगतः कार्यत्वस्य प्रतीतेस्तेषां तथात्वनिश्चयात् । एवं निश्चिते तेषां पाश्चात्यत्वे तदनुवृत्तेरागन्तुकत्वेन समन्वयरूपत्वाभावात् । नच सत्त्वरजस्तमसां कार्यमात्रेऽनुवृत्तिदर्शनात् प्रकृतिसमन्वयस्यैव सिद्धत्वेन अस्तित्वादिसमन्वयस्य न ब्रह्ममात्रसमवायितागमकत्वमिति शङ्क्यम् । सिद्धान्ते प्रकृतेरपि ब्रह्मांशत्वेन तदन्वयस्याबाधकत्वात् । नचात्र मानाभावः । 'प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः । सतोऽभिव्यञ्जकः कालो ब्रह्मैतत्त्रितयं त्वहम् । तन्मायाफलरूपेण केवलं निर्विकल्पितम् । वाङ्मनोगोचरातीतं द्विधा समभवद् बृहत् । तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका । ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते' इति चैकादशे भगवतैवांशत्वबोधनात् । नापि प्रकृत्यन्वये मानाभावः शङ्क्यः । प्रीत्यप्रीतिविषादात्मकानां प्रकृतिस्वरूपभूतानां गुणाना-

मनुवृत्तेरनुमानादिसिद्धत्वात् । महदादि कार्यम्, सुखदुःखमोहगुणकद्रव्यजन्यम् । कार्यत्वे सति सुखदुःखमोहगुणकद्रव्यत्वात् । भर्तृसपत्नीपुरुषान्तरादिसुखदुःखमोहजनकस्त्रीवसनादिवदित्यनुमानेन सिद्धत्वात् । नच सुखादीनामान्तरत्वेनानुभवात् स्त्र्यादीनां सुखादिगुणकत्वे मानाभावः शङ्क्यः । स्त्रीचन्दनवसनादिजन्यस्य सुखस्य तत्तदवयवेषु बहिरेवानुभवात् । अन्यथा 'देहे मे सुखं शिरसि मे वेदना' इत्यनुभवापलापप्रसङ्गात् । तथाच प्रयोगः । सुखादयो न साक्षादात्मविकाराः । बाह्यत्वे सत्यात्मनि प्रतीयमानत्वात् । गौरत्वादिवदिति । नचैवं सति स्त्र्यादीनां सुखादिजनकत्वमेव, न तु तद्गुणकत्वमिति शङ्क्यम् । विमताः सुखादिगुणकाः । सुखादिजनकत्वात् । प्रकाशशैत्यादिजनकवह्निचन्दनादिवदित्यनुमानसिद्धत्वात् । एवं तेषां तद्गुणकत्वे सिद्धे तेषां द्रव्याणां तद्गुणात्मकत्वमप्यनुमेयम् । विमताः सुखाद्यात्मकाः । सुखाद्यविनाभूतत्वात् । तन्मात्राविनाभूतमहाभूतवत् । तथा, सुखादयो द्रव्यसूक्ष्मावस्थारूपाः । तदविनाभूतत्वे सति तज्जनकत्वात् । महाभूताविनाभूततज्जनकतन्मात्रवदिति । नच प्रथमक्षणे द्रव्यं यावद्गुणशून्यमेवेति वाच्यम् । श्रुतिस्मृतिप्रत्यक्षबाधितत्वेन अभ्युपगमैकशरणत्वात् । अपाकजस्य रूपादेरुत्पत्तिदशायामप्यनुभवादिति । एवं सुखादावपि बोद्धव्यम् । पुत्राद्युत्पत्तिकाल एव पुरुषभेदेन सुखाद्युत्पादनदर्शनेन तस्य बालादेस्तदानीमपि सुखादिगुणकत्वनिश्चयेन तदविनाभावनिश्चयादिति । 'तमो वा इदमेकमेवाग्र आसीत्, तत् परे स्यात् । तत्परेणेरितं विषमत्वं प्रयाती'त्यादिमैत्रायणीये, तथा श्वेताश्वतरादौ च श्रावणात् । पुराणेषु मन्वादौ च तथा स्मरणाच्च । तस्मात् प्रकृतेरन्वयो निःसन्दिग्धः । नचैवं सति तेनैव रूपेणान्वयोऽस्तु, किमस्तिभातिप्रियत्वाग्रहेणेति वाच्यम् । प्रकृतिरपि जन्यत इति तद्रूपस्यापि आगन्तुकत्वात् । पुरुषादौ तद्रूपत्वानुवृत्त्यभावाच्च । नच भातिप्रियत्वयोरननुवृत्तिः शङ्क्या । पदार्थमात्रस्य ज्ञानेनैव प्रकाशात् । प्रापञ्चिकपदार्थमात्रस्य ज्ञानजनकतया सांख्योक्तप्रकारेणैव ज्ञानाविनाभावज्ञानात्मकत्वयोः सिद्धौ सम्यगनुवृत्तेः सुखेनैव सिद्धेः । प्रियत्वानुवृत्तिस्तु सुखानुवृत्त्यैव साधितचरा । तथापि सात्र नोपयुज्यते । ज्ञानेन तद्बाधात् । निरुपाधिप्रियत्वस्यात्मनि सत्त्वं निश्चाय्य तत 'इदं सर्वं यदयमात्मे'ति श्रावणेन मैत्रेयीब्राह्मणे आत्मरूपतयैव सर्वत्र प्रियत्वस्याभिप्रेतत्वबोधनात् । नच सर्वस्य ब्रह्मोपादेयत्वे परिच्छेदोऽप्रियत्वं च न भासेताम्, कारणधर्माणां कार्ये भानस्यावश्यकत्वादिति वाच्यम् । नियमाभावात् । विभागेनापरिच्छेदतिरोभावस्य साङ्ख्येनाप्यङ्गीकारात् । संयोगेन महत्त्वस्य नैयायिकैरप्यभ्युपगमात् ।

सिद्धान्ते तु 'वाचारम्भणमात्रत्वाद् भेदः केनोपजायते' इति वाक्योक्तरीतिकज्ञानेन विकल्पबुद्धेर्बाधस्य श्वेतकेत्वादिषु सिद्धत्वात् परिच्छेदादिभानस्य भ्रान्ततया ब्रह्मोपादेयत्वभङ्गाभावात् । नच परिच्छेदस्याज्ञानिकत्वे 'सर्वं सर्वमयं सर्वे जीवाः सर्वमयास्तथाप्यल्पा' इति तापनीयस्थाल्पपदस्य व्याकोप इति वाच्यम् । विभुत्वाविरुद्धस्यैव

तस्य तत्र विवक्षितत्वात् । सर्वमयपदोक्त्या तथावगमाद्, युक्तिविरोधस्यात्र भूषणत्वात् । अतो विभुत्वविरुद्धस्यैव तस्याज्ञानिकत्वमिति न कश्चिद् दोषः । नाप्येकत्वविरुद्धस्य नानात्वस्य भानान्न ब्रह्मोपादेयत्वमिति शङ्क्यम् । तस्यापि 'बहु स्या'मिति श्रुत्यैच्छिकत्वश्रावणात् । एवमुच्चनीचत्वादिभानेऽपि बोध्यम् । 'प्रजायेये'ति श्रुत्या तस्याप्यैच्छिकत्वबोधनात् । अत एवैकादशस्कन्धे विंशैकविंशयोर्गुणदोषदर्शनस्य कर्मनियमार्थत्वमुक्तम् । तथा 'किं वर्णितेन बहुना लक्षणं गुणदोषयोः । गुणदोषदृशिर्दोषो गुणस्तूभयवर्जित' इति वाक्य उक्तम् ।

यद्वा । किमनया कुसृष्ट्या । प्रजायेयेतीच्छयैवोच्चनीचभावसिद्धौ जडे सदंशस्य जीवे चिदंशस्यान्तर्यामिण्यानन्दांशस्य प्राकट्येन समन्वयस्य सिद्धत्वेन अंशान्तरस्य क्वचित्क्वचिदप्रतीतौ, गुणभावेन प्रतीतौ वा ब्रह्मणः समवायित्वस्य दुरपोहत्वमेवेति । नचैवं प्रकृतिपरमाण्वादीनां समवायित्वभङ्गप्रसङ्गः । पटादौ सूत्रादीनामिवावान्तरसमवायिताया अङ्गीकारात् । नापि परमाण्वादिभिरेव निर्वाहे किं ब्रह्मणः समवायित्वाङ्गीकारेणेति शङ्क्यम् । एकस्मिन् सर्वानुस्यूते समवायिनि सम्भवति सत्यनेकतत्कल्पनस्य गौरवादिदोषग्रस्तत्वेन न्यायविरुद्धत्वात् । परमाण्वादीनां नैयायिकादिरीत्या सत्ताङ्गीकारस्य श्रुतिप्रत्यक्षविरुद्धत्वात् । अनवस्थापरिहाराय तदुपगमस्यापि कल्पनामात्रशरणत्वात् । आदिसृष्टेर्विभागजन्यत्वस्यैव श्रुत्यादिसिद्धत्वेन द्व्यणुकादिक्रमजन्यत्वस्यैवासङ्गतत्वादिति । नच शुक्तिरजतादौ स्वाप्निकेषु चास्तीत्यादिप्रतीतेस्तेषु सदन्वयो वक्तव्यः, तथा सति तस्यापि ब्रह्मकार्यजगत्तुल्यतया सत्यत्वापत्तिः । सा तु प्रत्यक्षबाधिता । तस्मिन् ब्रह्मकार्यतामपि बाधत इत्यकार्येऽपि सदन्वयात् कथं ब्रह्मणः समवायित्वं तेनावगन्तुं शक्यमिति वाच्यम् । तादृशेषु सत्ताया आरोपितत्वात् तत्रारोपितरूपेण यः सदंशान्वयस्तस्य समन्वयरूपत्वाभावेन समन्वये दोषसंसर्गाभावात् ततः समवायित्वस्य सुखेनावगन्तुं शक्यत्वादिति । अयमेव समन्वयोऽस्मत्प्रस्थाने समवायपदेन परिभाष्यते, न तु वैशेषिकप्रतिपन्न इति बोध्यम् । अन्यैस्तु तादात्म्यपदेन आगन्तुकरूपेण भेदसहिष्णुत्वेऽप्यनागन्तुकरूपेणाभेदादिति । एतस्य सम्बन्धत्वमैच्छिकभेदोत्तरं द्विनिष्ठत्वे विशिष्टबुद्धिनियामकत्वादवगन्तव्यम् । नचात्र विषयवाक्याभावः शङ्क्यः । एतस्य सर्वस्यार्थस्य 'तदात्मानँ स्वयमकुरुते'त्यविकृतस्यैकस्यैव कर्मत्वबोधने स्पष्टीकृतत्वात् ।

नच तत्रात्मपदेन चिदचिद्रूपं ब्रह्मणः शरीरमेव परामृश्यते इति वाच्यम् । विरुद्धधर्माश्रयत्वेनैवोपपत्तौ लक्षणाया अनुचितत्वात् । 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीय'मित्यादिष्वादिसृष्टिप्राक्कालवृत्तान्तबोधकवाक्येषु एवकारादिभिरितरव्यवच्छेदेन तदानीं चिदचिच्छरीरस्य वक्तुमशक्यत्वात् । नच तत्र तैः शरीर्यन्तरं मुख्यान्तरं मिषदन्तरं वा व्यवच्छिद्यते, न तु शरीरममुख्यममिषद्वेति वाच्यम् । एवकारेणैव त्वद्विवक्षितानां व्यवच्छेदसिद्धेरद्वितीयपदवैयर्थ्यापत्तेः । 'आत्मैवेदमग्र आसीत् पुरुषविधः,

सोऽनुवीक्ष्य नान्यदात्मनोऽपश्य'दित्यनुवीक्षायामन्यदर्शननिषेधस्य विरोधापत्तेश्च। नच तत्रान्यपदेन शरीरी वा विशिष्टो वा परामृश्यते, अतो न विरोध इति वाच्यम्। तत्र तादृशपरामर्शस्याशक्यवचनत्वात्। तथाहि। तत्रात्मा स्वशरीरं किं शरीरत्वेन वा विशेषणत्वेन वामिषत्त्वेन वा परामृशति, आत्मत्वेन वा। नाद्यास्त्रयः। तस्य पार्थक्ये सत्यात्मानुवीक्षणस्य भ्रमत्वापत्तेः। स्वान्यादर्शनेनात्मनोऽज्ञत्वापत्तेश्च। न तुरीयः। अभ्रान्तस्य तथा ज्ञानानुपपत्तेः। नच सौबालवाक्ये प्रलयप्रकरणे 'तमः परे देवे एकीभवती'त्येकीभावश्रावणेन स्वशरीरतया विनिर्देशानर्हातिसूक्ष्मदशापत्तौ पार्थक्यस्य शरीरत्वस्य चाभावेन नात्मत्वप्रकारकज्ञानानुपपत्तिरिति वाच्यम्। तस्य शरीरत्वाभावे शरीराविनाभावोपगमबाधप्रसङ्गात्। तादृशज्ञानस्य भ्रमत्वे तस्य वामदेवादीनां ज्ञानिनां च भ्रान्तत्वप्रसङ्गात्। प्रमात्वे त्वात्मत्वेनैव जानातीति तेन प्रमाणज्ञानेनैवाभेदसिद्धौ भेदापादकप्रमाणाभावेन केवलब्रह्माद्वैतवादस्यैव सिद्धेः। सौबालवाक्य एव 'पृथिवी अप्सु लीयत' इत्यारभ्य 'अक्षरं तमसि लीयत' इत्यन्तं लयपदमुक्त्वा, अग्रे 'तमः परे देवे एकीभवती'त्येकीभावश्रावणेन शब्दान्तरात् सिद्धे प्रलययोः स्वरूपभेदे प्रथमस्य नादेयसामुद्रसलिलवदविभागापत्तिरूपताया द्वितीयस्य करकाणां जलैक्यवत् पूर्वभावापत्तिरूपताया एव युक्ततयापि तथैव सिद्धेश्च। नच वैपरीत्येपि प्रलयस्वरूपभेदे सिद्धे नैवमिति वाच्यम्। 'लीङ् श्लेषण' इति धातुपाठोक्तेर्लयस्य श्लेषरूपत्वेनाविभागरूपतायाः पूर्वत्रैव युक्तत्वादिति। विशेषस्तु भाष्यविभागादवधातव्यः। किञ्च, गार्गीब्राह्मणे भूतभव्यस्याकाशे आकाशस्य चाक्षरे ओतप्रोतत्वं श्रावितम्। तच्च समवायित्वस्यैव लिङ्गम्। दशमस्कन्धे 'नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वरे। ओतप्रोतमिदं विश्वं तन्तुष्वङ्ग यथा पट' इत्यादिषु तन्तुपटदृष्टान्तात्। आथर्वणानां गोपथब्राह्मणारम्भे च 'ब्रह्म वा इदमग्र आसीत्, स्वयं चैकमेव, तदैक्षत महद्वै यक्षं तदेकमेवास्मि, हन्ताहं मदेव मन्मात्रं द्वितीयं तदेव निर्मम' इति द्वितीयस्य ब्रह्ममात्रत्वश्रावणपूर्वकं सृष्टिरुक्ता। तृतीयस्कन्धे च 'विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया' इति विश्वस्य ब्रह्मतन्मात्रत्वमुक्तम्। मात्राशब्दस्तन्मात्रशब्दश्च द्रव्यसूक्ष्मे रूढः। 'तस्य मात्रागुणः शब्दो लिङ्गं यद् द्रष्टृदृश्ययोरिति। ससर्ज रूपतन्मात्रं ज्योतिर्लोकस्य लोचन'मिति पौराणिकप्रयोगात्। अतोऽत्रापि केवलस्य ब्रह्मण एव जगत्पूर्वरूपत्वबोधनेन 'आत्मा वा इदमेक एवाग्र आसी'दित्यादिष्वात्मपदस्य केवलात्मवाचकतया विशेषणान्तरसंग्रहाक्षमत्वे शुद्धं ब्रह्मैव समवायि। नच तदानीं निर्विशेषत्वनिराकारत्वाद्यापत्तिः। 'सत्यं ज्ञानमनन्तं ब्रह्मे'ति लक्षणवाक्येन धर्माणां 'कृत्स्नः प्रज्ञानघन' 'आनन्दरूपममृतं यद्विभाती'त्यादिभिः सच्चिदानन्दाकारस्य च बोधनादिति। तस्मादात्मकरणश्रुत्या शुद्धस्य ब्रह्मणः समवायित्वं निष्प्रत्यूहमिति सिद्धम्। नन्वत्रोपादानव्यवहारं परित्यज्य समवायिपदेन कुतो व्यवहार इति चेद्? उच्यते। उपादानव्यवहारस्य परिच्छिन्ने कर्तृक्रियया व्याप्त एव प्रायो दर्शनात्। श्रीभागवते

'गुणव्यतिकराकारो निर्विशेषोऽप्रतीतितः। पुरुषस्तदुपादानमात्मानं लीलयाऽसृज'दिति। 'प्रकृतिर्ह्यस्योपादानमाधारः पुरुषः परः। सतोऽभिव्यञ्जकःकालो ब्रह्मैतत्त्रितयं त्वहम्' इति स्वांशविशेषस्य कालस्य तादृश्याः प्रकृतेश्च पर्यायेणोपादानत्वकथनेनापि तथावसाया- च्चेति न किमप्यनुपपन्नम्।

नन्वभिन्ननिमित्तोपादानवादिभिः सर्वैरेकदेशिभिः शास्त्रयोनित्वसूत्रविषयवाक्येषु 'सदेव सौम्ये'ति छान्दोग्यवाक्यमुपन्यस्य तद्विचारेणैव सर्वविधां कारणतां ब्रह्मणः समर्थयद्भिरस्मिन् सूत्रे समन्वयपदेन वेदान्तवाक्यानां ब्रह्मणि तात्पर्येण सम्यगन्वयो व्याख्यातः। स एव चाग्रे सूत्रेषु दृश्यते। अयमध्यायोऽपि समन्वयाध्याय इति सर्वेषु तत एव प्रसिद्धः। तत् कथं सोऽत्र नाद्रियत इति चेद्? उच्यते। योनिशब्दो निमित्तकारणे रूढः। 'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यहम्'। 'तासां ब्रह्म महद्योनिरहं बीजप्रदः पिता' 'एतौ हि विश्वस्य च बीजयोनी' 'अस्याननं योनिरुदारवाचाम्' इत्यार्षे पौरुषे च ग्रन्थे तत्रैव प्रयोगात्। अतस्तस्मिन् सूत्रे छान्दोग्यादिवाक्यानां विषयत्वेनोपन्यास एवासङ्गतः।

किञ्च। निर्विशेषवादिमते वेदान्तवाक्यसमन्वयो निर्विशेषे वक्तव्यः। स तु सूत्रे न स्फुटो दृश्यते। अत उपपादनेन समर्थनीय इति साध्यसमत्वेन प्रतिवादिनिग्रहासमर्थः। एवं मतान्तरेऽपि सर्वस्य वेदस्य साध्यार्थपरत्वं मन्वानानां मीमांसकानां तदनुसारिणां च निरासाय प्रयुक्त इति स्फुटति। तत्रेदं विवेचनीयम्। किमयं हेतुरविप्रतिपन्नः, सिद्धः, उत साध्यः। तत्र नाद्यः। तथा सति पूर्वपक्षस्यैवानुत्थानप्रसङ्गात्। नेतरः। अस्मिन् दर्शने सन्देहनिराकरणद्वारा तस्यैव प्रतिपाद्यत्वात्। अग्रिमग्रन्थवैयर्थ्यप्रसङ्गाच्च। न तृतीयः। अनुपयोगात्। नापि समन्वयप्रतिज्ञागर्भितहेतुत्वम्। प्रतिज्ञाया बुद्धिस्थत्वेन वादिनिग्रहवेलायां साधनाभावेनासिद्धतयानुपयोगतादवस्थ्यात्। अतस्तथा व्याख्यानस्यायुक्तत्वान्नाद्रियत इति। एवं मतान्तरे बोध्यम्।

ननु ब्रह्मणः साक्षात्समवायित्वमयुक्तम्। विकृतत्वापादकत्वात्। कार्यस्यानर्थरूपत्वेन क्वचित्कुत्सितत्वभानेनासङ्गतत्वाच्च। अतो मायाया वा, शरीरस्य वा, भिन्नाया एव प्रकृतेर्वा, भूतानां वा तथात्वं वक्तव्यम्। ब्रह्मणस्तु ताटस्थ्येन वा, किञ्चिद्द्वारा वा तत्। न वा श्रुतिसमन्वयस्य, कथञ्चिन्निमित्ततामात्रेणापि सिद्धत्वात्। अतोनारम्भणीयमेवैतत् सूत्रं भवन्मते स्यादिति चेत्? न। सूत्रकारस्य सर्वोपनिषत्समाधानार्थं प्रवृत्तत्वेन 'स आत्मानं स्वयमकुरुत' 'इदं सर्वं यदयमात्मे'त्यादीनां पूर्वोक्तानामन्येषां च विचारस्यावश्यकतया सूत्रारम्भस्योचितत्वात्। नच विकृतत्वापत्तिः। अविकृतस्यैव परिणामात्। युक्तिविरोधस्यात्र भूषणताया अग्रिमाधिकरणे वक्तव्यत्वात्। 'तदेजति तन्नैजति, आसीनो दूरं व्रजति, शयानो याति सर्वतः,' 'यः पृथिव्यां तिष्ठन् यः पृथिवीमन्तरः' 'प्रादेशमात्रमभिविमान'मित्याद्यनेकश्रुतिसिद्धस्य विरुद्धधर्माधारत्वस्य युक्ति-

त्वेन स्फुटत्वाच्च । नापि कुत्सितत्वापत्तिः । तस्य भ्रान्तबुद्धिकल्पिततायाः प्रागेव दर्शितत्वात् । नचैवं यथाश्रुतार्थग्रहणे सूत्रप्रवृत्तिवैयर्थ्यमिति शङ्क्यम् । प्रपञ्चवैलक्षण्यप्रतिपादकानामस्थूलादिवाक्यानां दर्शनेनोक्तवाक्यानां तद्विरुद्धत्वे भाते स्वरूपापेक्षया कार्यस्य गौणत्वात् प्रपञ्चरूपत्वप्रतिपादकानां कश्चिद् बाधं कल्पयेदिति तन्निवारणायास्य प्रवृत्तत्वेन सार्थक्यात् । किञ्च । अन्यपदार्थसृष्टौ वैषम्यनैर्घृण्ये स्याताम् । जीवकर्माद्यधीनत्वे 'सापेक्षमसमर्थं भवती'त्यनीशता च भवेत्, तथा सर्वमाहात्म्यनाशश्च स्यादित्येतन्निवारणायापि तथात्वादिति । विशेषो भाष्यविभागे प्रपञ्चित इति उपरम्यते ॥३॥

इति तृतीयं समन्वयाधिकरणम् ॥ ३ ॥

एवं जिज्ञासासूत्रे ब्रह्मजिज्ञासां प्रतिज्ञाय किंलक्षणं ब्रह्मेत्याकांक्षायां जन्मादिसूत्रद्वयेन वेदप्रमाणको जगत्कर्ता तत्समवायी चेत्युक्तम् । तत्र पूर्वसूत्रे जिज्ञासापदमहिम्ना ज्ञानेच्छासारणेन 'अविज्ञातं विजानतां विज्ञातमविजानता'मिति ब्रह्मस्वरूपमर्यादाबोधनाद् ब्रह्मज्ञानोत्तरमपि तस्याः सर्वदैव कर्तव्यता बोधिता । द्वितीयसूत्रे स्वरूपलक्षणसूचनव्यतिरेकेणैव कार्यलक्षणकथनेन तस्य गौणत्ववारणात् तत्करणावश्यकता सूचिता । तृतीयसूत्रे समवायित्वनिर्णायकहेतुकथनेन विरुद्धधर्माधारत्वबोधनाद् विचारकरणावश्यकता च सूचितेति त्रिसूत्र्यां सर्वोऽपि शास्त्रार्थः संग्रहेणोक्तः । स एवाग्रे विस्तरेण वक्ष्यते। तत्र ब्रह्मणि चतुर्धा विचारबोधनाय शास्त्रे चत्वारोऽध्यायाः । तत्र ब्रह्मस्वरूपस्य सर्वोपजीव्यत्वात् प्रथमेऽध्याये स्वरूपविचारः प्रमाणबलेन । ततः स्वरूपे विचारितेऽपि यदि प्रमाणयोरितरेतरविरोधः स्याद्, यदि च मतान्तरनिराकरणं न क्रियते, तदोक्तं वक्ष्यमाणं च न दृढीभवेद्,अतो द्वितीये प्रमाणविरोधपरिहारो मतान्तरनिराकरणं च । ततो दृढीभूते पूर्वोक्ते तदनन्तरं तृतीये साधनानि । ततस्तुरीये फलमिति अध्यायार्थः । तत्र प्रथमाध्याये स्वरूपवाक्यानि विचार्याणि । तानि सन्दिग्धनिःसन्दिग्धभेदेन द्विविधानि । तत्र निर्णयस्य सन्देहनिरासार्थत्वान्निःसन्दिग्धेषु च तदभावात् तन्निर्णयो न वक्तव्य इति 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादीनां स्वरूपवाक्यानां विचारोत्र न क्रियते । सन्दिग्धानि तु चतुर्विधानि । कार्यप्रतिपादकान्यन्तर्यामिप्रतिपादकान्युपास्यरूपप्रतिपादकानि प्रकीर्णकानि चेति यथाक्रमं प्राथमिकेषु चतुर्षु पादेषु विचार्यन्ते । तत्र सच्चिदानन्दरूपेण कारणं निर्दिश्य कार्यप्रतिपादकानि, आकाशवायुतेजोवाचकशब्देन कारणं निर्दिश्य कार्यप्रतिपादकानीत्येवं षड्विधानि कार्यद्वारा स्वरूपबोधनायाद्ये पादे विचार्यन्ते । तेन लोके शक्तिसङ्कोचेनान्यवाचकान्यपि पदानि साहजिकया शक्त्या ब्रह्मैवाभिदधतीति श्रुतेस्तात्पर्यनिर्णयेन फलिष्यति । तत्र विचारस्य शास्त्रार्थत्वाज्जिज्ञासासूत्रे विषयिविषयभावः शास्त्रसङ्गतिः । शास्त्रस्याध्यायेषु, तेषां पादेषु, पादानां स्वावयवेषु च सामान्यविशेषभावः । अधिकरणानां परस्परं भिन्नाः सङ्गतयः । सङ्गतिर्नाम सावधानेन पुंसा प्रयुज्यमानं यद्वाक्यं तत्प्रयोजकत्वेन योऽर्थः स्मृतः, तस्योपेक्षानर्हत्वमेव । उपेक्षानर्हता च

क्वचिद्धेतुतया क्वचिदुपोद्घातेनेत्येवमनियतैर्धर्मैः । वेदान्तदर्शने तदियत्तानियामकस्यानुक्तत्वादिति । अधिकरणं तु विषयसंशयपूर्वपक्षोत्तरसङ्गत्याख्यपञ्चाङ्गघटितं वाक्यम् । तत्रापाततः प्रतीतः सन्दिग्धोऽर्थो विषयः । संशयश्च एकधर्मिकं विरुद्धनानाकोट्यवगाहि ज्ञानम् । पूर्वपक्षः प्रतिवादिमतम् । उत्तरं तन्निरासेन निर्णयः । सङ्गतिस्तूक्तैवेत्येवं बोध्यम् । तत्रोक्तविधेषु वाक्येषु पूर्वसूत्राभ्यां कृते लक्षणविचार एव कार्यस्य सत्ताबोधनात् तत्कारणे सदात्मकत्वमर्थादेव सिद्धम्, अतः 'सदेव सौम्येदमग्र आसी'दिति निरंकुशजगत्कर्तृत्वादिबोधके वाक्ये सत्पदेन ब्रह्मैवोच्यत इति तद्वाक्यं ब्रह्मस्वरूपपरमिति निर्णयः सिद्धः । अतः परं चिद्रूपस्य ज्ञानप्रधानस्य कर्तृत्वादिनिर्णयार्थमीक्षत्यधिकरणमारभ्यते । तत्र षडिन्द्रियाण्यात्मा चेति सप्त ज्ञानजनकानि, अतस्तत्र सप्त सूत्राणि । तेनान्यत्रसप्तद्वारज्ञानवाचका अपि शब्दा वेदान्तवाक्यविशेषेषु परब्रह्मवाचका इति फलिष्यति ।

पूर्वसूत्रे ब्रह्मणो विचार्यत्वं साधितम् । तत्रैवं सन्देहः । 'तमेव भान्तमनुभाति विश्व'मित्यादिश्रुतिषु ब्रह्मणः स्वप्रकाशतया निरूपितत्वेन प्रमाणानामपि तदेवानुग्राहकमिति सर्वप्रमाणानां प्रकाश्यत्वेन तदविषयत्वात्, तत्प्रकाश्यत्वाङ्गीकारे स्वप्रकाशत्वविरोधाद्, विचारस्य च मनसा कर्तव्यतया तद्विषयत्वाभ्युपगमे, 'यतो वाचो निवर्तन्ते' इति श्रुतिविरोधाच्च न विचार्यम्, आहोस्विद् विरोधपरिहारेण विचार्यमिति । तत्र किं तावत् प्राप्तम् । न विचार्यमिति । कुतः ? प्रमाणानि प्राप्यप्रकाशकारीणि सहकारिसापेक्षाणि च । प्राप्तिस्तु सन्निकर्षेण सहकार्यनुग्रहेण च । ब्रह्मणस्तु स्वप्रकाशत्वेनेतराप्रकाश्यत्वान्मनोनिवृत्तिश्रुत्या च सर्वप्रमाणाविषयत्वाद् 'यं न स्पृशन्ति न विदु'रित्यादिस्मृत्या चासन्निकृष्टत्वाद् वाङ्निवृत्तिश्रुत्या सत्यज्ञानादिपदैरप्यवाच्यत्वेन तल्लक्ष्यत्वात्, प्रमाणानां मनोमात्रेन्द्रियप्राणजन्यपुरुषप्रवृत्तिरूपव्यापाराख्यव्यवहार्यत्वेन सर्वव्यवहारातीते ब्रह्मणि तेषां प्रवृत्तिराहित्याच्च । एवं ब्रह्मणोऽविचार्यत्वे सिद्धे तत्प्रमितिफला वेदान्ता अप्यविचार्याः । ननु ब्रह्मणः सर्वव्यवहारातीतत्वमवाङ्मनसगोचरत्वं च वेदान्तेभ्य एवावगम्यत इति ब्रह्मणोऽप्रमेयत्वज्ञानायैव तेषां विचारोऽस्त्विति चेद् विभाव्यते, तदा तु स्वव्यापारेण ब्रह्म समर्पयन्तोऽपि ब्रह्मणोऽवाच्यत्वं वदन्तीति बाधितार्थत्वादेवाविचार्या इति पूर्वपक्षे । उच्यते ।

## ईक्षतेर्नाशब्दम् ॥ ४ ॥

न विद्यते शब्दो बोधकव्यापारवान् पदसमूहो यत्रेत्यशब्दं सर्ववेदान्ताप्रतिपाद्यं ब्रह्म न भवति । कुतः ? ईक्षतेः । 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीय'मित्युपक्रम्य, 'तदैक्षत बहु स्यां प्रजायेयेति, तत् तेजोऽसृजत'ेति । तथान्यत्र, 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत् किञ्चन मिषत्, स ऐक्षत लोकानुत्सृजा इति, स इमाँल्लोकानसृजत'ेति । तथेतरत्र, 'स ईक्षां चक्रे, स प्राणमसृजत'ेति । एवमेतेषु छान्दोग्यैतरेयप्रश्नोपनिषद्वा-

क्येषु 'इदमेवं करिष्यामी'त्यध्यवसायात्मकालोचनरूपा या ईक्षा तत्प्रत्यायकादीक्षतिधातुनिर्देशात् । तथा च ब्रह्मणः सर्वप्रमाणागोचरत्वादेरीक्षायाश्च श्रुतिसिद्धत्वेन समानबलतया चैकतरबाधस्यानुचितत्वाद् विरुद्धधर्माधारत्वस्य 'तदेजति तन्नैजति, अन्यदेव तद्विदितादथो अविदिता'दित्यादिश्रुतिभिर्ब्रह्मणि बोधितत्वेन भूषणत्वात्, स्वात्मानमेवैनं नानाभूतं नानाप्रकारं करिष्यामि, सर्वव्यवहारप्रमाणातीतोऽपि लोकसृष्टिद्वारा व्यवहार्यो भविष्यामीतीक्षाकारसिद्धौ तादृशेक्षयैव विरोधे परिहृते सुखेनैव ब्रह्मणो विचार्यत्वसिद्धिः । वेदान्ताश्च भगवद्वाक्यरूपाः । भगवाँस्तु यथा यथा कृतवाँस्तत्तत्तथोक्तवानिति वेदान्तानामपि बाधितार्थवक्तृत्वाभावेन विचार्यत्वसिद्धिः । एवञ्च यत्र यत्रैवं पूर्वमव्यवहार्यत्वेन प्रतिपाद्यत्वाभावस्तत्र तत्रैवमीक्षितृत्वेन प्रतिपाद्यत्वाभाव इति व्याप्तौ सिद्धायां, ब्रह्म पूर्वं सर्वव्यवहारप्रमाणाद्यतीतमपि पश्चात्तद्विषयम् । एवमीक्षितृत्वात् । यन्नैवं, तन्नैवम् । जीववत् । यद्यपि, ब्रह्म पूर्वोक्तप्रकारकम् । ईक्षितृत्वात् । यदेवं, तदेवम् । जीववदिति केवलान्वयी हेतुर्वक्तुं शक्यः, तथापि जीवस्यैवं प्रकारेण श्रुत्यानुक्तत्वात् प्रकारपूर्वकः केवलव्यतिरेक्येव हेतुर्युक्त इति बोध्यम् । उक्तरूपेक्षाया आकारस्तु ईश्वरेच्छायाः फलबलकल्प्यत्वात् तत्तत्प्रकरणोक्तकार्येभ्य उन्नीयते इति च । तथा सर्वव्यवहारातीतत्वादिकं चिद्रूप एवेति तस्य कारणत्वसमर्थने चिद्रूपस्य तथात्वमित्यपि । नच भवत्वेवमीक्षणेन मूलकारणत्वं चेतनत्वं च । तथा सति, मूलकारणं ब्रह्म चेतनम् । ईक्षितृत्वात् । जीववदित्यनुमानात् प्रकृतिवारणेन साङ्ख्यनिराकृतिरेव सेत्स्यति, न तु व्यवहार्यत्वमपि । अपरिदृश्यमानत्वादश्रुतत्वाच्चेति वाच्यम् । स्वांशभूतजीवोपयोगिप्रजाशब्दवाच्यशरीराणां तत्पुरुषार्थसाधकानां लोकादीनां च सृष्ट्या तत्कर्तृत्वेन तत्तत्फलदातृत्वेन च व्यवहार्यत्वस्य सुखेनैव सिद्धेः । एवं सृष्टिप्रकरणविचारेण व्यवहार्यत्वस्य सिद्धावीक्षाया एव हेतुत्वं सिद्धमिति प्रमाणविषयत्वेऽपि सैव हेतुरिति बोद्धव्यम् । ततश्च प्रमाणबलेनाविषयः, स्वेच्छया विषयश्चेत्यप्युक्तं भवति । ननु सर्वप्रमाणविषयत्वे दूषिते यदिच्छया तथात्वं साध्यते, तन्न सूत्रकृतः संमतम् । यदि तथा स्यात्, तदा नाप्रमेयमीक्षतेरिति सूत्रयेत् । अतोऽत्र नाशब्दमिति साध्यनिर्देशात् प्रधाननिरास एव सूत्राशय इति चेत् ? न । वेदभिन्नानां सर्वेषां प्रमाणानां प्रत्यक्षोपजीवकत्वेन तत्प्रामाण्यस्य च गुणसापेक्षत्वेन गुणस्य च सत्त्वजन्यत्वेन सर्वेषां प्रमाणानां सत्त्वगुणसापेक्षत्वात् सत्त्ववृद्धेश्च वेदोक्तकरणेन भवनात् सर्वेषां तेषां वेदोपजीवकत्वेन अनपेक्षप्रामाण्यस्य गुणातीते भगवन्निःश्वासरूपे वेद एव व्यवस्थितेस्तस्यैव साध्यत्वेन निर्देशस्यौचित्यात् । ननु तर्हि नावेदमित्येवोक्तं स्यादिति चेत् ? न । वेदव्याख्यानानुव्याख्यानानामपि भगवन्निःश्वासत्वश्रावणात् तत्संग्रहार्थं तथानुक्तेः । एवमत्र शुद्धशब्दप्रतिपाद्यत्वसमर्थनेन 'मनसैवानुद्रष्टव्य' इति श्रुत्युक्तं शुद्धमनोदृश्यत्वं, 'कश्चिद् धीरः प्रत्यगात्मानमैक्ष'दित्युक्तं शुद्धचक्षुर्दृश्यत्वमपि समर्थितम् ॥ ४ ॥

एवमनेन सूत्रेण ब्रह्मणो वेदान्तानां च विचार्यत्वे साधिते किञ्चिदाशङ्क्य परिहरति। ननु वेदे 'स आत्मानँ स्वयमकुरुत' इत्यादिषु कर्तृत्वादिकं ब्रह्मणः प्रतीयते। 'निष्कलं निष्क्रियं शान्तं निरवद्यं निरञ्जन'मित्यत्र समवायित्वविरुद्धे निष्कलत्वनिरवद्यत्वे, कर्तृत्वविरुद्धे निष्क्रियत्वशान्तत्वे च प्रतीयेते। तत्र सर्वभवनसमर्थत्वाद्विरुद्धधर्माश्रयत्वेन निर्णयः, अन्यतरबाधेन वेति प्रकारद्वये संभवति सत्यप्यलौकिकापेक्षया लौकिकस्य जघन्यत्वाल्लोकसिद्धकर्तृत्वादेर्बाध एव युक्तः। अन्तरङ्गबहिरङ्गन्यायेनोत्पत्तिशिष्टोत्पन्नशिष्टन्यायेनोपजीव्योपजीवकभावविचारेण बुद्धावारोहात्। ततश्च सत्यस्वरूपादन्यदेव शबलं स्वरूपं कर्तृत्वादिवाक्येषूच्यते। ईक्षत्यादेर्गुणसम्बन्धेनापि शक्यवचनत्वादिति स्वयमेवाशङ्क्य परिहरति सूत्रकारः।

## गौणश्चेत्, न, आत्मशब्दात् ॥ ५ ॥

ईक्षतिना युक्तः परमात्मा, गौणः प्रकृतिगुणभूतं यत् सत्त्वं तत्संबन्धवानिति चेत्, न। तथा वक्तुं न शक्यते। कुतः? आत्मशब्दात्। 'आत्मा वा इदमेक एवाग्र आसी' दित्युपक्रम्येक्षतिश्रावणेनेक्षितर्यात्मशब्दप्रयोगात्। सर्वत्र वेदान्तेषु आत्मशब्दो निर्गुणवाचकत्वेनैव सिद्ध इति गुणसंबन्धस्यात्मपदेन निवारणे जगत्कर्ता गौण इति न वक्तुं शक्य इत्यर्थः। नन्वेवमङ्गीकारे कल्पनाबाहुल्यादन्यतरबाधपक्ष एव युक्त इति चेत्, न। कारकमात्रस्य स्वव्यापारं प्रति स्वातन्त्र्ये सत्यपि यत् कर्तृलक्षणतया स्वातन्त्र्यस्य कीर्तनं तत् कारकान्तरनियामकतयैव, अतो गुणानां कर्तृत्वप्रयोजकत्वाङ्गीकारे तेषामेव सृष्ट्यादिकार्ये स्वातन्त्र्येणात्मनियामकतया सगुणस्य स्वातन्त्र्याभावेनाकर्तृत्वापादकत्वात्। नच गुणानां जडत्वेन चेतनाधीनत्वान्न सगुणस्य स्वातन्त्र्यहानिरिति वाच्यम्। तथा सत्यादिसृष्टेरपि प्राक्काले गुणसत्तासिद्ध्या 'सदेव सौम्ये'त्यादिवाक्यस्य विशेष्यान्वितैवकारविरोधापत्तेः। नच कालवाचकाग्रपदेन तस्याप्युक्तत्वादेवकारो नान्ययोगव्यवच्छेदक इति वाच्यम्। अग्रपदस्य शिष्यबोधनार्थत्वात्, अन्यथा सद् आसीत्, कालोऽप्यासीदिति वाक्यभेदप्रसङ्गात्। आदिसृष्टिवाक्येषु क्वापि कालत्वेन कालसत्ताया अनुक्तत्वात्। अथाधिकरणत्वेन कालस्योक्तत्वात् कालविशिष्टब्रह्मबोधकत्वं वाक्यस्येति विभाव्यते। तदसङ्गतम्। विशिष्टविधानगौरवप्रसङ्गात्। इतरव्यवच्छेदस्य पूर्वाधिकरण एव साधितत्वेन तथा वक्तुमशक्यत्वाच्च। अतः सृष्ट्यनन्तरप्रतीयमानकालोपरञ्जनेनैव तदुक्तिरिति नैवकारस्यान्ययोगव्यवच्छेदकत्वहानिः। किञ्च। अस्तिभातिप्रियत्वादिवद् ब्रह्मगतमेव कर्तृत्वं लोके प्रतीयते। कार्यत्वात्। तेन कर्तृत्वं वस्तुतोऽलौकिकमेवेति न बाधयोग्यम्। तस्माच्छ्रुतिसिद्धं ब्रह्मणः सामर्थ्यमवगम्यैव निर्णयो युक्त इति ॥ ५ ॥

ननु मास्तु गुणसंबन्धाद्गौणत्वम्, तथापि आत्मपदस्य लोके ममात्मा भद्रसेन इत्यादिषु गौण्यापि प्रयोगदर्शनादत्रापि तथास्तु। तथा सति नात्मपदमात्रेण तादृशनिर्णयसिद्धिरिति शङ्कायां हेत्वन्तरमाह तन्निष्ठस्येत्यादि।

## तन्निष्ठस्य मोक्षोपदेशात् ॥ ६ ॥

'असद्वा इदमग्र आसीत्, ततो वै सदजायत, तदात्मानꣳ स्वयमकुरुते' त्युपक्रम्य, पठ्यते 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयनेऽभयं प्रतिष्ठां विन्दते, अथ सोऽभयं गतो भवती'ति । एतदर्थस्तु असदिति लोकविलक्षणमव्याकृतं, यदा यस्मिन् काले, ह्येव निश्चयेनैव, एष साधकः, एतस्मिन् पूर्वोक्तब्रह्मणि, अदृश्ये नामरूपशून्ये, अनात्म्ये आत्मन इदं आत्म्यं शरीरं तद्रहिते, अनिरुक्ते विकारो हि विशेषणवशान्निरुच्यते, न त्वविकार इति विकारशून्यत्वादनिरुक्ते, विदिताविदितात् परत्वेन निर्वक्तुमशक्यत्वाद्वाऽनिरुक्ते, एवंभूते ब्रह्मणि अभयं यथा स्यात् तथा, प्रतिष्ठां 'यत्र नान्यत् पश्यति नान्यच्छृणोति नान्यद्विजानाती'त्येवंरूपां स्थितिं, विन्दते प्राप्नोति, अथ तदनन्तरमेव, स जीवः, अभयं गतो मुक्तिं प्राप्तो भवतीति । अत्र ह्येतस्मिन्नित्यनेन पूर्वोक्तं जगत्कर्तारं परामृश्य, अदृश्यत्वादिधर्मवैशिष्ट्यकथनेन विरुद्धधर्माश्रयत्वं तस्य बोधयित्वा, तादृशे परिनिष्ठितस्य जीवस्य मोक्ष उच्यते । यदि जगत्कर्ता गौणः स्यात्, तन्निष्ठस्य संसार एवोच्येत, न मोक्षः । उपदिश्यते तु मोक्षः, अतः फलबलेन ज्ञायते, स प्रयोगो नौपचारिक इति ॥६॥

## हेयत्वावचनाच्च ॥ ७ ॥

इतोपि हेतोर्निर्गुण एव जगत्कर्ता । सर्वत्र वेदान्तवाक्येषु यत्र मोक्षसाधनान्युपदिश्यन्ते, 'किं प्रजया करिष्यामः,' 'अमृतत्वस्य तु नाशास्ति वित्तेने' त्यादिभिस्तत्र पुत्रादीनां हेयत्वमुच्यते । यदि जगत्कर्ता सगुणः स्यात्, पुत्रादिवद्धेयत्वेनोक्तः स्यात् । उच्यते तूपास्यत्वेन, 'तज्जलानिति, शान्त उपासीते'त्यादिषु । अतो न सगुणः । अत ईक्षत्यादयो न सगुणधर्मा इति सूत्रत्रयोक्तहेतुभिः सिद्धम् । सूत्रत्रयस्यैककार्यकारित्वबोधनाय चकारः । एवं सूत्रचतुष्टयेनेक्षतिहेतुना जगत्कर्तृत्वोपपत्त्या सृष्टिवाक्यानां शुद्धब्रह्मपरत्वमुपपादितम् ॥ ७ ॥

अतः परं प्रलयादिबोधकानां तथात्वं साधयितुं हेत्वन्तराण्युच्यन्ते सूत्रत्रयेण । साध्यं तु नाशब्दमित्येव ।

## स्वाप्ययात् ॥ ८ ॥

ब्रह्म नाशब्दम्, न सर्वव्यवहारातीतम् । कुतः ? स्वाप्ययात् । स्वस्मिन्नात्मन्यप्ययाज्जीवस्य लयात् । अपिपूर्वक एतिर्लयार्थः । एवं हि छान्दोग्ये श्वेतकेतूपाख्याने श्रूयते 'यत्रैतत्पुरुषः स्वपिति नाम, सता सौम्य तदा सम्पन्नो भवति, तस्मादेनं स्वपितीत्याचक्षते, स्वꣳ ह्यपीतो भवती'ति । स्वपितीति न क्रियापदम्, किन्तु जीवस्य नाम । स्वस्मिन्नपीतिर्लयो यस्यासौ स्वपितिः । पृषोदरादित्वादपीतिशब्दस्याकारनाशे ईकारस्य च विकृतौ सत्यां स्वपितिनाम्नः सिद्धिः । वस्तुतस्तु यौगिकत्वेन नामत्वाद्योगरूढ एवायं श्रौतः शब्दः । स्वपितिनामत्वं च न केवले स्वापे, किन्तु सत्सम्पत्तौ । स्वश-

लोपनिषद्यपि 'यो मृत्युमन्तरे संचरन् यस्य मृत्युः शरीर'मिति मृत्युपदेन सर्वानर्थमूलतया तस्यैवोल्लेखाच्च तमसः शरीरतयैव सिद्धत्वेन स्वरूपैक्यस्य गृहीतुमशक्यत्वात्। तस्माच्छरीरस्यैव प्रकृतित्वं सच्छब्दवाच्यत्वं च, न केवलस्येतिचेत्। मैवम्। अद्वितीयपदविरोधापत्तेः। 'एकमेवे'ति कथनोत्तरं मुख्यान्यार्थयोर्वारणार्थमेव तत्प्रयोगात्। अन्यथा तद्वैयर्थ्यात्। नचाद्वितीयपदेन मुख्यत्वमेव विव्रीयत इति वाच्यम्। एकपदेनैव समाभ्यधिकराहित्ये सिद्धे व्याख्यानापेक्षाया एवाभावात्। तेनासिद्धावनेन सुतरां तदसिद्धेश्च। एतेनैव 'नान्यत्किञ्चनमिष'दिति मिषदन्तरनिषेधपरत्वमपि दत्तोत्तरम्। 'साक्षी चेता केवलो निर्गुणश्च।' 'यदा तमस्तन्न दिवा न रात्रिर्न सन्न चासच्छिव एव केवल' इति सर्वभूतवति काले तद्रहिते तमोऽवशेषाङ्किते च काले ब्रह्मण एव केवलत्वश्रावणेन, यदा तमस्तत्स्वेनैकीभूतं तदा केवलो न शरीरीत्यर्थव्यक्तेर्द्वित्वसंख्यापूरक एव निषेधपर्यवसानसिद्धेश्च। नच कालोक्तिविरोधः। तस्याः सृष्ट्युत्तरव्यवहारे सर्वाधारतया प्रतीयमानकालोपरञ्जनेन पूर्ववृत्तान्तबोधनमात्रार्थत्वात्। अन्यथा शिष्यस्य सृष्टिकालस्थत्वेन कालसत्तामवधारयतः पूर्ववृत्तान्तबोधाभावात्। नच तस्याः कालसत्ताबोधकत्वे किं बाधकमिति शङ्क्यम्। एतस्याः सर्वतः पूर्ववृत्तान्तबोधकत्वेन, तत्र च सतोऽन्यस्य व्यवच्छेदे कालावेदकप्रमाणस्यापि व्यवच्छिन्नत्वादत्र कालानुवादस्य वक्तुमशक्यत्वेन स्वतन्त्रतया कालसत्ताबोधने वाक्यभेदप्रसक्तेरेव बाधकत्वात्। नचात्र कालविशिष्टसत्सत्ताबोधकत्वमिति शङ्क्यम्। गौरवप्रसङ्गात्। समानजातीये बृहदारण्यकवाक्ये 'सोऽनुवीक्ष्य नान्यदात्मनोऽपश्य'दित्यनुवीक्षाश्रवणस्य बाधापत्तेश्च। तस्माच्छरीरविशिष्टस्योपादानत्वाङ्गीकारे केवलाद्वितीयश्रुत्योर्विरोधो दुर्वार एव। एवञ्च, 'तमः परे देवे एकीभवती'त्यादौ य एकीभावः, स परस्वरूपाभेद एव, न तु नामरूपविभागानर्हत्वमात्रमित्येव मन्तव्यम्। लयस्य श्लेषरूपत्वेन विभागाभावात्मकत्वे एकीभावस्य भेदाभावात्मकत्व एव पर्यवसानात्। नच शरीरत्वबोधकश्रुतिविरोधः। तस्याः सृष्टिकालीनवृत्तान्तपरत्वात्। अन्तर्यामिब्राह्मणेऽधिदैवादिश्रावणेन तथात्वस्य स्फुटत्वात्। सुबालोपनिषद्यपि, 'अन्तःशरीरे निहितो गुहायामज एको नित्य' इत्युपक्रम्य पृथिव्यादिमृत्य्वन्तानां शरीरत्वकथनेन तत्रापि सृष्टिपूर्वकालस्यालाभात्। प्रलयप्रकरणस्य प्रागेव समाप्तत्वाच्च। तस्मान्नोक्तशरीरविशिष्टस्य प्रकृतित्वं, नापि प्रधानादेर्गर्तपतितमृतसर्पादिवत् स्थितिरिति निश्चयः। एवञ्च, 'प्रकृतिं पुरुषं चैवं विद्ध्यनादी'ति यानि वाक्यानि तानि चतुर्मुखाजन्यायेन जगत्साधारणोत्पत्तिनाशनिषेधपराण्येव। 'तन्मायाफलरूपेण केवलं निर्विकल्पतम्। वाङ्मनोगोचरातीतं द्विधा समभवद् बृहत्। तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका। ज्ञानं त्वन्यतमो भावः पुरुषः सोऽभिधीयते' इत्यादिश्रीभागवतीयभगवद्वाक्येभ्यः। तेन 'यस्तन्तुनाभ' इति वाक्यमपि प्रधानोत्पत्त्यनन्तरकालवृत्तान्तबोधकमेवेत्येव निश्चयः। एषैव परमाण्वादिकारणवादानामपि गति-

बोध्या । 'कालस्वभावो नियतिर्यदृच्छे'ति श्रुत्यैव तेषामनादरबोधनात् । तस्मात् केवलस्यैव ब्रह्मणः समवायित्वमित्येकविज्ञानेन सर्वविज्ञानं नाविनाभावाविभागयोगजधर्मादिमहिम्ना, किन्तूक्तेन दृष्टेनैव द्वारेणेति सिद्धम् ।

प्रकृतमनुसरामः । नन्वस्तुब्रह्मणः समवायित्वं तथापि कार्यकारणयोरभेदो ? भेदो वा ? नाद्यः । त्रैलोक्यव्यवहारसङ्करापत्तेः । नेतरः । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञायाः बाधप्रसङ्गात्, अतो भेदाभेद एव कार्यकारणयोरास्थेय इति मतं निराकर्तुं लोहमणिनखनिकृन्तनदृष्टान्तौ । तत्र हि कार्यस्य कारणावस्थाविशेषरूपत्वं स्फुटम् । यत्र क्वचित् कारणज्ञाने सर्वत्र कारणाभेदज्ञानस्य सौकर्यात् । तत्रापि क्वचिल्लोहमणौ लाक्षासम्बन्धसत्त्वान्न सम्यग्ज्ञानं स्यादतो नखनिकृन्तनग्रहणम् । एवं सति यत्र क्वचिद् भगवान् ज्ञातः सर्वत्र ज्ञातो भवेत्, सर्वं च भगवदभिन्नत्वेन ज्ञातं भवेदिति सौकर्यम् । अत्र च सामान्यलक्षणप्रत्यासत्तिर्न विवक्षितेति ज्ञापनाय 'वाचारम्भणं विकारो नामधेय'मिति । तत्रायमर्थः । यो विकारः पृथुबुध्नोदरादिः स वाचारम्भणं वाचिकक्रियात्मको, न तु कारणाद् व्यक्तिभेदापादकः । यथा सुप्त उत्थित उपविष्टे च पुरुषेऽवयवविन्यासभेदोऽतो नामधेयं, नैमित्तिकक्रियायाः पदार्थस्वरूपभेदानापादकत्वान्न व्यक्तिभेद इत्यतो न सामान्यलक्षणेत्यर्थः । एतदेवैकादशस्कन्धे भगवताप्युक्तम् । 'यथा सुवर्णं सुकृतं पुरस्तात्पश्चाच्च सर्वस्य हिरण्मयस्य । तदेव मध्ये व्यवहार्यमाणं नानापदेशैरहमस्य तद्वत् । न यत् पुरस्तादुत यन्न पश्चान्मध्येऽपि तन्न व्यपदेशमात्रम् । भूतं प्रसिद्धं च परेण यद्यत्तदेव तत् स्यादिति मे मनीषे'ति । यत्परेण भूतं यच्च परेण प्रसिद्धं तत्तदेव स्यादित्यर्थः । अंशे कार्यत्वाभावात् प्रसिद्धमिति पृथग्व्यपदेशः । अष्टमस्कन्धे अमृतमन्थने ब्रह्मस्तुतौ च । 'त्वय्यग्र आसीत्त्वयि मध्य आसीत्त्वय्यन्त आसीदिदमात्मतन्त्रे । त्वमादिरन्तो जगतोऽस्य मध्यं घटस्य मृत्स्नेव परः परस्मा'दिति । नचैवं कुत्सितादिभानस्य का गतिरिति शङ्क्यम् । ब्रह्मविद्यायां क्वचिदपि कुत्सितत्वभानाभावात् । दोषदुष्टदृशामेव तद्भानाच्च । प्रसिद्धं चैतद् ऋषभदेवादिषु । किञ्च, लौकिकेऽपि गोमूत्रगोमयादिषु न कुत्सितत्वभानम् । तस्माद् भगवतः समवायित्वमप्रत्यूहम् ।

ननु यदि विकारस्य वाङ्मात्रत्वं तदेतेन वाक्येन विवर्तोपादानत्वं ब्रह्मणोऽङ्गीकृत्य प्रपञ्चस्यालीकत्वमेवाङ्गीकार्यमित्येतन्निराकरणायाह । मृत्तिकेत्येव सत्यमिति । प्रपञ्चस्य ब्रह्मरूपेणैव सत्यत्वं, न जगद्रूपेणाविकाररूपेणान्येन वा केनचिद् भिन्नेन रूपेण । तेषां रूपाणामागन्तुकत्वेन व्यवहारनिर्वाहमात्रार्थत्वात् । तथाच जगतो ब्रह्मत्वेन सत्यत्वान्नालीकत्वमित्यर्थः । ननु यदलीकत्वं श्रुत्यनभिप्रेतम्, तदा 'अपागादग्नेरग्नित्व'मिति न वदेदितिचेत्, न । यदग्न्यादे रोहितादिगुणकं रूपत्रयं तदनागन्तुकरूपविचारे अत्रिवृत्कृतानां तेजोऽबन्नानामेव, न तु त्रिवृत्कृतस्याग्न्यादेः कार्यस्य । त्रिवृत्करणात् प्रागपि तस्य सत्त्वात् । अतोऽग्न्यादेरनागन्तुकरूपवि-

चारे त्रिवृत्करणोत्तरं जातमग्नित्वादिकमनागन्तुकानारोपितरूपेणापागात्, अग्न्यादेः सकाशादपगतम् । यतोऽग्नित्वादिकं वाचारम्भणम् । अवस्थारूपत्वान्नाग्न्यादीनां तेभ्यो भेदकम्, अतस्त्रीणि रूपाणीत्येव सत्यम्, अग्नित्वाद्यपेक्षया अनागन्तुकानारोपितरूपमिति तत्रार्थेनालीकत्वानापादकत्वात् । एतेनापि सामान्यलक्षणा निरारिता । अग्न्यादिविद्युदन्तेषु तेजस्त्वस्य सामान्यधर्मस्य विद्यमानत्वेऽपि तदनादरणात् त्रिवृत्करणस्य च बोधनात्,'त्रीणि रूपाणी'त्येव सत्यमिति सावधारणकथनाच्चेति । इदं च मूलकारणस्यात्यन्तं परोक्षत्वादन्त्यकार्यापेक्षया शिष्यविश्वासायोक्तम् । तच्च मूलकारणे ब्रह्मण्येव पर्यवस्यतीत्यभिप्रायेण । एतदग्रे च यदुपदिष्टं तत् सर्वं मूलकारणस्य कार्यद्वारा परिचायनार्थम् । अतः सर्वं सुस्थम् । नच जगतो ब्रह्मरूपेण सत्यत्वे जगति ब्रह्मधर्मविरुद्धधर्माध्यासो न स्यात्, देहादेरप्यात्मत्वेन सत्यता स्यात्, तथा सति देहात्मबुद्धेर्दोषत्वाभावेन तज्जनकाविद्यानिवर्तकशास्त्रवैयर्थ्यमप्यापद्येतेत्यतो जगन्मिथ्यात्वमेव साधीय इति वाच्यम् । वस्तुविचारेण जगतो ब्रह्मत्वेऽपि इदानीं बहुजन्माभ्यस्तविकारबुद्धेरनिवृत्तत्वात्तस्यां सत्यां या देहात्मबुद्धिः सा देहाभिन्नत्वेनात्मावगाहिनी, न त्वात्माभिन्नत्वेन देहावगाहिनी, आत्मस्वरूपस्याज्ञातत्वादतो दोषरूपैवेति तदपनोदार्थत्वेन शास्त्रसार्थक्यान्न जगन्मिथ्यात्वं युक्तम् । श्रौतदृष्टान्तबलेन तथा निश्चयात् । अतो ब्रह्मणः समवायित्वे दोषगन्धस्याप्यभावाद् ब्रह्मैव समवायिकारणम्, न प्रकृतिरित्यर्थः ॥२३॥

## अभिध्योपदेशाच्च ॥ २४ ॥

ननु दृष्टान्ते मृत्तिकेत्येव सत्यमिति कारणे सत्पदमुक्तम् । अतस्तत्सामर्थ्येन कार्ये मिथ्यात्वमपि प्रमातुं शक्यत इति शङ्कायां प्रपञ्चे विवर्तत्वस्य ब्रह्मणि विवर्तोपादानत्वस्य च निरासाय लिङ्गान्तरमाह । अभिध्येत्यादि । अभिध्यानं अभिध्या । इदमेवं करिष्यामीत्यालोचनं, तस्या उपदेशात् कथनात् । 'सोऽकामयत बहु स्यां प्रजायेयेती'ति स्वस्य बहुरूपाभिध्यानं सृष्ट्यादावुपदिश्यते । तथाच स्वस्य बहुरूपाभिध्यानेन सृष्टं स्वयमेव भवति, न तु स्वविवर्त इत्यर्थः । न चात्र कामनमुच्यते, नाभिध्यानमिति शङ्क्यम् । आप्तकामत्वश्रुतेः कामनाभावेन तस्यात्र वक्तुमशक्यत्वात् । नच योगिकायव्यूहवदपि भवनादभिध्योपपत्तेर्नेयं अभिध्या समवायित्वसाधिकेति वाच्यम् । ब्रह्मणोऽध्यासाभावात् । आत्मनो बहुत्वाभावेन श्रुतौ गौण्यापत्तेश्च । चकारा'दिदं सर्वं यदयमात्मे'ति कार्यस्य ब्रह्मत्वश्रुतिः संगृह्यते । तथाचैताभ्यां जगतो ब्रह्मैव समवायीत्यर्थः ॥२४॥

## साक्षाच्चोभयाम्नानात् ॥ २५ ॥

ननु 'मयाध्यक्षेण प्रकृतिः सूयते सचराचर'मिति गीतास्मृतेः प्रकृतिमातृतया किञ्चिदंशे उपादानत्वमस्त्विति शङ्कायां साक्षाच्छ्रुतिमेव समवायित्वे प्रमाणमाह । साक्षादित्यादि । साक्षाच्छ्रुत्यैव ब्रह्मणः समवायित्वमुच्यते । चकारात् स्मृत्यापि ।

कथमुच्यत इत्यपेक्षायामाह । उभयाम्नानात् । ब्रह्मणः सकाशाद् ब्रह्मण्येव च सृष्टिप्रलययोराम्नानात् । 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते, आकाशं प्रत्यस्तं यन्ति,' 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथे'ति । प्रकर्षेणैकीभावेन लयो यस्मिन्नित्यर्थः । न ह्येतस्मिन् प्रलयबोधके आकाशवाक्ये तस्यानिमित्तत्वं सम्भवति । सुवर्णादिषु तथैव दर्शनात् । अतो लौकिकेन वैदिकेन च न्यायेन साक्षाद् भगवानेव समवायी । अतो मयाध्यक्षेत्यादीनां परम्परासृष्टिविषयत्वेन पाश्चात्यवृत्तान्तबोधकत्वम् । 'हेतुनानेन कौन्तेय जगद्विपरिवर्तते' इत्युत्तरार्धे विपरिवर्तनार्थत्वकथनात् । विपरिवर्तश्चात्र भ्रम एव । 'अवजानन्ति मां मूढा' इत्युत्तरवाक्यस्वारस्यादिति ॥ २५ ॥

## आत्मकृतेः परिणामात् ॥ २६ ॥

ननु, 'स एव सर्वं सृजति स एवावति हन्ति चे'ति कर्तृत्वं प्रतीयते । अत आकाशवाक्यमप्यौपचारिकं भविष्यतीत्याशङ्कायामाह । आत्मकृतेरित्यादि । आम्नानादित्यनुवर्तते । 'स आत्मानꣳ स्वयमकुरुत, तस्मात् तत्सुकृतमुच्यते' इति स्वस्यैव कर्मकर्तृभावस्याम्नानात्, सुकृतत्ववचनेनालौकिकत्वबोधनाच्च सिद्धे समवायित्वे वाक्यांशमादायौपचारिकत्वकथनं न युक्तमित्यर्थः । ननु स्वस्य कर्तृत्वेन सिद्धत्वात् कर्मत्वं कथं बुद्धावारोहेदित्याकाङ्क्षायां युक्तिमाह । परिणामादिति । कार्यकारणभावात् । तथाच सुवर्णादितैजसद्रव्यवदविकृतस्यैव तथात्वाद् वृद्धेश्चालौकिकत्वात् सुवच एवैकस्य कर्मकर्तृभाव इत्यर्थः । अत एव वेदस्तुतौ 'न हि विकृतिं त्यजन्ति कनकस्य तदात्मतया स्वकृतमनुप्रविष्टमिदमात्मतयावसितम्' इत्युक्तम् । नच पूर्वावस्थान्यथाभावरूपस्य बहुभवनात्मकस्य श्रुत्यैव कथनात् कथं ब्रह्मणोऽप्यविकारित्वमिति शङ्क्यम् । दधिदुग्धन्यायेन स्वरूपस्य स्वरूपगुणानां च योऽन्यथाभावस्तस्यैवात्र दोषत्वेन विवक्षितत्वात्तदभावे सुखेनाविकारित्वसिद्धेः । नचात्र मानाभावः । श्रुत्यैव तथोक्तत्वात् । व्यासचरणैरपि 'श्रुतेस्तु शब्दमूलत्वा'दिति वक्ष्यमाणत्वात् । तस्माद् ब्रह्मपरिणामलक्षणं कार्यमिति ब्रह्मैव जगतः समवायिकारणमिति सिद्धम् ॥ २६ ॥

## योनिश्च हि गीयते ॥ २७ ॥

नन्वस्तु जडानां ब्रह्मण एव कारणत्वं, चेतनेषु तु योनिबीजयोः समवायित्वदर्शनाद् भगवतः पुरुषत्वेन योनिरूपा प्रकृतिरपि समवायिकारणमस्तु । शुक्रशोणितसमवेतत्वाच्छरीरस्येत्याशङ्क्य परिहरति । योनिरित्यादि । योनिरपि ब्रह्मैव । चकारेण शाक्तवादो निराक्रियते । योनिरपि, न तु योनिरेवेत्यर्थात् । कुत इतिचेत्, तत्राह । हि गीयत इति । यतो हेतोर्गीयते, श्रुत्यैव । 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय'मिति सृष्टेः पूर्वमेकमेव कारणं प्रतिज्ञातम् । आकाशादेव आनन्दाद्ध्येवेत्यादिभिरवधारणैश्च निर्णीतः । अतोऽनन्यकारणत्वे सिद्धे कथं तत्र स्मृत्युक्ता प्रकृतिः प्रविशेत् । द्वैतापत्तेः ।

किञ्च। 'कर्तारमीशं पुरुषं ब्रह्मयोनिम्। तं भूतयोनिं परिपश्यन्ति धीरा' इति प्रत्यक्षश्रुत्यैव गीयते। गीतासु च 'मम योनिर्महद् ब्रह्म तस्मिन् गर्भं दधाम्यह'मिति 'तासां ब्रह्म महद्योनिरहं बीजप्रदः पिते'ति च। अतोऽक्षरपुरुषोत्तमभावेनैकस्यैवोभयरूपत्वोपपत्तेर्योनिः पुरुषो बीर्यं जीवश्च भगवानिति। इदं सर्वं यदयमात्मेति सिद्धम्। तस्मात् केनाप्यंशेन प्रकृतिप्रवेशो नास्तीत्यशब्दत्वं सांख्यमतस्य सिद्धम्।

([1]माध्वास्तु प्रकृतिश्चेति सूत्रे 'हन्त तमेव पुरुषं सर्वाणि नामान्यभिवदन्ति,' 'यथा नद्यः स्यन्दमानाः समुद्रायणाः समुद्रमभिसंविशन्त्येवमेवैतानि नामानि पुरुषमभिसंविशन्ती'ति श्रुतिम्, अभिध्यासूत्रे च 'मायां तु प्रकृतिं विद्या'दिति, 'महामायेत्यविद्येति नियतिर्मोहिनीति च। प्रकृतिर्वासनेत्येवं तवेच्छाऽनन्त कथ्यत' इति वचनम्, 'सोऽभिध्या स जूतिः स प्रज्ञा स आनन्द' इति श्रुतिम्, 'ध्यायति ध्यानरूपोऽसौ सुखी सुखमतीव च, परस्यैश्वर्ययोगेन विरुद्धार्थतयेष्यत' इति ब्रह्माण्डवाक्यम्, साक्षात्सूत्रे 'वैष स्त्येष पुरुष एष प्रकृतिरेष आत्मैष ब्रह्मैष लोक एष आलोको योऽसौ हरिरादिरनादिरनन्तोऽन्तः परमः पराद्विश्वरूप' इति पैङ्ग्यश्रुतिं चोपन्यस्य भगवतः सर्वविधशब्दवाच्यत्वं च स्थापयित्वा, आत्मकृतिसूत्रे प्रकर्षेण करोतीति प्रकृतिरिति योगात् प्रकृतावनुप्रविश्य तां परिणाम्य तत्परिणामनियामकत्वेन तत्र स्थित्वाऽऽत्मनो बहुधाकरणात् प्रकृतिशब्दवाच्यतां स्थापयित्वा, 'अथ हैष आत्मा प्रकृतिमनुप्रविश्यात्मानं बहुधा चकार, तस्मात् प्रकृतिरित्याचक्षत' इति माल्लवेयश्रुतिम्, 'अविकारोऽपि परमः प्रकृतिं तु विकारिणीम्, अनुप्रविश्य गोविन्दः प्रकृतिश्चाभिधीयते' इति नारदीयवाक्यं च तदुपष्टम्भायोदाहरन्ति। तच्चिन्त्यम्। श्रुतेरप्रसिद्धत्वात्। तादृश्या अपि कथञ्चित् प्रामाण्योपगमेऽप्यस्या आत्मनो बहुधाकरणबोधकतयात्मकृतिबोधकत्वाभावेन विषयतयोपन्यासायोगाच्च। हन्त तमित्यारभ्य, विश्वरूप इत्यन्तासु स्वोपन्यस्तासु श्रुतिषु सर्वशब्दवाच्यत्वस्य सर्वरूपत्वस्य च स्वत एव बोधनेन तासां पूर्वकालीनव्यवस्थाबोधकतायाः, माल्लवेयश्रुतौ चाथशब्देन पाश्चात्यबोधकतायाः स्फुटं भानेन कालभेदकृतविषयभेदस्य स्फुटतयैतदनुरोधेन तदर्थनिर्णयस्याप्ययुक्तत्वाच्च। ध्यायतीति ब्रह्माण्डवाक्ये ऐश्वर्ययोगेन विरुद्धार्थतया सर्वरूपत्वादेरिष्टताया उक्ततया सर्वानुपपत्तिपरिहारसम्भवे प्रकृतिशब्दयोगादरणेन रूढ्युपष्टम्भस्य व्यर्थत्वाच्च।

यत्तु जयतीर्थः ब्रह्मणो जगदुपादानत्वे एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया मृत्पिण्डादिदृष्टान्तोक्तेश्च न प्रमाणत्वम्, तस्या अन्यार्थत्वस्य सूत्रव्याख्याने सम्यग्व्याख्यातत्वादित्याह। तदपि श्रद्धाजाड्यमात्रम्। सूत्रव्याख्यानस्यैवासङ्गततायाः प्रदर्शितत्वादिति। यदपि—ब्रह्मणः परिणामोक्तिरसङ्गतैव। एतदध्यायस्याशेषशास्त्रस्य ब्रह्मणि समन्वयप्रतिपादनाय प्रवृत्तत्वादित्याह। तदप्यसङ्गतम्। अशेषशास्त्रमध्ये 'स आत्मानं

[1] चिन्हान्तर्गतः प्रकाशस्थः। मूलपुस्तकेषु न दृश्यते।

स्वयमकुरुत, सर्वं खल्विदं 'ब्रह्म तज्जलानिति,' 'स आत्मानमेव द्वेधापातयत्, ततः पतिश्च पत्नी चाभवताम्,' 'हंताऽहं मदेव मन्मात्रं सर्वं यस्मिन्नाकाश ओतश्च प्रोतश्चे'त्यादिश्रुतीनां, 'विश्वं वै ब्रह्म तन्मात्रं,' नैतच्चित्रं भगवति ह्यनन्ते जगदीश्वर, ओतप्रोतमिदं यस्मिंस्तन्तुष्वङ्ग यथा पटः, त्वय्यग्र आसीदित्यादिस्मृतीनां च प्रविष्टत्वात् तासां समन्वयस्यावश्यं प्रतिपाद्यत्वात् परिणामं विना च तदसम्भवादिति । यदप्यानुमानिकपादे, प्रकृतेः शब्दप्रतिपाद्यत्वनिराकरणं चेत्, प्रकृतिस्वरूपस्यानिराकृतत्वात् तस्या उपादानतया वर्तमानत्वात् प्रकृतित्वेन ब्रह्मण उपादानत्वस्थापनमसङ्गतमेव । प्रकृतिस्वरूपनिराकरणं चेत्, सूत्रेषु तददर्शनात् तदप्यसङ्गतमिति न ब्रह्मण उपादानत्वे कापि सङ्गतिरित्युक्तम्। तदप्यबुद्ध्यैव । प्रकृतेर्मूलकारणतायाः शब्दप्रतिपाद्यत्वस्य निराकरणं सूत्रेषु सिद्धमिति तस्या अवान्तरोपादानतया विद्यमानत्वेऽपि ब्रह्मणि मूलोपादानत्वाबाधात् । एकादशस्कन्धे 'आसीज्ज्ञानमयो ह्यर्थ एकमेवाविकल्पितम् । यदा विवेकनिपुणा आदौ कृतयुगे युगे । तन्मायाफलरूपेण केवलं निर्विकल्पितम् । वाङ्मनोगोचरातीतं द्विधा समभवद् बृहत्। तयोरेकतरो ह्यर्थः प्रकृतिः सोभयात्मिका' इत्यादिना भगवतैव तथा निर्णीतत्वात्। अतो ब्रह्मण उपादानत्वानङ्गीकरणमबोधाग्रहयोरन्यतरमूलकमेवेति दिक्) ॥ २७ ॥

## एतेन सर्वे व्याख्याता व्याख्याताः ॥ २८ ॥

एतेन ब्रह्मवादस्थापनपूर्वकसांख्यमतनिराकरणेन सर्वे अवैदिका विरुद्धाश्च वादा व्याख्याताः । अनुपयुक्तत्वेन बोधिता इत्यर्थः । द्विरुक्तिरध्यायसमाप्तिबोधनाय । एतदेव बोधसौकर्यार्थमग्रे प्रपञ्चयिष्यते ॥ २८ ॥ ८ ॥

इति श्रीमद्वल्लभाचार्यचरणैकतानश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचितायां ब्रह्मसूत्रवृत्तौ भावप्रकाशिकायां प्रथमाध्यायस्य चतुर्थः पादः ॥ १ ॥ ४ ॥

प्रथमाध्यायः समाप्तः ।

२) ,, છબીલદાસ માણેકલાલ
२) ,, ભાઈદાસ મારફતીઆ
२) ,, જેશીંસનદાસ અમરતલાલ
५) દલાલ અમરતલાલ મીઠાલાલ
२) બેન મણી અમરતલાલ મીઠાલાલના દીકરી
२) શા. નાનાભાઈ જમનાદાસ
११) ,, ત્રીભોવનદાસ દ્વારકાદાસ ડાંગરવાળા
११) અ. સૌ. બેન તનસુખગવરી
१) શા. મગનલાલ હીરાલાલ
१) લીલાવંતી હીરાલાલ
१) શા. ચુનીલાલ હરગોવન
१) ,, મણીલાલ જગમોહનદાસ
१) ,,
१) ,,
१) ,,
१) ,,
१)
१)
१)
१) ,,
१) ,,
१) ,,
१) ,,
१) બે
१) ઠક
१) શા
१) ,,
१) ,,
१) ,,
२) ,,
१) ,, ત્રીભોવન રેવાદાસ તુમડી
२) ,, ગીરધરલાલ જગન્નાથ ઘીવાલા
२) ઘનશ્યામદાસ ગણપતદાસ
२) અમરતલાલ કસનદાસ
२) માણેકલાલ કસનદાસ ચુડગર
२) હરગોવન બહેચરદાસ
२) ભોગીલાલ
१) પ્રાણજીવન હરગોવન
१) ગોરધનદાસ નારાયણદાસ

५) શા. ભકતીદાસ દયાળજી
५) શેઠ છગનલાલ નરસીદાસ
५) શા. રણછોડદાસ જગજીવન સ્ટાંપવેન્ડર
५) સુરજરામ જમીયતરામ માસ્તર
५) મણીલાલ ત્રીકમલાલ વકીલ
२) લાલભાઈ ધરમદાસ
२) કાલીદાસ હરગોવનદાસ તુમડી
५) ઠકર વીશરામ મેઘજી
२) વીજભુખણ ગોકળભાઈ
२) મેહતા છોટાલાલ બહેચરદાસ
१) દેવીદાસ પરભુદાસ
२) ત્રંબકલાલ ગોવરધનદાસ
५) બાબુભાઈ શીવલાલ
...વાળા
१) હીરાલાલ પ્રેમાનંદ ભંડારી
१) નવનીતલાલ ભક્તિદાસ
१) પરસોતમ પ્રાણજીવન
१) ચોકશી છોટાલાલ કૃષ્ણવલ્લભ
१) મફતલાલ મણીલાલ
५) નગીનદાસ નરોતમદાસ
५) પીતાંબરદાસ શંભુલાલ
२) લાલભાઈ કૃષ્ણવલ્લભ
२) નગીનલાલ મથુરાદાસ

૧) દ્વારકાદાસ કેશવલાલ
૫) ગીરધરલાલ જમનાદાસ જંત્રાણીઆ
૨) રૂગનાથદાસ માણુજીવનદાસ ગાંધી
૧) ડાહ્યાભાઇ અમરતલાલ
૨) જેઠીસનદાસ બાપુજી
૨) નગીનલાલ રણછોડદાસ

**વારાહી**

૧) મોતીલાલ હરખજી

**અંકલેશ્વર**

૫) તુળજારામ મૂલચંદ

**નાદોદ**

૧) ત્રીભોવન દલપત

**ચોખડા**

૧) મટુલાલ દ્વારકાદાસ

**કારેલી**

૧) બહેચરદાસ દ્વારકાદાસ

**ઉમરેઠ**

૧) ગોરધન છગનલાલ

**હાલોલ**

૧) મગનલાલ હરગોવન
૧) મોહનલાલ હરગોવન
૧) મગનલાલ મનસુખ
૧) પારેખ મણીલાલ તીકમલાલ
૧) ગોરધન કુબેરજી
૧) નરોતમ દ્વારકાદાસ
૧) લલુભાઇ કેશવલાલ
૧) મોતીલાલ ભાઇદાસ

**બહાદરપુર**

૫) મોદી લલુભાઇ કીલાભાઇ
૫) ચુનીલાલ ગડબડદાસ
૮) કેશવલાલ નરોતમ
૫) શીવલાલ હરગોવન
૧) છગનલાલ નાથાભાઇ
૪) મોહનલાલ છગનલાલ મજમુદાર
૧૦) મગનલાલ શીવલાલ
૧૦) લલુભાઇ હરીલાલ
૫) મોદી મગનલાલ કીલાભાઇ
૫) કરસનદાસ હરીલાલ
૧) પરીખ કેશવલાલ ઇશ્વરદાસ
૧) શેઠ છગનલાલ શીવલાલ
૨) દેશાઇ ભાઇચંદ ગોરધન
૫) મુળજી શીવલાલ
૧) લલ્લુ મુળજી
૨) ગડબડ મુળજી

૨ નાથા બાપુજી
૫)) દેશાઇ લલુ દલપત
૫) નરોતમ દામોદર
૧) કસ્તુરભાઇ ત્રીભોવન
૫) હીંમતલાલ હરગોવન
૨) દેશાઇ ત્રીભોવન સુખલાલ
૧) મોહનભાઇ મોહોલાલ

**પલનવડ**

૧) નાથા માણેકલાલ
૨) મગનલાલ નરોતમ
૧) કેશવલાલ નરોતમ
૧) નારણ નરોતમ

**કોસીંદ્રા**

૫) શીવલાલ નરસીંદાસ
૧) દલસુખ જમનાદાસ
૧) અમથીબેન, **સીનોર**

**કપડવંજ**

૧) બેન રૂખમણી મનસુખ નારણની દીકરી
૧) માણેકલાલ ગોરધન, **ચીખલી**
૧) રતનશી લાધાભાઇ, **અમરેલી**
૧) હરીલાલ રણછોડ, **દાહોદ**
૧૦) ભાઇદાસ હરગોવન, **ઠાસરા**

**સંખેડા**

૫) મનસુખ પીતાંબર
૫) મનસુખ કુબેરદાસ
૧) ગડબડ શીવલાલ

**જેતપુર**

૨) ગડબડ દલપત
૧) મોતીલાલ દલપત
૧) કેશવલાલ મનસુખ
૨) ગોરધન પ્રેમાનંદ
૧) બાઇ જેકોર
૧) છોટાલાલ હીંમતલાલ
૧) લલુ હરગોવન
૧) મગન મુળજી
૧) આદીતબેન, **વડોદરા**

**ડભોઇ**

૧) કાશીબેન
૧) ગોવિંદલાલ દલસુખ
૨) મગનલાલ છગનલાલ, **સાંટેલી**

**આણંદ**

૨૫) રાધાબેન, શા. મોતીલાલ મુળચંદના ધર્મપત્ની

श्रीकृष्णाय नमः ।

# भावप्रकाशिका ।

## ( ब्रह्मसूत्रवृत्तिः । )

### ( द्वितीयोऽध्यायः । )


श्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचिता ।



श्रीसुरतिस्थश्रीमद्गोस्वामिश्रीमन्नलालात्मजश्रीव्रजरत्नलालचरणसंपूर्ण-
साहाय्येन 'भृगुपुरस्थ मूलचन्द्र तुलसीदास तेलीवाला,
बी. ए., एल् एल्. बी., वकील हाइकोर्ट, सुरतिस्थ
धैर्यलाल व्रजदास सांकलीया, बी. ए., एल्
एल्. बी., वकील हाइकोर्ट,' इत्येताभ्यां
संशोध्य गुजराती मुद्रणालये
मुद्रयित्वा प्रकटीकृता ।

श्रीवल्लभाब्दाः ४४५.        संवत् १९८०

मूल्यमर्धमुद्रिका ।

## द्रव्यसाहाय्य।

ભાવપ્રકાશિકાના દ્વિતીયાધ્યાયનું મુદ્રણ સદ્ગત સૂર્યપૂરનિવાસી શેઠ મૂળચંદ્રદાસ પ્રાણજીવનદાસ તથા એમના નાનાભાઈ શેઠ પરમાનંદદાસ પ્રાણજીવનદાસ તથા તેમના નાનાભાઈ શેઠ ચુનીલાલ પ્રાણજીવનદાસના સ્મરણાર્થે તેમના જ્યેષ્ઠ ભ્રાતા ભગવદ્ધર્મ પરાયણ શેઠ ઈચ્છારામ પ્રાણજીવનદાસના દ્રવ્યસહાય્યથી થાય છે. શેઠ ઇચ્છારામ પ્રાણજીવનદાસ કે જેઓના ઉપર લૌકિક આપત્તિઓ અનેક વખતે એકી વખતે આવવા છતાં પણ તેને ન ગણકારતાં એ બધી આપત્તિઓને પણ ભગવલ્લીલારૂપ માની પોતાની વૃત્તિઓને ભગવત્પરાયણ રાખે છે અને તેઓની ભગવદેકતાનતા અતિ પ્રશંસનીય છે. તેમજ તેઓનું સ્વસંપ્રદાય પ્રત્યેનું અભિમાન પણ અતિ શ્લાઘ્ય છે. તેઓને અન્ય પણ અનુસરે એ ઈચ્છવા યોગ્ય છે.

શેઠ ઇચ્છારામ પ્રાણજીવનદાસ.



જન્મ સંવત્ ૧૯૨૪ ભાદ્રપદ વદી ૯. સુરત.

श्रीकृष्णाय नमः।

# भावप्रकाशिका ।

## श्रीमद्भाष्यानुसारिब्रह्मसूत्रवृत्तिः ।

## शास्त्रवित्तमश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रकृता ।



द्वितीयाध्यायस्य प्रथमः पादः ।

**स्मृत्यनवकाशदोषप्रसङ्ग इति चेत्, न, अन्यस्मृत्यनवकाशदोषप्रसङ्गात् ॥ १ ॥ ( २-१-१. )**

प्रथमाध्याये संदिग्धानां वेदान्तवाक्यानां परब्रह्मत्वेन समन्वयः प्रतिपादितः, स तदा दृढीभवति, यदा श्रुतीनां स्मृतीनां चेतरेतरविरोधः परिह्रियत इति तदर्थं द्वितीयाध्याय आरभ्यते। तत्र परानपेक्षस्य प्रामाण्यस्य श्रुतावेव पूर्वतन्त्रे सिद्धत्वाद्विरोधे कासाञ्चित् स्मृतीनां सङ्कोचेन कासाञ्चिद्दूषणेन लोकमात्रसिद्धयुक्तीनां च सर्वथा दूषणेन विरोधपरिहारो, न तु तद्विरोधेन श्रुतीनां सङ्कोचो विप्रतिषेधपरिहारो वा। तुल्यबलानां स्मृतीनां परस्परविरोधे तूभयोरप्यप्रामाण्यमिति प्रकारः। तेन प्रथमपाद आद्यसूत्रत्रये स्मृतीनामनिर्णायकत्वं परस्परविरुद्धत्वादुच्यते। ततो युक्त्या श्रुतिविप्रतिषेधपरिहारः। ततो द्वितीयपादे तासां वेदबाधकत्वाभावेपि स्वतन्त्रतया फलसाधकत्वं भविष्यतीति शङ्कानिरासाय बाह्याबाह्यमतान्येकीकृत्य तन्निराकरणम्। भ्रान्तत्वस्य सर्वासु तौल्यात्। ततोऽग्रिमे पादद्वये वैदिकपदार्थानां क्रमस्वरूपविचारो वेदार्थनिर्णयायैव। अतः सम्पूर्णेनाध्यायेनाविरोध एव प्रतिपाद्यते।

अतः परं सूत्रव्याख्या। तत्र प्रथमतुरीयपादे प्रत्यक्षश्रुतिमूलकत्वाभावेन कपिलस्मृतेरशब्दत्वं यन्निर्णीतम्, तन्न युक्तम्। अष्टकादिस्मृतिवन्नित्यानुमेयवेदस्योच्छन्नप्रच्छन्नविप्रकीर्णशाखानां वा तन्मूलत्वेन वक्तुं शक्यत्वात्। न च द्व्यन्तरितत्वान्नैर्बल्यं शङ्क्यम्, निरवकाशत्वात्। एवमप्यनादरे तदानर्थक्यप्रसङ्गात्। अतो यथा 'वैतानं प्रक्षिपेदप्सु आवसथ्यं चतुष्पथे। पात्राणि तु दहेदग्नौ यजमानो वृथा मृत' इति पतिताग्निहोत्रप्रतिपत्तिबोधिकया निरवकाशस्मृत्या 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्चे'ति सावकाशायाः श्रुतेः सङ्कोचः, तथा कपिलस्मृत्या जगत्कारणत्वबोधिकया प्रत्यक्षश्रुतिरप्यक्षरब्रह्मादिपदानि प्रधानविषयाण्यङ्गीकृत्यात्मपदं वातति व्याप्नोतीत्यात्मेति योगेन

प्रधानपरमङ्गीकृत्येक्षणादींश्चेतनधर्मांश्च पुरुषवैशिष्ट्येन तत्रापात्र प्रधानविषये सङ्कोचनीया, अन्यथा मोक्षातिरिक्तस्य विषयस्यात्राभावादत्रोपयोगानङ्गीकारे कपिलस्मृत्यनवकाशदोषप्रसङ्गस्तद्वैयर्थ्यं चेति चेत्, न । कुतः । अन्यस्मृत्यनवकाशदोषप्रसङ्गात् । यद्यनवकाशदोषेण प्रत्यवस्थीयते, तर्ह्ययं दोषः पातञ्जलाक्षपादकाणभक्षादिष्वपि तुल्य इति ता अप्यादरणीयाः स्युः । एतस्या एवादरे नियामकस्याभावात् । अतः सर्वा एव परिहाप्य प्रत्यक्षश्रुत्यविरुद्धा गीतास्मृतिरेवादरणीया, 'अहं सर्वस्य जगतः प्रभवः प्रलयस्तथे'त्यादि । न च तद्वैयर्थ्यप्रसङ्गः । ये परप्राप्त्यनधिकारिणो मुमुक्षवस्तेषां स्वरूपावस्थानविषये सावकाशत्वात् । अतएव मोक्षधर्मे 'साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा । ज्ञानान्येतानि राजर्षे विद्धि नानामतानि वै' इत्यादिना पञ्च सिद्धान्तांस्तद्वक्तॄंश्चोक्त्वा, 'सर्वेषु च नृपश्रेष्ठ ज्ञानेष्वेतेषु दृश्यते । यथागतं तथाज्ञानं निष्ठा नारायणः प्रभुः । न चैनमेवं जानन्ति तमोभूता विशांपते । तमेव शास्त्रकर्तारः प्रवदन्ति मनीषिणः । निष्ठां नारायणमृषिं नान्योस्तीति वचो मम' इत्युक्तम् । यथागतमिति । परम्पराप्राप्तं श्रुत्यविरुद्धम् । पराशरपुराणे च 'अक्षपादप्रणीते च काणादे साङ्ख्ययोगयोः । त्याज्यः श्रुतिविरुद्धोंशः श्रुत्येकशरणैर्नृभिः' 'जैमिनीये चे'त्युक्तम् । अतः कपिलस्मृतेर्जघन्याधिकारिविषये सङ्कोचसहिष्णुत्वान्निरङ्कुशप्रधानकारणत्वांशे श्रुतिविरोधस्य साधितत्वेनाप्रामाण्याच्च न तस्या अशब्दत्वहानिरिति सिद्धम् ॥ १ ॥

## इतरेषां चानुपलब्धेः ॥ २ ॥

प्रतिबन्द्या निरङ्कुशप्रधानकारणत्वांशे कपिलस्मृतेरप्रामाण्यमुक्त्वा महदाद्यंशेपि तथात्वमाह । इतरेत्यादि । इतरेषां प्रकृतिव्यतिरिक्तानां महदहङ्काराहङ्कारिकतत्त्वान्तररूपवृत्तीनां लोके वेदे चानुपलभ्यमानत्वात्तदंशेपि कपिलस्मृतेरप्रामाण्यम् । अयमर्थः । तैर्हि पञ्चभूतव्यतिरिक्तानि तत्त्वान्यनुमानेन साध्यन्ते, तत्र स्थूलेषु चतुर्षु भूतेषु गन्धादिगुणाविनाभावस्य शब्दे च द्रव्यजन्यत्वस्य प्रत्यक्षसिद्धत्वेन गन्धादिगुणानां पृथिव्यादिस्थूलभूतपूर्ववर्तित्वस्य प्रत्यक्षबाधितत्वात् गन्धादिगुणनाशेपि पृथिव्यादिद्रव्यदर्शनेन व्यतिरेकव्यभिचाराद्गुणातिरिक्तानां मात्राणां लोकाप्रसिद्धत्वात् । निर्विशेषगन्धाद्यङ्गीकारेण मात्रासाधनेपि शब्दे आकाशजन्यत्वस्य प्रत्यक्षसिद्धत्वादाकाशस्य निरवयवत्वेन जन्यताया विप्रतिपन्नत्वाच्च मात्राणां स्थूलभूतकारणत्वेन मात्रात्मकस्वरूपेण चासिद्धौ तत्साधितानामहङ्कारमहत्तत्त्वप्रकृतीनामसिद्धिरेव । एवं वेदेपि । मैत्रायणीयोपनिषदि सृष्टिकथने 'तमो वा इदमग्र आसीदेकं तत्परे स्यात्तत्परेणेरितं विषमत्वं प्रयात्येतद्वै रजसो रूपं तद्रजः खल्वीरितं विषमत्वं प्रयात्येतद्वै सत्त्वस्य रूपं तत्सत्त्वमेवेरितं रसः संप्रास्रवत्तत्सोंशोयं यश्चेतामात्रः प्रतिपुरुष' इत्यादिना प्रकारान्तरमेवोक्त्वा 'इत्यात्मान्तर्बहिश्चे'त्युक्तम्, अतो लोके वेदे च तथानुपलभ्यमानत्वमिति ॥ २ ॥ इति प्रथमं स्मृत्यधिकरणम् ॥ १ ॥

## एतेन योगः प्रत्युक्तः ॥ ३ ॥ ( २-१-२ )

ननु मास्तु साङ्ख्यस्मृतेः शब्दवत्त्वम्, योगस्य तु भविष्यति । श्वेताश्वतरोपनिषदि 'त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा सन्निवेश्ये' त्यादिना योगस्योक्तत्वादिति चेत्, तत्राह । एतेनेत्यादि । इदं चातिदेशसूत्रम् । एतेन साङ्ख्यस्मृतिनिराकरणेन योगस्मृतिरपि निराकृता वेद्या । मनोनिरोधसाधनांशस्यैव तत्राविरुद्धत्वेन पदार्थतत्त्वनिर्धारे साङ्ख्यवत्प्रधानादेस्तदुपादानत्वादेश्चाङ्गीकारात्तदंशे वेदविरुद्धत्वात्सापि तत एव निराकृतेति साङ्ख्यवन्न तस्या अपि पूर्वप्रतिपादितसमन्वयबाधकत्वमित्यर्थः ॥ ३ ॥ इति द्वितीयमेतेन योगः प्रत्युक्त इत्यधिकरणम् ॥ २ ॥

## न विलक्षणत्वादस्य तथात्वं च शब्दात् ॥ ४ ॥ ( २-१-३ )

ननु मास्तु स्मृत्या समन्वयबाधः, तथापि युक्तिश्रुतिविरुद्धो ब्रह्मवाद इत्याशङ्कते । नेत्यादि । न ब्रह्म जगत उपादानम् । कुतः । अस्य विलक्षणत्वात् । यदि हि जगत् ब्रह्मोपादेयं स्यात्, कार्यस्य कारणसजातीयत्वनियमदर्शनाच्चेतनं दोषशून्यं च स्यात्, यतो नैवमतो नैवम् । ननु वैलक्षण्यप्रतीतिर्देहात्मप्रत्ययवद्भ्रम इति चेत्, तत्राह । तथात्वं च शब्दात् । अस्येति पदं देहलीदीपवदुभयत्र संयुज्यते । अस्य जगतो ब्रह्मविलक्षणत्वं च शब्दात् । 'विज्ञानं चाविज्ञानं चे'ति श्रुतिरेव । तथा च यथा श्रुत्या ब्रह्मणः कारणत्वमुच्यते, तथा विलक्षणत्वमप्युच्यते, अतो विप्रतिषेधान्न ब्रह्मण उपादानत्वमित्यर्थः ॥ ४ ॥

## अभिमानिव्यपदेशस्तु विशेषानुगतिभ्याम् ॥ ५ ॥

ननु किं वैलक्षण्यं ब्रह्मजगतोस्तवाभिप्रेतं येन ब्रह्मणो जगत्कारणत्वं वक्षि । न तावद्धर्मवैलक्षण्यमकारणत्वसाधकम्, घटत्वमृत्पिण्डत्वयोर्विलक्षणत्वेपि कार्यकारणभावदर्शनात् । अथ येन धर्मेण कारणभूतं वस्तु वस्त्वन्तराद्व्यावर्तते, तद्धर्माभावेन विलक्षणत्वमिति, तादृशं चात्र चेतनत्वमिति जगति तदभावाद्विलक्षणत्वमिति चेत्तवाभिप्रेतम्, तदा तत्तु नास्ति । 'मृदब्रवीत्', 'आपोब्रुवन्', 'तत्तेज ऐक्षत' इत्यादौ चेतनधर्माणां वदनेक्षणादीनां मृदादिषु श्रावणादित्यत आह । अभिमानीत्यादि । तुशब्द उक्ताशङ्कानिवृत्त्यर्थः । एवमाशङ्का न कार्या । अत्र अभिमानिव्यपदेशः मृदाद्यभिमानिनीनां देवतानामेव वक्तृत्वादिधर्मवत्तया व्यपदेशः । कुतः । विशेषानुगतिभ्याम्, वेद एव 'विज्ञानं चाविज्ञानं चे'ति विभागकथनात् । 'अग्निर्वाग्भूत्वा मुखं प्राविश'दित्यग्न्यादिदेवतानामेव पश्चाद्वागादिभावेन मुखादिषु स्थानेषु गतिकथनाच्च । यदि हि सर्वस्य चेतनत्वं स्यात्, यदि चोक्तवाक्ये देवता अभिप्रेता न स्युः, तदा चेतनाचेतनविभागं न ब्रूयात्, पश्चाद्वागादिभावेनाग्न्यादिदेवतानां गतिं च न ब्रूयात् । 'हन्ताहमिमास्तिस्रो देवता' इति तेजोबन्नानि देवतापदेन न विशिंष्याच्च । तथा च जगतो ब्रह्मविलक्षणत्वेन ब्रह्मोपादेयत्वानुपपत्तेस्त-

कानुगृहीतकपिलस्मृत्यनुसारेण जगतः प्रधानोपादेयत्वमेवादरणीयम्। एवं 'न जायते न म्रियते वे'त्यादौ जीवस्य नित्यत्वेन श्रावणाज्जीवानां ब्रह्मभिन्नत्वमेवादरणीयमिति सूत्रद्वयेनाशङ्क्य परिहरति।

## दृश्यते तु ॥ ६ ॥

तुः पूर्वपक्षनिरासे। दृश्यते। कार्यकारणयोर्वैलक्षण्यं लोके। चेतनात्पुरुषदेहादचेतनानां केशलोमनखानां अचेतनाद्गोमयादेर्वृश्चिकादीनां चेतनानां चोत्पत्तेः। अयमर्थः। विलक्षणत्वेन ब्रह्मणो जगत्कारणत्वं दूषयतो यदि कार्यकारणयोः सर्वांशसालक्षण्यं विवक्षितम्, तदा तु घटमृत्पिण्डादिष्वपि तददर्शनाल्लोकविरोधः। यदि केनचिद्धर्मेण सालक्षण्यम्, तदा तु सत्तया सादृश्यं वर्तत एवेति न पर्यनुयोगस्यावकाशः। यदि च येन धर्मेण कारणं वस्त्वन्तराद्व्यावर्तते तेन धर्मेण, तदा तु लोकदृष्ट्या गोमयवृश्चिकादिदृष्टान्तः। देहत्वगोमयत्वादीनां वस्त्वन्तराद्व्यावर्तकानां धर्माणां केशवृश्चिकादिष्वभावात्। यदि च देहकेशादीनां जडत्वेन सालक्षण्यम्, तदा सत्त्वेन ब्रह्मजगतोस्तदस्त्येवेति त्वद्धेतोः स्वरूपासिद्धत्वम्। परमार्थदृष्ट्या तु ब्रह्मणः सच्चिदानन्दलक्षणकत्वेन सदंशाज्जडानां चिदंशाज्जीवानामानन्दांशाच्चान्तर्यामिणां व्युच्चरणात्तेषु तेषु तत्तदंशसालक्षण्यस्य विद्यमानत्वाद्विलक्षणत्वरूपस्य बाधकहेतोरसिद्धिः, श्रुत्युक्तस्य विभागस्य चोपपत्तिः। उपपन्ने च विभागे कार्याणामेव परस्परं वैलक्षण्यम्, न तु ब्रह्मणः सकाशात्कार्यस्य जगत इत्यभिमानिव्यपदेशोपि न कारणत्वबाधकः। अग्रेवाग्भावोप्यवस्थान्तरं बोधयन् कार्यस्य कारणावस्थारूपत्वान्न कारणताबाधकः। एवं सिद्धे सालक्षण्ये 'न तं विदाथ य इमा जजानान्यद्युष्माकमन्तरभवाती'ति श्रुतिस्वारस्याद्वैलक्षण्यं भ्रमाद्दृश्यते, न त्वस्तीति तृतीयसुबोधिनीस्थं सूत्रव्याख्यानान्तरमप्युपपन्नतरम्॥ ६ ॥ इति तृतीयं न विलक्षणत्वाधिकरणम् ॥३॥

## असद्व्यपदेशादिति चेन्न प्रतिषेधमात्रत्वात् ॥ ७ ॥ (२-१-४)

पुनर्विप्रतिषेधान्तरमाशङ्क्य परिहरति। असदित्यादि। 'असद्वा इदमग्र आसी'दिति श्रुत्युक्तमसत् 'तद्धैक आहुरसदेवेदमग्र आसी'दित्यनेनानूद्य 'कुतस्तु खलु सौम्यैवं स्या'दित्यादिना निषिध्यत इति तस्यालीकात्समाकृष्य ब्रह्मपरत्वं न वक्तुं शक्यम्, ब्रह्मपरत्वे निषेधायोगात्। अतः असदलीकादिकमपि कारणत्वेन श्रुतावस्ति। एवं सत्यसद्वेत्यत्र कारणान्तरकथनेन कुतस्त्वित्यत्र तत्प्रतिषिध्य सतो ब्रह्मणः कारणत्वकथनेन, 'नासदासीन्नो सदासी'दित्यत्र सतोपि प्रतिषेधेन विप्रतिषेधतादवस्थ्यात्स्मार्तं प्रधानमेव कारणत्वेनादरणीयम्। इति चेत्, एवं सूत्रांशेनाशङ्क्य समाधत्ते। नेति। 'तद्धैक आहुरसदेवेदमग्र आसी'दित्यसच्छब्दो न श्रौतासच्छब्दानुवादकः, किन्तु स्मार्तानुवादकः। कुतः। प्रतिषेधमा-

१ असदिति चेदिति पाठः प्रतिभाति।

त्रत्वात् । कुतस्त्विति श्रुतौ असन्निषेधमात्रस्यैव दर्शनात् । यदि ह्यसतोपि कारणताभिप्रेता स्यात्, तदा यथा असन्निषेधेनात्र सतः कारणता बोध्यते, तथा क्वचित्सन्निषिध्यासतोपि कारणत्वं बोध्येत, तत्तु न दृश्यते । नासदासीदित्यत्राप्युभे निषिध्येते, न त्वसतः कारणत्वं बोध्यते । अतस्तत्रापि व्याकृताव्याकृतयोरेव प्रतिषेधः । अतो विप्रतिषेधाभावान्न ब्रह्मणः कारणत्वहानिरित्यर्थः । यद्वा । 'असद्वा इदमग्र आसी'दित्यादौ असच्छब्देन इदं कार्यं उत्पत्तेः पूर्वं असदासीदित्युच्यते, 'सदेव सोम्येद'मित्यत्रोत्पत्तेः सदुच्यत इति विप्रतिषेधान्न श्रौतो ब्रह्मवाद आदरणीयः, किन्तु युक्तिस्मृतिसिद्धोऽसत्कार्यवाद एवादरणीय इति चेत् । न । नास्ति विप्रतिषेधः । कुतः । प्रतिषेधमात्रत्वात् । विप्रतिषेधो हि विरुद्धः प्रतिषेधस्तुल्यबलः स इति यावत् । यदि ह्यसन्निषिध्य सत्प्रतिपादनवत्, सन्निषिध्यासत्प्रतिपादनं स्यात्, स्याद्विप्रतिषेधत्वम्, नेह तथा, किन्तु केवल एवासत्प्रतिषेधः, अतः श्रौतो ब्रह्मवाद आदर्तव्य इति ॥ ७ ॥

## अपीतौ तद्वत्प्रसङ्गादसमञ्जसम् ॥ ८ ॥

पुनः किञ्चिदाशङ्कते । अपीतावित्यादि । अपीतिर्लयः । कार्यस्य जगतः कारणे ब्रह्मणि लये, तद्वत्प्रसङ्गात्, कार्यधर्माणां कारणे संसर्गेण कारणस्य कार्यतौल्यप्रसङ्गादसमञ्जसम्, स्थौल्यसावयवत्वपरिच्छिन्नत्वाशुद्धत्वापादकं ब्रह्मणः कारणत्ववचनमित्यर्थः ॥८॥

## न तु दृष्टान्तभावात् ॥ ९ ॥

उक्तं दोषं परिहरति । नेत्यादि । नास्मद्दर्शने किञ्चिदसामञ्जस्यमस्ति । तुः शङ्कानिरासे । अतः शङ्का न कार्या । उभयत्रापि हेतुः । दृष्टान्तभावादिति । दृष्टान्तस्य विद्यमानत्वात् । घटशरावादीनां मृदि लये परमाणुभावापत्तौ स्थौल्यसावयवत्वाद्यदर्शनान्महापृथिवीभावे च परिच्छिन्नत्वाशुद्धत्वाद्यदर्शनात् । कटककुण्डलादीनां च सुवर्णे लये तददर्शनात् । प्रत्युत तैजसानां भाण्डानां मद्यादिसंसर्गेण दुष्टत्वेऽग्निसम्बन्धात्तस्याकारस्य नाशनेन पुनर्निर्दोषता स्मर्यते । तैजसानां रेतोविण्मूत्रासृक्कुणपादिभिश्चिरमुपहतानामावर्तनमिति । एवं मार्तिकानामपि मृद्भावे । 'वातोद्धूतं रजः शुची'ति । अतो लोकविचारे शास्त्रविचारे चास्माकमेव दृष्टान्ताः सन्ति, न भवताम् ॥ ९ ॥

## स्वपक्षदोषाच्च ॥ १० ॥

प्रतिवादिनो भ्रान्तत्वायाह । स्वपक्षेत्यादि । निर्विशेषात्प्रधानात्सविशेषस्य शब्दादिमतो महदादेरुत्पत्तेः कार्यकारणयोर्विलक्षणत्वम् । कार्यस्योत्पत्तिर्न कारणस्येत्यपि । एवं विलक्षणकार्योत्पत्तावुत्पत्तेः पूर्वं तस्य वैलक्षण्यस्याभावादसत्कार्यवादप्रसङ्गः । सद्भावे च लयेपि कार्यधर्मसम्बन्धात्तद्वत्त्वप्रसङ्गः । किञ्च, सर्वेषामन्तिमकार्यपर्यन्तानां कार्याणां कारणे सत्त्वेन एतदनन्तरमेतदुत्पद्यतामिति क्रमनियामकहेत्वभावेन क्रमनियमाभावः ।

तं विनापि नियमाङ्गीकार आकस्मिकवादप्रसङ्गः । अथ नियामकसत्ताङ्गीक्रियते, तदोत्पत्तिनियामककारणसद्भावे तस्य सर्वसाधारणत्वान्मुक्तानामपि पुनर्बन्धप्रसङ्ग इत्यस्मान्प्रति दत्तानां दोषाणां स्वपक्षेपि सद्भावान्नास्मान् प्रति पर्यनुयोग उचित इत्यर्थः ॥१०॥

## तर्काप्रतिष्ठानादप्यन्यथानुमेयमिति चेदेवमप्यविमोक्षप्रसङ्गः ॥ ११ ॥

सूत्राक्षरैरेव पुनः किञ्चिदाशङ्क्य परिहरति । तर्केत्यादि । स्वोत्प्रेक्षिता युक्तिस्तर्कः । तर्काणामप्रतिष्ठानं तर्काप्रतिष्ठानम्, तच्च स्वतन्त्रैर्वक्तृभिश्चर्चायां तत्तदुक्तानां तर्काणां परस्परमाभासीकरणेनाव्यवस्थानम्, तस्माद्धेतोर्वैदिकेर्थे प्रत्यवस्थानमयुक्तमिति यदि वदथ, तदा अन्यथानुमेयम्, अस्माभिरपि प्रकारान्तरेणानुमेयं येन तर्काप्रतिष्ठादोषो न भवति । न हि सर्वेपि तर्का अप्रतिष्ठिता इति वक्तुं शक्यते, व्यवहारोच्छेदप्रसङ्गात् । अत 'आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना, यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतर' इति स्मृतेर्निरवद्यतर्कस्य प्रतिपत्तव्यत्वात् इति चेत्, अनेन प्रकारेण तर्कप्रतिष्ठानं वदसि चेत्, एवमप्यविमोक्षप्रसङ्गः, अनेन तर्कप्रतिष्ठायामपि, ब्रह्मवादितर्कस्यैव श्रुतिमूलतया निरवद्यत्वात् प्रकृतिवादिन एव तर्कदोषाविमोक्षप्रसङ्गः, श्रुतिविरोधेन तत्तर्कस्य निर्मूलतया वैमत्यस्य विद्यमानत्वादित्यर्थः ॥११॥ इति चतुर्थमसदितिचेदित्यधिकरणम्॥४॥

## एतेन शिष्टापरिग्रहा अपि व्याख्याताः ॥ १२ ॥ (२-१-५)

इदमप्यतिदेशसूत्रम् । एतेन साङ्ख्यमतदूषणेन शिष्टापरिग्रहाः, न परिग्रहो येषां ते अपरिग्रहाः शिष्टैरपरिग्रहाः शिष्टापरिग्रहाः अणुमायाकारणवादास्तेपि व्याख्याताः दूषिता वेद्याः । सत्कार्याद्यादरेण साङ्ख्यमतस्य वैदिकप्रत्यासन्नत्वात्केषाञ्चित् शिष्टानां परिग्रहोस्ति । अणुमायाकारणवादास्तु सर्वथा न शिष्टैः परिगृह्यन्त इति ते तथा । यद्यपि पराशरोपपुराणेशतः श्रुतिविरुद्धत्वं सर्वेषां तुल्यमुक्तम्, तथापि शिष्टापरिग्रहोधिक इत्यनास्थया पश्चात्तेषां दूषणम् ॥ १२ ॥ इति पञ्चममेतेनेत्यधिकरणम् ॥ ५ ॥

## भोक्त्रापत्तेरविभागश्चेत्स्याल्लोकवत् ॥ १३ ॥ (२-१-६)

पूर्वाधिकरणेषु 'दृश्यते त्वि'त्यनेन वैलक्षण्यं 'प्रतिषेधमात्रत्वा'दित्यनेनासत्कारणवादापत्तिं 'दृष्टान्तभावा'दित्यनेनासामञ्जस्यं 'तर्काप्रतिष्ठाना'दित्यनेनान्यानप्युत्प्रेक्षिष्यमाणान् कारणदोषान् परिहृत्य कार्यदोषं परिहर्तुमयमारम्भः । तत्र सूत्राक्षरैरेवाशङ्क्य समाधत्ते । भोक्त्रेत्यादि । 'अशब्दमस्पर्श'मिति 'अस्थूलमनण्वि'त्यादिश्रुतिभिर्निर्विशेषत्वं ब्रह्मण उच्यते । 'यतो वे'त्यादिना च कारणत्वम् । कार्यस्य तत उत्पत्तिस्तत्रैव लयश्च । 'सलिल एको द्रष्टा द्वयो भवती'ति जीवस्यापि तद्भावापत्तिः, 'यथाग्नेः क्षुद्रा' इत्यादिना तत एवोत्पत्तिश्च । एवं सति निर्विशेषे ब्रह्मणि कार्यस्य प्रलयदशायामैक्ये सत्युत्पत्तौ भोक्त्रापत्तेर्भोक्तर्यापत्तिर्भोक्त्रापत्तिस्तस्याः सकाशात् भोक्तृभोग्ययोर्जीवविषययोः संश्ले-

षेणैकीभावात्पुनरुत्पत्तौ भोक्तरि जीवे भोग्यस्रक्चन्दनादिरूपत्वापत्तेर्भोग्येन भोक्तृत्वापत्तेरविभागः लोकसिद्धभोक्तृभोग्यविभागभङ्गः, ततश्च 'ऋतं पिबन्तौ सुकृतस्ये'त्यत्र चेतनस्य भोक्तृत्वं सुकृतस्य भोग्यत्वं च यच्छ्राव्यते, तद्विप्रतिषेध इति चेत्, स्याल्लोकवत् । यथा लोके कटककुण्डलादीनां सुवर्णकारणत्वेन सुवर्णानन्यत्वेपि न कटकस्य कुण्डलत्वम्, न वा कुण्डलस्य कटकत्वम्, एवमत्रापि न भोक्तुर्भोग्यत्वं भोग्यस्य च भोक्तृत्वम्, अतो न श्रुतिविप्रतिषेध इत्यर्थः ॥ १३ ॥ इति षष्ठं भोक्त्रापत्तेरित्यधिकरणम् ॥ ६ ॥

## तदनन्यत्वमारम्भणशब्दादिभ्यः ॥ १४ ॥ ( २-१-७ )

ननु 'उत तमादेशमप्राक्षो येनाश्रुतं श्रुतं भवती'त्यादिप्रतिज्ञायाः 'यथा सोम्यैकेन मृत्पिण्डेने'त्यादिदृष्टान्तस्य च बलेन ब्रह्मणो जगदुपादानत्वं पूर्वं विचारितम्, दृष्टान्तवाक्यशेषे च 'वाचारम्भणं विकारो नामधेयं मृत्तिकेत्येव सत्य'मिति श्रूयते, तत्र च विकारो वाङ्मात्रेणैवारभ्यते, न तु विकारो वस्तुतः कश्चिदस्तीत्यर्थः प्रतिभाति । एवं विकारस्याभावे प्रसक्ते ब्रह्म कस्य कारणं भवेत्, अतो येनैव वाक्येन कारणत्वं साध्यते, तच्छेषेणैव तद्विघटितं भवतीति विप्रतिषेधाद्ब्रह्मवादे पुनरसामञ्जस्यमित्याशङ्कायां श्रुतिविप्रतिषेधं परिहरति । तदनन्यत्वमित्यादि । तस्य अनन्यत्वं तदनन्यत्वम् । कार्यस्य कारणाभिन्नत्वमत्र वाक्यशेषे प्रतीयते, न मिथ्यात्वम् । कुतः । आरम्भणशब्दादिभ्यः । अत्रादिपदेन नामधेयपदमितिशब्दः 'सदेव सोम्ये'त्यादिवाक्यानि च सङ्गृह्यन्ते । तथा च यदि विकारस्य वाङ्मात्रतामभिप्रेयात्, वाचारम्भणं विकारो मृत्तिकैव सत्यमित्येव ब्रूयात्, तावतैव विकारमिथ्यात्वसिद्धेः । वदति त्वेवम् । अतो यो विकारस्तद्वाचारम्भणम् । यदारभ्यते तदारम्भणं 'कृत्यल्युटो बहुल'मिति बाहुलकात्कर्मणि ल्युट् । कारणस्यैव नामधेयम् । कारणमेव हि तत्तदर्थक्रियासिद्ध्यर्थं तेन तेन नाम्ना व्यवह्रियत इति कारणादभिन्नमेव कार्यम्, न तु स्वेन रूपेण कारणाद्भिन्नम् । तदाह मृत्तिकेत्येव सत्यमिति । कारणरूपेणैव सत्यम्, न तु रूपान्तरेण । नापि मिथ्या । मिथ्यात्वे सति कार्याभावेन ब्रह्म कस्य कारणं भवेत् । कारणत्वाभावे सति 'यतो वा इमानी'त्यादयः सर्वा एव श्रुतयः कुप्येरन् । न च शुक्त्यादीनां रजतादीन् प्रतीव ब्रह्मणोपि जगत्प्रति तटस्थकारणतायाः शक्यवचनत्वान्न तत्कोप इति वाच्यम् । पुरुषबुद्धिदोषसाचिव्येन शुक्त्यादिषु रजतादिबुद्धिमात्रजनकतया तेषु रजतादिकारणत्वस्याभिमानमात्रत्वेनापौरुषेयायामीश्वरनिश्वासरूपायां वाचि तादृशाभिमानिवाक्यत्वस्य वक्तुमशक्यत्वेन त्वदभिमतकारणताया वक्तुमशक्यत्वात् । शक्यत्वाभ्युपगमे तर्कवदप्रतिष्ठया सर्वसन्मार्गविप्लवप्रसङ्गात् । किञ्चात्रेदं वाक्यमुपक्रम उक्त्वाग्रे कथमसतः सज्जायेतेति, सत्त्वेव सोम्येदमग्र आसीदिति सत्पदेनेदमा च सतः कार्यत्वं श्राव्यते । यदि शुक्तिरजतवत्कार्यं स्यात्, सज्जायेतेति सत्पदमिदङ्कारश्च

कुप्येताम् । किञ्चाग्रे 'तदैक्षत बहु स्यां प्रजायेये'तीक्षणपूर्विका स्वस्यैव बहुभवनरूपा नानाविधजननहेतुका च सृष्टिः श्राव्यते । यदि चोक्तविधं कार्यं स्यात्, तदा तस्य मिथ्यात्वेन स्वप्रतियोगित्वबोधक उत्तमपुरुषप्रयोगश्च कुप्येत । किञ्चाग्रे 'सेयं देवतैक्षते'त्यादिनोक्ते त्रिवृत्करणेक्षणे 'इमास्तिस्रो देवता' इति बोधिता देवतानां या ब्रह्मप्रत्यक्षगोचरता सापि ब्रह्मणो भ्रमराहित्यात्कुप्येत। न 'चापागादग्नेरग्नित्व'मिति निगमनवाक्यविरोधः । शिष्यस्यार्वाचीनत्वेनाग्नित्वादीन् स्वाभाविकतयावधारयतस्तादृशावधारणनिवृत्त्यर्थं तस्य वाक्यस्य प्रवृत्तत्वेन तत्राभिमन्यमानस्वाभाविकतापगतिबोधकतया विरोधाभावात् । अत एतैः शब्दैः 'इदं सर्वं यदयमात्मा, सर्वं तं परादाद्योन्यत्रात्मनः सर्वं वेदे'त्यादिभिश्च कार्यस्य कारणाभिन्नत्वमेव वाक्यार्थों, न तु मिथ्यात्वमित्यर्थः ॥ १४ ॥

## भावे चोपलब्धेः ॥ १५ ॥

पूर्वसूत्रेण श्रुतिविप्रतिषेधं परिहृत्य कार्यस्य कारणादनन्यत्वे सत्त्वे च युक्तिमाह । भावे चेत्यादि । भावे विद्यमान एव घटे घटोपलम्भात्, चकारेण 'मृत्तिकेत्येव सत्य'मिति श्रुतेश्च कार्यस्य कारणादभिन्नत्वं सत्त्वं चोपगन्तव्यम् । यदि कार्यं वागारब्धं वाङ्मात्रेणैवोपलभ्येत, तदा मिथ्यैव घटोत्रास्तीत्युक्तेप्युपलभ्येत । न तु तथा । अतः सदेव कारणादनन्यदेव कार्यम्, न मिथ्येत्यर्थः ॥ १५ ॥

## सत्त्वाच्चावरस्य ॥ १६ ॥

'सदेव सौम्येदमग्र आसीत् । यदिदं किञ्च तत्सत्यमित्याचक्षत' इत्यादिश्रुतिष्विदमा पूर्वकालसत्ताबोधनेन सर्वस्य सत्यत्वविधानेन च अवरस्य प्रपञ्चस्य सत्त्वात् न मिथ्यात्वमित्यर्थः । 'विश्वं वै ब्रह्म तन्मात्रं संस्थितं विष्णुमायया । यथेदानीं तथाचाग्रे पश्चादप्येतदीदृश'मिति । 'तदेतदक्षयं नित्यं जगन्मुनिवराखिलम् । आविर्भावतिरोभावजन्मनाशविकल्पव'दिति तृतीयस्कन्धविष्णुपुराणसङ्ग्राहको वा सूत्रे चकारः ॥ १६ ॥

## असद्व्यपदेशादिति चेन्न धर्मान्तरेण वाक्यशेषात् ॥ १७ ॥

पुनः किञ्चिदाशङ्क्य परिहरति । असदित्यादि । अयमर्थः । पूर्वपादे समाकर्षसूत्रे 'असद्वा इदमग्र आसी'दिति श्रुतिस्थस्यासच्छब्दस्य स्वार्थात् समाकर्षेण ब्रह्मपरत्वमुक्तम्, परन्तु समाकर्षे बीजं नोक्तम्, अतो न तद्युक्तिसहम्। अथासदिति चेन्नेति पूर्वसूत्रे तद्विषयश्रुतौ चासतः कारणता निवारितेति सैव ब्रह्मणः कारणत्वे युक्तिरिति तया समाकर्षणमुच्यते । तदापि योगे सम्भवति गौण्या अन्याय्यत्वादस्यासत्पदस्यासत्कार्यवादबोधकत्वम् । इदं परिदृश्यमानं जगत्, उत्पत्तेः प्रागसदेवासीत्, तत उत्पत्त्यनन्तरं ब्रह्मणः सकाशाद्वा सदजायतेत्येवमसद्व्यपदेशात्कार्यं प्रागुत्पत्तेरसत् । तथा सत्याद्यन्तयोर्यदसतोस्ति तदेव मध्ये इति न्यायादिदानीमपि सन्नेति चेदिति सूत्रांशेनाशङ्क्य समाधत्ते । नेति ।

यत्कार्यस्यासत्त्वं श्रुत्या शङ्कितम्, तन्न । कुतः । धर्मान्तरेण अव्याकृतत्वेनासद्व्यपदेशात् । येन व्याकृतत्वेन धर्मेणेदानीं वर्तते, तेन धर्मेण तदानीं नास्तीति तथा व्यपदेशो, न त्वत्यन्तासत्त्वेनेति । ननु किमत्र मानमित्यत आह । वाक्यशेषादिति । 'तदात्मानꣳ स्वयमकुरुते'ति पूर्वोक्तासद्वाक्यशेषात् । यदि हि श्रुतिः प्रागुत्पत्तेः कार्यस्यासत्त्वमभिप्रेयात्, तदा करोतिकर्मत्वेनात्मपदं न ब्रूयात्, अतस्तथेत्यर्थः । एवं च निवृत्ते असत्कार्यवादस्य श्रुत्यभिप्रेतत्वे समाकर्षसूत्रे गौण्यङ्गीकारोपि न दोषाय । अनेनैव बीजेन तत्र तदङ्गीकारात् । वस्तुतस्तु न गौणी । सर्वेषां शब्दानां भगवद्वाचकत्वस्य प्रागेव साधितत्वेन समाकर्षसूत्रस्य वादिबोधनार्थत्वात् । एवं चात्रेदंशब्दोपि न परिदृश्यमानत्वमात्रपरः, बोधनीयस्य शिष्यस्याभावात्, किन्तु स्वबुद्धिस्थपरः, केवलश्रुतिवाक्यत्वादिति ॥ १७ ॥

## युक्तेः शब्दान्तराच्च ॥ १८ ॥

औलूक्यादिबोधनाय हेत्वन्तरमाह । युक्तेरित्यादि । युक्तिस्तावत्, कार्यस्य नियतावधिकत्वम्, यत्कार्यं यत्समवेतम्, तत्तेनोत्पाद्यत इति । अन्यथा समवायस्य साधारणत्वात्सर्वतः सर्वोत्पत्तिः स्यात् । अथासाधारणः, तदा असाधारण्यनियामकस्यान्यस्य वक्तुमशक्यत्वात्तत्तत्कार्यवैशिष्ट्यमेव नियामकत्वेन वक्तव्यम्, ततश्च वैशिष्ट्यनियामकतया तत्सिद्धौ सत एवोत्पत्तिः सिध्यति । किञ्च । समवायः सम्बन्ध इति सम्बन्धिद्वयनिवर्त्यः । स च नित्य इति कारणवत् कार्यमप्युत्पत्तेः प्राग्वक्तव्यम् । सम्बन्धित्वस्य तत्रापि तुल्यत्वात् । अन्यथा तस्य सम्बन्धत्वमेव न सिध्येदित्यादिः । न च कार्यस्योत्पत्तेः पूर्वं सत्त्वे कारकव्यापारवैयर्थ्यं शङ्क्यम् । कार्याभिव्यञ्जनार्थत्वेन तस्य सार्थक्यात् । अभिव्यक्तेश्चोत्पत्तिवदसाधारणत्वान्न कोपि चोद्यावसर इति । शब्दान्तरं तु । सच्छब्दादन्य आत्मशब्दः । तेन चाविकृतत्वं युक्त्यगोचरत्वं च श्रुत्यैव बोध्यते । एवं च सर्वस्य ब्रह्मकार्यत्वेपीदं नित्यत्वेन व्यवह्रियताम्, इदं कार्यत्वेनेति नियमस्य प्रजायेयेतीच्छाकारविचारेणैव सिद्धेर्न कोपि शङ्कालेशः ॥ १८ ॥

## पटवच्च ॥ १९ ॥

नन्वभिव्यञ्जकैरपि सदेवाभिव्यञ्जनीयम्, यथा गृहस्थो घटो दीपेन । अतः कारणे कारणात्मनापि सत्कार्यं केनचिद्रूपेण प्रतीतिगोचरो वक्तव्यम् । अन्यथा तेनापि रूपेण कार्यसत्ता न सिध्येदित्यत आह । पटवदिति । यथा संवेष्टितः पटो न व्यक्तं गृह्यते, प्रसारितस्तु गृह्यते, न तावता अग्रहणदशायां तदसत्ता, तथा कार्यस्यापीत्याविर्भावानाविर्भावाभ्यां जगतोपि प्रतीत्यप्रतीती इत्यदर्शनं न कार्यासत्तासाधकमित्यर्थः ॥ १९ ॥

## यथा च प्राणादिः ॥ २० ॥

ननु मास्त्वदर्शनमसत्तासाधकम्, तथापि सत्त्वे काचिदर्थक्रिया तु स्यादेव । यथा

अदृश्येनापि भूतेन स्वगयाश्राद्धादियाचनमन्यदुःखादिदानं च । अर्थक्रिया तु न दृश्यत इति कथं तदात्मनापि सत्त्वेत्यत आह । यथेत्यादि । यथा प्राणापानानां नियमने जीवनमात्रम्, अनियमने चाकुञ्चनादि, एवमर्थक्रियाभेदेपि न प्राणभेदो, न वा प्राणादीनां प्रागसत्त्वम् । तथोत्पत्तेः पूर्वं अर्थक्रियाविशेषराहित्येपि न कार्यासत्त्वमित्यर्थः ॥ २० ॥ इति सप्तमं तदनन्यत्वाधिकरणम् ॥ ७ ॥

## इतरव्यपदेशाद्धिताकरणादिदोषप्रसक्तिः ॥ २१ ॥ ( २-१-८ )

ननु ब्रह्मणो जडकारणत्वे मा भवतां कारणकार्यदोषौ । चेतनकारणत्वे तु तौ भविष्यतः । कुतः । इतरव्यपदेशात् । इतरस्य व्यपदेश इतरव्यपदेशस्तस्मात् । 'तत्सृष्ट्वा तदेवानुप्राविश'दित्यत्र कर्तुः सृष्टौ प्रवेशः श्राव्यते । स 'चानेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति जीवस्योच्यते । तेन जीवः स्रष्टृभिन्नः सिध्यति, ततश्च हिताकरणादिदोषप्रसक्तिः । उक्तरीत्यैक्ये सति तद्धितं कर्तव्यम् । न हि कश्चित्स्वयं समर्थः स्वहितं न करोति । सकलानर्थनिकरहेतुभूते शरीरे प्रवेशनादहितं च करोतीति कारणे दोषः । तादृशकृतिविषयत्वात्कार्येपि दोषः । अतश्चेतनस्य तदनन्यत्वं न युक्तम् । किन्तु नित्यभिन्नत्वमेव युक्तमित्यर्थः ॥ २१ ॥

## अधिकं तु भेदनिर्देशात् ॥ २२ ॥

परिहरति । अधिकमित्यादि । ब्रह्म न जीवमात्रम्, येनायं दोषः स्यात् । किन्तु ततोधिकम् । तुः तावन्मात्रत्वशङ्कानिरासे । तत्र हेतुः । भेदनिर्देशात् । 'आत्मा वा अरे द्रष्टव्य' इत्यादिषु वाक्येषु कर्मकर्तृत्वेन भेदस्य कथनात् । विज्ञानानन्दरूपत्वेनापि भेदस्य कथनात् । तथा च यथैक्यं बोध्यते, तथा ज्ञेयत्वेनानन्दरूपत्वेन भेदोपि बोध्यते । अयं च भेदो ब्रह्मण आधिक्ये पर्यवस्यति । आधिक्यं चांशित्वात्पूर्णत्वे । पूर्णश्चांशस्य हितं करोत्येवेति न नियमः । स्वदेहेपि नखनिकृन्तनकेशप्रसाधनादेर्दर्शनात् । अन्यथा सर्वेन्द्रियव्यापाराभावप्रसङ्गात् । किन्तु स्वलीलयैकं करोति हितमहितं वेति लोके दृश्यते । एवं कार्यदोषोपि लोकादेव परिहर्तव्यः । अतो दोषाभावान्न चेतनस्यानन्यत्वभङ्ग इत्यर्थः॥२२॥

## अश्मादिवच्च तदनुपपत्तिः ॥ २३ ॥

उक्तमर्थं दृष्टान्तेन स्फुटीकरोति । अश्मादीत्यादि । हीरकमाणिक्यपाषाणानां पलाशचंपकचन्दनानां अश्मत्ववनगतत्वाविशेषेपि स्वभावभेद उच्चनीचत्वं च लोके दृश्यते । एवं ब्रह्मादिस्थावरान्तानां जीवानां ब्रह्मत्वाविशेषेपि स्वभावभेदस्योच्चनीचभावस्य च सत्त्वात् तस्य तस्य तादृशतादृशदेहादिसम्बन्धः सुखदुःखादिश्चेति कारणे कार्ये चानन्यत्वप्रयुक्तदोषासंसर्गस्य लोकन्यायेनैव सिद्धत्वात्तादृशाशङ्काया एवानुपपत्तिरित्यर्थः । यद्यपि पूर्वपक्ष्युक्तदोषसमाधानं भेदनिर्देशसूत्रादेव सिध्यति, तथापि जीवस्य कार्या-

द्वैलक्षण्यं कार्यानुरोधित्वं च दर्शयितुमिदं सूत्रमिति ज्ञेयम् ॥ २३ ॥ इत्यष्टममितरव्यपदेशाधिकरणम् ॥ ८ ॥

## उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि ॥ २४ ॥ ( २-१-९ )

एवं कार्यस्य कारणानन्यत्वे अंशस्यांश्यनन्यत्वे च ये दोषास्तान् परिहृत्य पुनर्ब्रह्मण एकस्यैवान्यानपेक्षतया कारणत्वे किञ्चिदाशङ्क्य परिहरति । उपेत्यादि । एकस्यैवान्यनिरपेक्षस्य ब्रह्मणो निखिलजगत्कारणत्वं यदुक्तम्, तन्नोपपद्यते । कुतः । उपसंहारदर्शनात् । उपसंहारोन्यसामग्रीसमवधानम्, तस्य दर्शनात् । लोके हि यत्रोपादानता मृदादिषु दृष्टा, तत्र कुलालादेः कर्तुश्चक्रचीवरादेः समवधानेनैव दृष्टा । न हि बाधितमर्थं वेदोपि ब्रूते इति चेत् । न । एवमाशङ्का न कर्तव्या । कुतः । क्षीरवद्धि । हि यतो हेतोः क्षीरवद्ब्रह्म परिणमते । यथा क्षीरं कालपरिवासेनातञ्चनादिकर्तारमपेक्ष्यैव दधि भवतीति दृष्टम्, तथा ब्रह्मापि परिणंस्यते, अतो न बाधितोपदेश इत्यर्थः ॥ २४ ॥

## देवादिवदपि लोके ॥ २५ ॥

ननु भवत्वेवं परिणामे कर्तुरनपेक्षा, तथापि निमित्तान्तरापेक्षा तु भविष्यति । क्षीरमपि ह्यधिश्रयणमातञ्चनं कालं वा अपेक्षत एव, न तु सर्वानपेक्षम् । किञ्च, क्षीरं सर्वं स्वयं व्यापृण्वानं स्वान्तः सर्वं दधि भवति, ब्रह्म तु न तथेति व्यधिकरणो दृष्टान्त इत्यत आह । देवादीत्यादि । यथा देवर्षिपितरो बाह्यनिरपेक्षा एव स्वयोगबलेन बहिः सर्वं कुर्वन्ति, एवं ब्रह्माप्यनपेक्ष्य निमित्तान्तरं तत्तत्समवायं च स्वसामर्थ्येनैवं करोतीति नात्रापि लोकविरोध इत्यर्थः ॥ २५ ॥

## कृत्स्नप्रसक्तिर्निरवयवत्वशब्दकोपो वा ॥ २६ ॥

अन्यनिरपेक्षतायां लोकविरोधे परिहृतेपि पुनः श्रुतिविरोधमाशङ्कते । कृत्स्नेत्यादि । यद्येकमेव ब्रह्म स्वात्मानमेव जगत्कुर्यात्, तदा कृत्स्नमेव कार्यं भवेत्, अथांशभेदेन कुर्यात्, तदा 'निष्कलं निष्क्रियं शान्त'मिति निरवयवत्वबोधको निष्कलशब्दः कुप्येत । अतः श्रुतिविप्रतिषेधाद्ब्रह्मण उपादानत्वं न युक्तमित्यर्थः ॥ २६ ॥

## श्रुतेस्तु शब्दमूलत्वात् ॥ २७ ॥

तुशब्दः पक्षं व्यावर्तयति । इयं शङ्का न कर्तव्या । कुतः । श्रुतेः । आत्मपरिणामो निष्कलत्वं चेति द्वयमपि श्रूयते । श्रुतं च न युक्त्या बाधनीयम् । तर्काप्रतिष्ठानस्य प्रागेव दर्शितत्वात् । 'अचिन्त्याः खलु ये भावा न तांस्तर्केण योजयेत् । प्रकृतिभ्यः परं यच्च तदचिन्त्यस्य लक्षणम् ॥' । 'न हि विरोध उभयं भगवत्यपरिगणितगुणगण ईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनवितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणदुरवग्रहवादिनां विवादानवसर' इति पुराणवाक्येन ब्रह्मणो विरुद्धधर्माश्रयत्वस्योपबृंहणात् 'तं

त्वौपनिषद'मिति श्रुतेश्च ब्रह्मणः शब्दमूलत्वात् श्रुत्येकसमधिगम्यत्वेनैव सिद्धत्वादित्यर्थः ॥ २७ ॥

## आत्मनि चैवं विचित्राश्च हि ॥ २८ ॥

ननु यद्यपि श्रुतौ केवलस्य ब्रह्मण एव कारणता निरूपिता, तथापि देशकालौ त्वधिकरणत्वेनावश्यकावित्याशङ्का श्रुत्यालम्बनेनैव परिहरति । आत्मनीत्यादि । अत्र प्रथमश्चकारोऽवधारणार्थः, द्वितीयोऽप्यर्थः । एवं नानाविधा सृष्टिरपि आत्मन्येव । 'नासदासीन्नो सदासीत्तदानीम्, सदेव सौम्येदमग्र आसीदेकमेवाद्वितीय'मित्यादिष्वितरनिषेधेन केवलस्य ब्रह्मण एव सृष्ट्यारम्भे कथनात् द्वितीयस्कन्धे च 'स एष आद्यः पुरुषः कल्पे कल्पे सृजत्यजः । आत्मन्येवात्मनात्मानं संयच्छति च पाति चे'ति ब्रह्मवाक्येपि कण्ठत एवात्मनि सृष्टिकथनाच्च । न च तदानीं 'अग्रे' इति कालस्य श्रुत्या कथनान्नैवमिति शङ्क्यम् । अद्वितीयादिपदविरोधेन कालोक्तेर्बोधनार्थत्वात् । अन्यथा वाक्यभेदप्रसङ्गात् । विशिष्टविधानेऽवधारणाद्वितीयपदयोः कोपाच्च । 'सोऽनुवीक्ष्य नान्यदात्मनोऽपश्य'दित्यनुवीक्षाविरोधाच्च । ननु तथापि बोधार्थं काचिद्युक्तिर्वक्तव्येत्यत आह । विचित्रा हीति । हि यतो हेतोः 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति श्रुतेस्तस्य शक्तयो विचित्राः आकलयितुमशक्याः । तथा च सामर्थ्यवैचित्र्यमेव युक्तिरित्यर्थः ॥२८॥ इति नवममुपसंहारदर्शनाधिकरणम् ॥ ९ ॥

## सर्वोपेता च तद्दर्शनात् ॥ २९ ॥ ( २-१-१० )

एवमुपादानत्वे शङ्कितान् दोषान् परिहृत्य कर्तृत्वे शङ्क्यमानान् दोषान् परिहर्तुं पूर्वं तस्य सर्वकर्तृत्वनिर्वाहकं धर्ममाह । सर्वेत्यादि । उपेतेति तृजन्तम् । भगवान् सर्वैः सामर्थ्यैरुपगतः । चकारात्सत्यादिभिः प्रथमस्कन्धे धरित्र्या धर्मं प्रत्युक्तैर्गुणैश्च युक्तः । कुतः । तद्दर्शनात् । वेदे तथा दर्शनात् । 'यः सर्वज्ञः सर्वशक्तिः' 'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः सर्वमिदमभ्यात्त इति' । तथा च य एतादृशः, तस्य सर्वकर्तृत्वं युक्तमेवेत्यर्थः ॥२९॥

## विकरणत्वान्नेति चेत्तदुक्तम् ॥ ३० ॥

ननु कर्ता लोके इन्द्रियवान् दृष्टः । ब्रह्मणस्तु विकरणत्वं श्रूयते, 'न तस्य कार्यं करणं च विद्यत' इति । 'अचक्षुष्कमश्रोत्रमवागमन' इति । अतः 'स विश्वकृद्विश्वविदात्मयोनि'रित्यादिषूक्तं कर्तृत्वं विप्रतिषेधान्नादरणीयमिति चेत् । तत्राह । तदुक्तम् । अस्य परिहारः पूर्वमेवोक्तः, 'श्रुतेस्तु शब्दमूलत्वा'दिति । अनवगाह्यमाहात्म्ये श्रुतिरेव शरणम्, नान्या वाचो युक्तिरिति । श्रुतिस्तु 'अपाणिपादो जवनो गृहीते'त्यादिः करणराहित्यं कर्तृत्वं च वक्तीति तथैवादरणीयम् ॥ ३० ॥

---

१ स्वपक्षदोषाच्चेति सूत्रं ग्रन्थकृद्भिर्नोपन्यस्तम्, नापि व्याख्यातमिति ।

## न प्रयोजनवत्त्वात् ॥ ३१ ॥

पुनराशङ्कते । नेत्यादि । न ब्रह्म जगत्कारणम् । कुतः । प्रयोजनवत्त्वात् । लोके हि कार्यकर्तृत्वं प्रयोजनवतो दृष्टम् । ब्रह्म तु 'आप्तकाम' इति श्रुत्या प्रयोजनशून्यमुच्यते तस्मात् । व्यधिकरणो हेतुः । यद्वा । नप्रयोजनवत्त्वादित्येकं पदम् । तत्र नशब्देन सह सुप्सुपेति समासः । तथा सति पूर्वसूत्रान्नेत्यस्य साध्यस्यानुवृत्तिः । अर्थस्तु पूर्वोक्त एव ॥ ३१ ॥

## लोकवत्तु लीला कैवल्यम् ॥ ३२ ॥

समाधत्ते । लोकेत्यादि । तुशब्दः पूर्वपक्षनिरासार्थः । यदत्र भगवतः सृष्ट्यादि-कर्तृत्वम्, तत् लोकवल्लीला । यथा राजभिर्मृगया क्रियते, तत्र क्रीडैव प्रयोजनम्, नान्यत् । मांसादेर्भृत्यादिभिरप्यानेतुं शक्यत्वात् । अतो लोकेपि प्रयोजनं विना ईश्वरस्य कार्यस्य दर्शनेन तत एव समाधानसम्भवान्नात्र पर्यनुयोगावकाश इत्यर्थः । तस्याः सामर्थ्यं स्वरूपं च बोधयितुमाह । कैवल्यमिति । तस्य लीलाप्यन्यस्य कीर्तयितुः कैवल्यजनकत्वात्कैवल्यं सा, स्वयं मोक्षरूपैव वेति ॥ ३२ ॥

## वैषम्यनैर्घृण्ये न सापेक्षत्वात्तथा हि दर्शयति ॥ ३३ ॥

ननु ब्रह्मणः कर्तृत्वं न युक्तम्, कांश्चित्सुखिनः कुर्वतो वैषम्यापादकत्वात्, प्रलयं कुर्वतो नैर्घृण्यापादकत्वाच्चेत्याशङ्क्य परिहरति । वैषम्येत्यादि । एवं विभागेन सुखदुःख-दानेपि एवं जगज्जन्मादिकरणेपि ब्रह्मणो न वैषम्यं नैर्घृण्यं वा । कुतः । सापेक्षत्वात् । जीवानां कर्मानुरोधेन सुखदुःखे प्रयच्छति, प्रलयं च करोतीति, कर्मसापेक्षत्वात् । इदं च वादिबोधनायोक्तम् । वस्तुतस्तु तदनन्यत्वादिसूत्रैः सर्वस्य चेतनाचेतनात्मकस्य जगत आत्मसृष्टित्वप्रतिपादनाद्वैषम्यनैर्घृण्ययोः सम्भावनैव नास्ति । किञ्च । जीवसुखादिकं प्रति भगवतः साधारणा कारणता, यथा व्रीह्यादीन् प्रति वृष्टेः । असाधारणा तु तत्तत्कर्मणः, यथा व्रीह्यादीन्प्रति तत्तद्बीजानाम् । अतोपि ब्रह्मणि न वैषम्यादिदोषः । न चेदं काल्प-निकम्, तदाह । तथा हि दर्शयतीति । हि यतो हेतोः श्रुतिरेव साधारण्यादिकं तयोर्दर्श-यति । 'एष ह्येव साधु कर्म कारयति, तं यमेभ्यो लोकेभ्य उन्निनीषति, एष उ एवासाधु कर्म कारयति, तं यमधो निनीषती'ति । 'पुण्यो वै पुण्येन कर्मणा भवति, पापः पापेने'ति च । न चैवं सापेक्षत्वेप्यनीश्वरत्वम्, विरुद्धधर्माश्रयत्वेन महामाहात्म्यत्वादिति ॥ ३३ ॥

## न कर्माविभागादिति चेन्नानादित्वात् ॥ ३४ ॥

ननु कर्मसापेक्षत्वेन यत्समाधानम्, तन्न युक्तमित्याह । न कर्मेत्यादि । कर्म चेत्पूर्वं स्यात्, तदा तत्सापेक्षत्वेन ब्रह्मणि दोषो न स्यात् । तदेव तु न । कुतः । अविभागात् ।

सृष्ट्यादौ 'सदेव सौम्येदमग्र आसीदेकमेवाद्वितीय'मिति ब्रह्मेतरनिषेधे, 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा'इति श्रुत्युक्तस्य कार्योद्गमरूपस्य विभागस्याभावात् । ततः पूर्वं जीवाभावेन तच्छरीरसाध्यं कर्मापि न सम्भवति, येन वैषम्यादिः समाधीयेत । न च विभागोत्तर-भाविना कर्मणा समाधानम् । कर्मणः शरीरजन्यत्वेन शरीरसम्बन्धस्य च कर्मजन्यत्वे-नान्योन्याश्रयादिति चेत् । न । नायं दोषः । कुतः । अनादित्वात् । स्यादन्योन्याश्रयो, यदि शरीरकर्मव्यक्ती द्वे एव स्याताम्, तत्तु नास्ति । बीजाङ्कुरवत् शरीरकर्मप्रवाहस्या-नादित्वात् । अतो विभागोत्तरं सापेक्षत्वात्सुघटः समाधिरित्यर्थः ॥ ३४ ॥

## उपपद्यते चाप्युपलभ्यते च ॥ ३५ ॥

ननु सृष्टेः पूर्वं विभागाभावादनादित्वमेव कथमित्यत आह । उपपद्यत इत्यादि । अपिः पूर्वपक्षिगर्हायाम् । स्वयं यौक्तिकः संन् युक्तिं विस्मरतीति । चोवधारणे । उपपद्यत एव जीवस्यानादित्वेन कर्मानादित्वम् । यदि हि जीवस्यानादित्वं न स्यात्, कस्य संसारः स्यात् । किञ्च, प्रलयासन्नदशायां सदसत्कर्मकरणोत्तरं प्रलये जाते तदानीं जीवानां ब्रह्म-रूपत्वेन, सृष्ट्यारम्भदशायां विस्फुलिङ्गवद्विभागेपि ब्रह्मरूपत्वस्यानपेतत्वेन कर्मफलभो-गायोगात्कृतहानिः । सृष्ट्यारम्भे ब्रह्मरूपतयाऽतिशुद्धानां सकलदुःखनिवहसाधनीभूत-शरीरसम्बन्धादकृताभ्यागमश्च स्यात् । जीवस्यानादित्वे चेदं सर्वमुपपद्यते । न चेदं तर्क-सिद्धत्वादप्रतिष्ठितमिति शङ्कनीयम् । कुतः । उपलभ्यते च । 'अनेन जीवेनात्मनानुप्रवि-श्ये'ति सर्गादौ जीवपदप्रयोगादनादित्वं श्रुतावुपलभ्यते । चकारात् 'तपसैव यथापूर्वं स्रष्टा विश्वमिदं भवा'नित्यादिस्मृतावपि । तथा च श्रुतौ जीवानादित्वस्य स्मृतौ सृष्ट्यनादि-त्वस्य च बोधनेन कर्मानादित्वं सुखेन सिध्यतीति न कश्चिद्दोष इत्यर्थः ॥ ३५ ॥

## सर्वधर्मोपपत्तेश्च ॥ ३६ ॥

नन्वेवं सति प्रलये नामरूपविभागानर्हरूपेण सर्वावस्थानं सिध्यतीत्यविभाग-लक्षणस्यैवाद्वैतस्य सिद्धिः, न तु शुद्धाद्वैतस्येत्यद्वितीयश्रुतिविरोधो दुष्परिहर इत्याशङ्कां परिहरन् स्वोक्तमुपसंहरति । सर्वेत्यादि । चोवधारणे । वेदोक्ताः सर्वे धर्माः ब्रह्मणः सर्व-समर्थत्वादुपपद्यन्ते । 'अस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जग'दिति श्वेताश्वतरश्रुतेर्जीवा-नामवयवत्वादवयवैश्चावयविनोऽद्वितीयत्वस्याभङ्गान्न शुद्धाद्वैते कोपि शङ्कावकाश इत्यर्थः । तेन विरुद्धधर्माश्रयं सर्ववादानवसरं समाभ्यधिकरहितं नानावादानुरोधि ब्रह्मेति सिद्धम् ॥ ३६ ॥ इति दशमं सर्वोपेता इत्यधिकरणम् ॥ १० ॥

इति श्रीमद्वल्लभाचार्यचरणैकतानश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचितायां ब्रह्मसूत्रवृत्तौ द्वितीयाध्यायस्य प्रथमः पादः ।

## अथ द्वितीयाध्यायस्य द्वितीयः पादः।

### रचनानुपपत्तेश्च नानुमानम् ॥ १ ॥ ( २-२-१ )

पूर्वस्मिन् पादे साङ्ख्यादीनां स्मृतीनां यद्यपि सामान्यतो निराकरणं कृतम्, तथापि केषाञ्चन मन्दमतीनां तदुक्तयुक्तिष्वाभासतायामभातायां श्रद्धोत्पत्तौ विभ्रंशः स्यात्, स माभूदित्यतः करुणया तदुक्तयुक्तीराभासीकर्तुं द्वितीयः पादः आरभ्यते। तत्र पूर्वस्मिन् पाद उपपादितः सत्कार्यवादः परिणामवादश्च साङ्ख्यानां ब्रह्मवादिनां तुल्य इति साङ्ख्ये श्रद्धा शीघ्रमास्तिकस्योत्पद्येतेति दशभिः सूत्रैः पूर्वं साङ्ख्योक्तयुक्तिमाभासीकरोति। रचनेत्यादि। अनुमीयत इत्यनुमानम्, प्रधानस्य कारणत्वेनानुमानं न कर्तव्यम्। कुतः। रचनानुपपत्तेः। अयमर्थः। प्रधानं हि महदादिरूपात्परिणामादनुमीयते। विवादाध्यासिता महदादयो भूतान्ताः स्वसजातीया व्यक्तकारणकाः, अव्यक्तव्याप्यत्वात्। ये यज्जातीयव्याप्यास्ते तज्जातीया व्यक्तकारणकाः, यथा घटादयो मृदादिव्याप्या मृदादिकारणका इत्यादिप्रयोगात्। एवं साध्यमानं प्रधानं न जगत्कारणम्। भूरादिलोकरचनायाः केवलेनाचेतनेन प्रधानेनानुपपत्तेः। रचना हि बुद्धिपूर्विका वा प्रतिनियतदेशकालव्यवस्थापिका वा स्पार्शना वा क्रिया। सा हि नाचेतने क्वापि दृष्टा। तथा च भूरादिलोकरचना न केवलाचेतनकारणिका। रचनात्वात्। गृहादिरचनावत्। भूरादिलोकाः नाचेतनकर्तृकाः। स्पार्शनक्रियाविशेषात्मकरचनाविषयत्वात्। घटकुड्यादिवत्। प्रधानं स्वतः अकर्तृ। अचेतनत्वात्। स्तम्भादिवदित्यादिभिः प्रयोगैः सत्प्रतिपक्षत्वान्न तेनानुमानेन प्रधानं जगत्कारणतयानुमातुं शक्यमिति। नन्वेतैः प्रयोगैः कर्तृत्वस्यैवासिद्धिः, न तु कारणत्वस्येति तत्परिणामाङ्गीकारे को दोष इति चेत्। न। तन्मते पुरुषस्य निष्क्रियत्वेन या काचित्क्रियाशक्तिः, सा सर्वापि प्राधानिक्येवेति रचनाया अपि तद्धर्मत्वात्तत्कर्तृकाणां लोकानां न तत्परिणामत्वं तैर्वक्तुं शक्यम्। तथा च भूरादयो लोका न प्रधानपरिणामः, तद्रचितत्वात्। यद्यद्रचितम्, तन्न तत्परिणामः, यथा घटादिः, कुलालादेरित्यनुमानेन लोकेभ्यः परिणामत्वे निवृत्ते प्रधानस्योपादानताया अपि निवृत्तौ कारणत्वस्यैव ततो निवृत्तेः। इदमेव सूत्रे चकारेण सूच्यते ॥ १ ॥

### प्रवृत्तेश्च ॥ २ ॥

अत्रापि अनुपपत्तेरिति पूर्वसूत्रैकदेशो नानुमानमिति चानुवर्तते। तथा च प्रवृत्त्यनुपपत्तेरपि हेतोः कारणतया प्रधानानुमानं न कार्यमित्यर्थः। ननु पूर्वहेतुनैव साङ्ख्यमते निराकृते किमस्य प्रयोजनमिति चेत्। उच्यते। रचना द्विविधा। भुवनरचना जनरचना च। तत्र भुवनरचनामादाय साङ्ख्यानुमाने दूषितेपि, जनरचनायाः अचेतनशुक्र-

शोणितपरिणामरूपत्वात्पूर्वोक्ते रचनात्वहेतुकेऽनुमाने जनशरीररचनाया रचनाविषयत्वहेतुके च जनशरीरस्याचेतनत्वहेतुके च शुक्रशोणितयोर्दृष्टान्तीकरणे तेषां साधारणत्वापत्त्या तैः स्वानुमानदूषणममन्वानः पुनः प्रत्यवतिष्ठेदित्यतस्तेषां शुद्धेरेव प्रयोजनत्वात्। कथं शुद्धिरिति चेत्, इत्थं, प्रवृत्तिर्नाम प्रयत्नस्तत्पूर्विका क्रिया वा । तथा च ब्रह्माण्डशरीररचना न केवलचेतनकारणका, प्रवृत्तिपूर्वकरचनात्वात् । मातापितृप्रवृत्तिपूर्वकशुक्रशोणितपरिणामात्मकजनशरीररचनावत् । भूरादिलोकाः न केवलाचेतनकर्तृकाः, प्रवृत्तिपूर्वकरचनाविषयत्वात् । पुरुषशरीरवत् । प्रधानं न स्वतः कर्तृ, प्रवृत्तिमत्वे सत्यचेतनत्वात् । जीवशरीरवदिति विशेषणादिना शुद्धेः । नापि धेनुनर्तकीदृष्टान्तेनाचेतनप्रवृत्त्युपपत्तिः । तत्रापि चेतनाधिष्ठानसत्त्वेन केवलाचेतनप्रवृत्त्यभावो बोध्यः ॥ २ ॥

## पयोम्बुवच्चेत्तत्रापि ॥ ३ ॥

ननु मास्तु धेन्वादिदृष्टान्तेन प्रवृत्तेः केवलाचेतनधर्मत्वम्, तथापि क्षीरजलदृष्टान्तेन केवलाचेतनधर्मत्वं प्रवृत्तेः सुवचम् । यथा दुह्यमानमधिश्रयमाणं च पयो विचित्रफेनरचनां करोति, यथा च नद्यादिजलं स्वत एव स्यन्दते, तथा च विचित्रलोकादिरचना केवलचेतनकर्तृका रचनात्वात्, दुह्यमानपयःफेनरचनावत् । बन्धाद्यर्था प्रधानप्रवृत्तिः केवलाचेतनधर्मः प्रवृत्तित्वात् । नद्यादिस्यन्दनप्रवृत्तिवदिति प्रयोगात् । अतः प्रवृत्तेरपि क्रियाविशेषत्वमेव, न तु प्रयत्नपूर्वकत्वमित्यत आह पय इत्यादि। अत्रापि नानुमानमित्यनुषङ्गः । तथा च उक्तरीत्या पयोम्बुदृष्टान्तेनाचेतनधर्मत्वं प्रवृत्तेर्नानुमातव्यम् । कुतः । तत्रापि । तस्मिन्नपि दृष्टान्ते दोहनाधिश्रयणयोश्चेतनस्यैव प्रयोजकत्वात्, नदीप्रस्रवणादौ च मेघानामेव चेतनानां प्रयोजकत्वान्नैवमपि रचनाप्रवृत्त्योरचेतनधर्मत्वसिद्धिरित्यर्थः ॥३॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥ ४ ॥

एवं प्रकृतेः कर्तृत्वे दूषणमुक्त्वा तस्याः स्वतः परिणामे दूषणमाह । व्यतिरेकेत्यादि । अत्रापि पूर्ववदनुषङ्गः। व्यतिरेकेण कार्यकरणं विना अनवस्थितिः, अवस्थित्यभावे व्यतिरेकानवस्थितिः, ततोपि बाधकात् प्रधानं स्वतः परिणामशीलत्वेन नानुमातव्यम्। व्यतिरेकानवस्थितिरेव कुत इत्यत आह। अनपेक्षत्वात्। प्रधानस्य स्वकार्यकरणेऽन्यानपेक्षत्वात् । तथा च प्रधानं यदि स्वतः परिणमेत, सर्वदैव कार्योत्पत्तिरेव स्यात्, न तु जातु प्रलयः, गुणत्रयस्य युगपत् क्षोभापत्तेस्तदीयकार्यत्रययौगपत्तिश्चकारेण समुच्चीयते । तस्मात्प्रधानस्य स्वभावतः परिणामो न युक्तिसह इत्यर्थः ॥ ४ ॥

## अन्यत्राभावाच्च न तृणादिवत् ॥ ५ ॥

नन्वस्माभिर्दृष्टान्तान्तरे प्रधानस्य स्वतः परिणामः समर्थनीयः । प्रधानं स्वभावादेव परिणमते, अचेतनत्वात्, तृणादिवदिति । यथा हि तृणपल्लवजलानि गवादिभक्षितानि

स्वभावत एव क्षीराकारेण परिणमन्ते, तथा प्रधानमपि महदाद्याकारेणेति, एवं चानपेक्षाहेतुको व्यतिरेकानवस्थितिदोषोपि न भवतीत्याशङ्कायामाह । अन्यत्रेत्यादि । अत्रापि पूर्ववदनुषङ्गः । अन्यत्र शृङ्गादौ दुग्धरूपस्य तृणादिपरिणामाभावात्, तृणादिकमपि न स्वभावतस्तथा परिणमति । तथा च प्रधानं न स्वभावादेव परिणमति अचेतनत्वात् तृणादिवदिति हेतूदाहरणयोः साधारणत्वेन एतद्दृष्टान्तबलादपि केवलप्रधानस्य कारणतयानुमानं न कर्तुं शक्यम् । चकारात् घासभक्षणादिरूपा गवादिचेतनक्रियापि तत्र प्रयोजिका दृश्यते । अतो लोकदृष्टान्ताभावादचेतनं प्रधानं न कारणमित्यर्थः ॥ ५ ॥

## अभ्युपगमेप्यर्थाभावात् ॥ ६ ॥

पूर्वसूत्रेष्वनभ्युपगम्य प्रधानकारणवादो दूषितः । इदानीं स उपगम्य दूष्यते । यथा धेनुर्वत्सार्थं स्वत एव प्रवर्तते, तथा प्रधानमपि पुरुषभोगार्थं स्वत एव प्रवर्तत इत्यभ्युपगमेपि प्रधानप्रवृत्तेरनुमानं न कर्तुं शक्यम् । अत्रापि पूर्ववदनुषङ्गः । अशक्यत्वे हेतुः । अर्थाभावात् । अर्थः प्रयोजनं तदभावात् । प्रयोजनं हि प्रेक्षावतां भासते । प्रेक्षापूर्वकारित्वस्य चेतनधर्मत्वादचेतने प्रधाने तस्य वक्तुमशक्यत्वात् । तथा च लोके तथा अदर्शनेनासङ्गतस्तथाभ्युपगम इत्यर्थः ॥६॥ इति प्रथमं रचनानुपपत्तेरित्यधिकरणम् ॥१॥

## पुरुषाश्मवदिति चेत्तथापि ॥ ७ ॥ ( २-२-२. )

पूर्वसूत्रेषु सप्तसु केवलप्रधानकारणवादो निराकृतः । इदानीं दृक्शक्तिः पुरुषः क्रियाशक्तिराहित्यात्पङ्गुः दृक्शक्तिशून्यमन्धं प्रधानं क्रियाशक्तिमदारुह्यान्योन्योपकाराय सृष्टिं कुर्वाते । अथवा । यथा अयःकान्तः सन्निधिमात्रेण लोहे क्रियामुत्पादयति, एवमेव पुरुषसन्निहितं सृजत इति पुरुषप्रेरितप्रधानकारणवादं निराकरोति । पुरुषेत्यादि । अत्रापि पूर्ववदनुषङ्गः । उक्तरीत्या पुरुषवदश्मवच्च प्रधानप्रेरणमङ्गीक्रियते इति चेत्, तथापि तस्मिन्नपि पक्षे प्रधानस्य कारणत्वेनानुमानं न कर्तुं शक्यम् । तत्र हेतुर्दोषतादवस्थ्यम् । तच्च प्रकरणबलादेव लभ्यत इत्यतो नोक्तम् । तेनायमर्थः । यदि पुरुषस्य प्रेरकत्वं स्वाभाविकम्, तदा प्रधानस्याप्रयोजकत्वान्न कारणत्वमिति कारणत्वभङ्गदोषस्तदवस्थः । यदि प्रधानकृतम्, तदा पूर्वोक्ता अचेतनत्वकृता दोषास्तदवस्था इत्युभयथाप्यसङ्गतः पक्ष इति । सूत्रयोजना तु पुरुषश्च अश्मा च पुरुषाश्मानौ ताभ्यामल्पसम्बन्धः पुरुषाश्मवत् । द्वन्द्वान्ते श्रूयमाणो वतिः प्रत्येकमभिसम्बध्यत इति ॥ ७ ॥

## अङ्गित्वानुपपत्तेश्च ॥ ८ ॥

अत्रैव दूषणान्तरमाह । अङ्गित्वेत्यादि । यत्तयोरन्योन्योपकारकत्वमङ्गीकृतम्, तत्तदा स्याद्यदि गुणप्रधानभावेनैकस्याङ्गत्वमन्यस्याङ्गित्वं स्यात्, तत्तु न सम्भवति । पुरुषस्याङ्गित्वे तस्य पुरुषान्तरवैलक्षण्यस्यावश्यकत्वात्तस्य च श्रौतधर्मवत्तयैव सम्भवेन ब्रह्मवाद-

प्रवेशात् । श्रौतधर्मानङ्गीकारेपि कालकर्मविपाकाशयैरपरामृष्टत्वस्य तत्रावश्यवक्तव्यतया योगिवदीश्वरसिद्ध्या मतहानिप्रसङ्गात् । यदि च तद्धिया प्रकृतेरङ्गित्वमाद्रियते, तदा तस्याः स्वातन्त्र्यात्तया पुरुषाय स्वदोषा न दर्शयितव्याः । तथा सति दुःखाभावेन पुरुषस्य विरागाभावात्कैवल्यार्थं प्रवृत्त्यभावेनानिर्मोक्ष इत्युभयथाप्यङ्गित्वानुपपत्तेः पूर्वोक्तः पक्षो न सङ्गत इत्यर्थः ॥ ८ ॥

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥ ९ ॥

नन्वन्यथा वयमनुमास्यामहे, यथा न कोपि दोषो भवति, गुणास्तावदन्योन्याभिभवान्योन्याश्रयान्योन्यजननान्योन्यमिथुनक्रियावत्त्वाचलस्वभावाः, तथा च गुणाः एवं विभागशः प्रवृत्तिमन्तः चलस्वभावत्वात् । चलद्लद्लवदिति प्रयोगात् । एवं सति तमसा रजःसत्त्वयोर्नियमने प्रलयः, रजसा तमोनियमने सृष्टिः, ससत्त्वेन तमोनियमने स्थितिः, एवमन्यान्यपि कार्याणि मिथुनीभावादिना । एवं सत्त्वोद्रेके तेन प्रकाशादात्मविवेके सति निर्मोक्ष इत्याशङ्कायामाह । अन्यथेत्यादि । अत्रापि पूर्ववदनुषङ्गः । चोप्यर्थे । एवमन्यथानुमितावपि न चेतनाधिष्ठितायाः प्रकृतेः कारणत्वस्यानुमानं शक्यम् । कुतः । ज्ञशक्तिवियोगात् । ज्ञानशक्तेस्तेष्वभावात् । एवं तत्तत्कालिकक्रियानुमितस्तेषां स्वभावस्तदा स्याद्यदि गुणेषु ज्ञानशक्तिः स्यात् । सा तु पुंप्रकृत्योः संयोगात्पूर्वं गुणसाम्यरूपायां प्रकृतौ न भवद्भिरङ्गीक्रियत इति कथं गुणप्रवृत्त्युपपत्तिः । न च दृष्टान्तबलादिति वाच्यम् । जीवत एवाश्वत्थस्य दलचलनात्तत्रापि चेतनाधिष्ठानानुमानात् । अन्यथा छिन्नाश्वत्थशाखाया अपि दलचलनं दृश्येत । अतोन्यथानुमितावपि न सिद्धिः । यदि च चेतनाधिष्ठानसार्वदिकत्वमङ्गीकृत्य प्रवृत्तिः साध्यते, तदा पुंप्रकृत्योर्नित्यविभुत्वेन तदधिष्ठानस्यापि नित्यत्वात्प्रलये च कालस्यापि त्वन्मते नाशाद्वियोजकस्याभावेनाङ्गित्वसूत्रोक्तरीत्या अनिर्मोक्षप्रसङ्गः । तस्मादसङ्गतोयमपि प्रकार इत्यर्थः ॥ ९ ॥

## विप्रतिषेधाच्चासमञ्जसम् ॥ १० ॥

सर्वपक्षसाधारणं दूषणमाह । विप्रतिषेधेत्यादि । ' केचित् षड्विंशतिं प्राहुरितरे पञ्चविंशतिम् । सप्तैके नवषट् केचिच्चत्वार्येकादशापरे । केचित्सप्तदश प्राहुः षोडशैके त्रयोदशेत्ये'कादशस्कन्धोक्तरीत्या साङ्ख्यमतवर्तिनां परस्परविरोधाच्चायुक्तं साङ्ख्यमतमित्यर्थः ॥ १० ॥ इति द्वितीयं पुरुषाश्मवदित्यधिकरणम् ॥ २ ॥

## महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥ ११ ॥ ( २-२-३. )

एवं साङ्ख्यमतं निराकृत्येदानीं नैयायिकादिसमयः सप्तसूत्र्या निराक्रियते । अत्र वाशब्दो विकल्पार्थः । कणभक्षाक्षचरणानुयायिनो हि नित्येभ्य उपादानभूतेभ्यः परमाणुभ्यो द्व्यणुकादिक्रमेण जगदुत्पत्तिमङ्गीकुर्वन्ति । अंशुभ्यस्तन्तूनां तन्तुभ्यः पटस्येति

सूक्ष्मादेव स्थूलोत्पत्तिदर्शनात् परमाणूनामवयवाङ्गीकारे चानवस्थापत्तेस्तत्रैव कारणताया विश्रान्तेः । तत्र जीवादृष्टसहकृतेश्वरेच्छावशात्परमाणुषु कर्मोत्पद्यते । ततस्ते परमाण्वन्तरेण संयुज्यमानाः प्रत्येकं द्व्यणुकरूपं कार्यमारभन्ते । परमाणुगुणाश्च द्व्यणुकगुणान् । परमाणुपरिमाणं च ह्रस्वं परितो मण्डलं च । तत्र परमाणुभ्यां द्व्यणुकारम्भे तद्गतद्वित्वसङ्ख्यया द्व्यणुकपरिमाणमपि ह्रस्वपरिमण्डलात्मकमारभ्यते । न तु महत्परिमाणम् । तस्य बहुत्वेन प्रचयविशेषेण वा भवनात् । द्व्यणुकारम्भकपरमाण्वोश्च तदभावात् । ततस्तेभ्यस्त्र्युण्यादिक्रमेण जगदुत्पत्तिरिति । तामिमां परमाणुकारणप्रक्रियां दूषयिष्यन्प्रथमं द्व्यणुकपरिमाणं दूषयति । महदित्यादि । परमाणुद्वयसंयोगे द्व्यणुकमुत्पद्यत इत्युक्तम् । तत्र ह्रस्वपरिमण्डलाभ्यां परमाणुभ्यामुत्पाद्यमानः संयोगो यद्युपर्यधो भावेन, तदा द्व्यणुकं महत्स्यात् । यदि प्राक्पश्चाद्भावेन, तदा द्व्यणुकं दीर्घवत्स्यात्, संयोगस्याव्याप्यवृत्तित्वनियमादित्यर्थः । एतस्य सूत्रस्याग्रिमेण सूत्रेण सहान्वयो वक्तव्यः । उपहासार्थमेतदनुवादः । य एवं लोकतत्त्वमपि न जानन्ति, ते कथमात्मतत्त्वं ज्ञास्यन्तीति ॥ ११ ॥

## उभयथापि न कर्मातस्तदभावः ॥ १२ ॥

नन्वेवं द्व्यणुकपरिमाणे दूषणेन किं सिद्धमत आह । उभयथेत्यादि । उपर्यधोभावेनाग्रपश्चाद्भावेन चेत्युभयथापि परमाणुसंघट्टनं न । परमाणौ प्रदेशाभावादसंयुक्तांशस्याभावेन द्व्यणुकस्यापि परमाणुभावापत्तेः । ननूभयोर्मेलनेऽस्माभिरपि परिमाणान्तरं न स्वीक्रियते, तथाप्याधिक्यं त्वदण्डवारितमतो न कोपि दोष इत्यत आह । न कर्मेति । नकारो देहलीदीपवदुभयत्र संबन्ध्यते । परमाणुद्वयसंयोगजनकं कर्मापि न सम्भवति, ईश्वरेच्छया तदनुगृहीतादृष्टवदात्मसंयोगेन वा परमाणुषु कर्माङ्गीकारे तेषां प्रलयदशायामपि सत्त्वेन तदानीमपि कर्मापत्त्या द्व्यणुकसत्त्वापत्तेः । प्रयत्नवदात्मसंयोगेन तदङ्गीकारस्त्वसङ्गतः । तदानीं शरीराभावात्तदानींतनात्ममनःसंयोगस्य ज्ञानेच्छाप्रयत्नाजनकत्वात् । अन्यथा मुक्तेष्वपि तदापत्तेः । प्रयत्नाभावे च तेषु कर्मायोगात् । अतस्तदभावः स्वरूपविरोधात् हेत्वभावाच्च द्व्यणुकस्यैवाभाव इति सिद्धमित्यर्थः । एवं च ह्रस्वपरिमण्डलाभ्यां परमाणुभ्यां जायमानं द्व्यणुकं महद्दीर्घवद्वा स्यादुभयथापि न, तज्जनकं कर्मापि न, अतो हेतुद्वयात्तदभावो द्व्यणुकस्याभाव इत्यन्वयो बोध्यः । तस्मादसङ्गतः परमाणुकारणवादः ॥ १२ ॥

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥ १३ ॥

अत्रापि तदभाव इत्यनुषज्जते । परमाणुद्व्यणुकयोः कारणकार्ययोः सम्बन्धस्य समवायस्याभ्युपगमादपि द्व्यणुकस्याभावः । समवायो ह्ययुतसिद्धयोः सम्बन्धः, अयुतसिद्धौ च तौ ययोर्द्वयोरनश्यदेकमपराश्रितमेवावतिष्ठते । स च सर्वेषामेको नित्यो

व्यापकश्चेत्यभ्युपगम्यते । एवमभ्युपगम्यमानः समवायः सम्बन्धत्वात्सम्बन्धिद्वयस्वरूपनिरूप्यः । सम्बन्धि च द्व्यणुकं न सदातनं असत्कार्यवादाभ्युपगमात् । अतः सृष्ट्यारम्भकाले समवायस्य वक्तुमशक्यत्वादपि द्व्यणुकस्याभावः । किञ्च । साम्यादनवस्थितेः । अभ्युपगम्यमानः समवायः सम्बन्धत्वात्संयोगेन तुल्यो वक्तव्यः । तथा सति संयोगस्य यथा सम्बन्धिनि स्थित्यर्थं सम्बन्धान्तरस्य समवायस्यापेक्षा, तथा समवायस्यापि स्थित्यर्थं सम्बन्धान्तरं वक्तव्यम् । ततश्च तस्यापि तस्यापीत्यनवस्थितिः । तथा चातोपि हेतोः समवायायोगात् द्व्यणुकाभाव इत्यर्थः । सिद्धान्ते तूपादेयस्योपादानेन सह तादात्म्यमेव सम्बन्धः प्रत्यक्षसिद्धः । घटादिकं मृदात्मकं कुण्डलादिकं सुवर्णात्मकमिति प्रत्यक्षेणैवावगमादतो न कश्चिद्दोषः ॥ १३ ॥

## नित्यमेव च भावात् ॥ १४ ॥

तदभाव इतीहाप्यनुषज्यते । सामग्रीसमवधानेऽवश्यं कार्योत्पत्तिः । प्रकृते च परमाणोः समवायिनः ईश्वरेच्छादेर्निमित्तस्य नित्यत्वेन तज्जन्यकर्मसंयोगयोरपि पूर्वमेव भावान्नित्यमेव सर्गापत्त्या परमाणुजन्यद्व्यणुकाभाव इत्यतोप्यसङ्गतः परमाणुकारणवाद इत्यर्थः ॥ १४ ॥

## रूपादिमत्वाच्च विपर्ययोऽदर्शनात् ॥ १५ ॥

एवं द्व्यणुकदूषणेन परमाणुकारणवादे निरस्तेपि यावत्तेषां नित्यत्वं न दूष्यते, तावदनन्यथासिद्धनियतपूर्ववर्तित्वरूपस्य तदीयस्य कारणलक्षणस्य परमाणुष्वभिमानेन स वादः पुनरुत्तिष्ठेदतस्तदभावाय परमाणुनित्यत्वं दूषयति । रूपादीत्यादि । यद्धि रूपादिमत्तदनित्यमिति व्याप्तेः विपर्ययः परमाणूनामप्यनित्यत्वम्, तथा च परमाणवो नित्याः, सत्त्वे सत्यकारणवत्त्वादाकाशवदिति साधने अनित्या रूपादिमत्त्वाद्घटादिवदिति प्रतिसाधनस्य सत्त्वात् । किञ्च । यद्रूपादिमत् तन्न परमाणुस्त्र्यणुकादिवदिति व्याप्तेस्तेष्वपरमाणुत्वरूपोपि विपर्ययः । न च प्रमाणबलेन परमाणुव्यतिरिक्त एव रूपादिमत्त्वानित्यत्वयोर्व्याप्तिरिति वाच्यम् । कुतः । अदर्शनात् । न हि परमाणुर्दृश्यते । येन त्वदुक्तस्याकारणवत्त्वस्य हेतोः पक्षधर्मतावसीयेत् । न च तज्ज्ञानेनुमितिः सम्भवति । अतः प्रमाणबलाभावान्न तथा वक्तुं शक्यम् । न च कार्यानुपपत्त्यापि तथा शङ्क्यम् । श्रुत्युक्तप्रक्रिययैव तत्सिद्धेः । अतः परमाणुकारणताया असङ्गतत्वमित्यर्थः ॥ १५ ॥

## उभयथा च दोषात् ॥ १६ ॥

दूषणान्तरमाह । उभयथेत्यादि । परमाणूनां रूपादिमत्त्वे अनित्यत्वं तद्राहित्ये कार्यगतरूपादीनां निर्मूलत्वमित्युभयथा दोषात् । चकारेण हरिद्राचूर्णमेलने विजातीयरूपदर्शनात्सजातीयारम्भकत्वनियमविरोधाच्चासङ्गतोयं वाद इत्यर्थः ॥ १६ ॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥ १७ ॥

एतन्मतस्य विशेषतो यद्दूषणं तत्प्रयोजनमाह । अपरिग्रहेत्यादि । शिष्टानां एतद्परिग्रहात् अत्यन्तं सर्वथा नापेक्ष्यते, अत एतस्य विशेषेण दूषणमित्यर्थः । चकारोधिकरणपूर्तिद्योतकः ॥ १७ ॥ इति तृतीयं महद्दीर्घवद्वेत्यधिकरणम् ॥ ३ ॥

एवं सप्तसूत्र्या वैशेषिकादिसमयो निराकृतः । अतः परमूनविंशतिभिर्बाह्यसमयो निराक्रियते । ते च बाह्याः षट् । चार्वाकाः १, वैभाषिकाः २, सौत्रान्तिकाः ३, योगाचाराः ४, माध्यमिकाः ५, आर्हताश्च ६ । तत्र बृहस्पतिप्रणीतलोकायतदर्शनानुसारिणो देहात्मवादिनः प्रत्यक्षैकप्रमाणवादिनः तन्मतमत्यसङ्गतत्वाद्व्यासचरणैरुपेक्षितम् । शेषेष्वाद्याश्चत्वारो बुद्धशिष्या वैनाशिकाः । तेत्रार्धवैनाशिकोत्तरं पूर्वं निराक्रियन्ते ।

## समुदाय उभयहेतुकेपि तदप्राप्तिः ॥ १८ ॥ ( २-२-४. )

तत्र चतुर्णामपि बौद्धानामध्यात्मांशे मतैक्यम् । बाह्ये तु वैभाषिकाः सर्वार्थान् प्रत्यक्षानुमानसिद्धान् सतः क्षणिकान् वदन्ति । सौत्रान्तिकास्तु बाह्यान्पदार्थान् ज्ञानानुमेयान्वदन्ति । योगाचारास्तु अर्थजन्यं क्षणिकविज्ञानमेव सत्यं अर्थास्त्वसन्तः स्वाप्नकल्पा इत्याहुः । माध्यमिकास्तु, न सन्नासन्न सदसन्न च सदसद्विलक्षणम् , किन्तु शून्यं सर्वमित्याहुः । तत्राद्या उभये समुदायद्वयं जीवभोगार्थं संहन्यत इति मन्यन्ते । तत्र परमाणुसमूहः पृथिव्यादिभूतचतुष्टयसमुदायो बाह्य एकः स पृथिव्यादिरूपेण संहन्यते । ततः पुनः स एव भौतिकसङ्घातहेतुतां प्रतिपद्यते । द्वितीय आभ्यन्तरश्चित्तचैत्तिकसमुदायः । स च रूपविज्ञानवेदनासंज्ञासंस्काराख्यस्कन्धपञ्चकसमुदायात्मकः । तत्र शरीरं रूपस्कन्धः । अहमित्याकारमिन्द्रियादिजन्यं ज्ञानं विज्ञानस्कन्धः । तदेव चित्तमालयविज्ञानेतिव्यवन्हियमाणं जीवः । प्रियाप्रियविषयस्पर्शे या सुखदुःखाद्यवस्था सा वेदनास्कन्धः । सविकल्पः प्रत्ययः संज्ञासंसर्गयोग्यः संज्ञास्कन्धः । रागादयः क्लेशा मदमानादय उपक्लेशा धर्माधर्मौ च संस्कारस्कन्धः । एवं बाह्याभ्यन्तरभेदभिन्नपुञ्जद्वयस्वीकारेण सकललोकयात्रानिर्वाहे सति नात्मा नित्यो नाप्यवयवी कश्चित् स्वीकार्यः । एते च बाह्याभ्यन्तराः सर्वेर्थाः क्षणिकाः । 'क्षणिकाः सर्वसंस्कारा ' इति बुद्धवचनात् । अयं च समुदायो नेश्वरहेतुकस्तदनङ्गीकारात् । किन्तु परमाणुपुञ्जःस्कन्धपञ्चकं चेत्युभयहेतुक इति तदुभयसङ्घातसम्बन्धे निर्वातस्थदीपवत्पूर्वोक्तक्षणिकविज्ञानात्मकस्य जीवस्य रूपवेदनासंज्ञासंस्कारस्कन्धात्मकः संसार आसंस्कारक्षयात्क्षणपरम्परयावतिष्ठते । क्षीणे तु संस्कारस्कन्धे तैलादिक्षये दीपवदेव निर्वाणमृच्छति । सेयमभावप्राप्तिरेव मोक्ष इति । तदिदं दूषयति । समुदायेत्यादि । उक्तरीत्या उभयहेतुकेपि समुदायेङ्गीक्रियमाणे तदप्राप्तिः, जीवस्य तादृशसंसाराप्राप्तिः । बुद्धवचसा सर्वेषां क्षणिकत्वाभ्युपगमात् तेषां

निर्व्यापारतया नश्वरतया च समुदायघटनानुपपत्त्या कथञ्चित्स्वभावेन समुदायघटनाङ्गीकारे वा तत्तद्विधशरीराणां पर्यायेण घटनायाः परिमाणभेदादेश्चानुपपत्त्या रूपस्कन्धसम्बन्धस्यासम्भवात्तन्मूलकस्य वेदनास्कन्धात्मकस्य संसारस्याप्राप्तिः । तथा चासङ्गतं पुञ्जस्य कारणत्वमित्यर्थः ॥ १८ ॥

## इतरेतरप्रत्ययत्वादिति चेन्नोत्पत्तिमात्रनिमित्तत्वात् ॥ १९ ॥

अत्रापि तदप्राप्तिरित्यनुषज्यते । क्षणिकत्वासमाधिं सूत्रांशेनाशंक्य, अंशान्तरेण परिहरति । इतरेतरेत्यादि । यदुक्तं सर्वक्षणिकत्वेन जीवस्य संसाराप्राप्तिरिति । तन्न । इतरेतरप्रत्ययत्वात् । हेतुं हेतुं प्रत्ययं ते गच्छन्तीति प्रत्ययाः साधारणकारणानि । इतरेतरं प्रत्यया इतरेतरप्रत्ययास्तेषां भावस्तत्त्वं तस्मात् । अयमर्थः । यद्यपि सर्वं क्षणिकं तत्र चाविद्यासंस्कारविज्ञाननामरूपषडायतनस्पर्शवेदनातृष्णोपादानभवजातिजरामरणशोकपरिवेदनादुःखदुर्मनस्त्वानामितरेतरकारणतया चक्रवत्परिवृत्तिः, तथापि न कारणव्यक्तिं प्रति कार्यव्यक्तेः कारणता । किन्तूत्तरोत्तरं प्रतिपूर्वपूर्वस्येत्येवमितरेतरप्रत्ययत्वादुत्तरोत्तरक्षणिकविज्ञानसन्ततिरूपस्य जीवस्य तादृशार्थसन्ततिरूपाणां रूपादिस्कन्धानां सम्बन्धात्मके संसारे तादृशसन्तत्यात्मकसंस्कारस्कन्धेन नानाविधशरीराणां तत्परिमाणादिभेदानां च सिद्धेः संस्कारविरामावेवाभावरूपमोक्षस्यापि सिद्धिर्न स्वत इति न पुञ्जस्य कारणतायां काप्यनुपपत्तिरिति चेत् । न । अस्त्यनुपपत्तिः । कुतः । उत्पत्तिमात्रनिमित्तत्वात् । ये हीतरेतरप्रत्ययाः पूर्वमुक्तास्ते उत्पत्तिमात्रं प्रतिनिमित्तभूताः स्वसदृशीं सन्ततिमुत्पाद्य नश्यन्ति । तथा सति विज्ञानसन्ततिरूपस्य जीवस्य पूर्वकालीनप्रियाप्रियसंस्पर्शाननुसंधानात्कथं वेदनादिस्कन्धात्मकसंसारसिद्धिः । अथानुसन्धानमपि कथञ्चिदुपगम्यते, तथा सति सन्तानिनः स्थिरत्वापत्त्या सर्वक्षणिकत्वप्रतिज्ञाभङ्गः । विज्ञानसन्ततिरूपस्य जीवस्य क्षणिकत्वेनास्थैर्याद्रूपादिस्कन्धसम्बन्धवियोगार्थं प्रयतनानुपपत्तिः । अर्थानां क्षणिकत्वेनास्थैर्यात्समुदायानुपपत्तिश्चेति संसाराद्यप्राप्तिरूपं दूषणं दुरुद्धरमित्यसङ्गता पुञ्जस्य कारणतेत्यर्थः ॥ १९ ॥

## उत्तरोत्पादे च पूर्वनिरोधात् ॥ २० ॥

अत्रापि पूर्ववदनुषङ्गः । ननु यथा दीपज्वाला उत्पद्यमानैव संहन्यते विषयीभवति च, तथा पदार्थान्तरमपि संहस्यत इति न समुदायानुपपत्तिः । विषयीभावाच्च नास्थैर्येपि संसाराद्यनुपपत्तिरित्यत आह । उत्तरेत्यादि । अयमर्थः । उत्पद्यमानस्य संहन्यमानत्वं वदता उत्पत्तिः पूर्वं विचार्या । उत्तरोत्पत्तिः किं पूर्वोत्पत्तिक्षणे किं वा पूर्वनाशक्षणे । नाद्यः, उत्पत्तिक्षण एव कार्यकारणाङ्गीकारे पूर्वापरभावाभावेन कार्यकारणभावविरोधादेकमपि न स्यादित्यनुत्पत्त्यापत्तेः । न द्वितीयः । उत्पन्नस्य स्थित-

स्यैवोत्पादकत्वदर्शनान्नश्यतस्तददर्शनादुत्तरोत्पत्तिसमये पूर्वनाशादुत्पादकाभावेनानुत्पत्त्यापत्तेः । तथा चोभयथाप्यसङ्गतत्वात्समुदायाप्राप्तिः संसाराद्यप्राप्तिश्च तदवस्थेत्यतोपि तथेत्यर्थः ॥ २० ॥

## असति प्रतिज्ञोपरोधो यौगपद्यमन्यथा ॥ २१ ॥

नन्वसत्यपि हेतावभावादेव फलोत्पत्तिरिति न कोपि दोष इत्यत आह । असतीत्यादि । असति हेतौ फलोत्पत्त्यङ्गीकारे प्रतिज्ञोपरोधः, चतुर्विधान् हेतून् प्रतीत्य चित्तचैत्ता उत्पद्यत इति प्रतिज्ञाया भङ्गः । चतुर्विधा हेतवस्तु आलम्बनप्रत्ययः समनन्तरप्रत्ययोधिपतिप्रत्ययः सहकारिप्रत्ययश्चेति । तत्रालम्बनप्रत्ययो नाम विषयः तेन चित्तस्य नीलाद्याकारता । समनन्तरप्रत्ययः पूर्वविज्ञानं तेन बोधरूपता । अधिपतिप्रत्यय इन्द्रियं तेन रूपादिग्रहणप्रतिनियमः । सहकारिप्रत्यय आलोकादिस्तेन गृहीतस्य स्पष्टार्थता । एवमेतैश्चतुर्भिर्हेतुभिर्नीलाद्याकारकविज्ञानात्मकं चित्तं चित्ताभिन्नहेतुजाश्चैत्ताः सुखादयश्चोत्पद्यन्ते । यदि ह्यसत्येव हेतौ फलोत्पत्तिरङ्गीक्रियते, तदेयं प्रतिज्ञा उपरुध्यते । अन्यथा । यद्यस्यां प्रतिज्ञायां वस्तुनः चतुर्विधहेतुप्राप्त्या क्षणान्तरसम्बन्धेनास्याः क्षणिकत्वप्रतिज्ञाभञ्जकत्वादियं नाद्रियते, तदा यौगपद्यम् । हेत्वभावस्य सर्वत्र सुलभत्वात्प्रतिबन्धाभावेन सर्वं सर्वत एकदैवोत्पद्येत । तथा चोभयथाप्यसङ्गतं सौगतमतमित्यर्थः ॥ २१ ॥

## प्रतिसङ्ख्याप्रतिसङ्ख्यानिरोधाप्राप्तिरविच्छेदात् ॥ २२ ॥

तदुक्तमुत्पत्तिप्रकारं दूषयित्वा नाशप्रकारं दूषयति । प्रतिसङ्ख्येत्यादि । प्रतिसङ्ख्यानिरोधो नाम भावानां बुद्धिपूर्वको विनाशः । तद्विपरीतो निर्हेतुकः स्वभावाद्वा जायमानोऽप्रतिसङ्ख्यानिरोधः । तयोरप्राप्तिः असम्भवः । कुतः । अविच्छेदात् । विशेषेण छेदः विच्छेदः निरन्वयध्वंसः तदभावात् । तव मते पदार्थानां सदृशसन्तानजननस्वभावतया, बुद्धेश्च परस्वभावनाशकतायाः क्वाप्यदृष्टतया सन्ततेरन्वयिरूपोच्छेदाभावेन सन्तानिनो निरन्वयध्वंसाभावात् प्रतिसङ्ख्यानिरोधासम्भवः । भावपदार्थमात्रस्य तव मते क्षणिकत्वेन क्षणिकानां च नाशकसम्बन्धस्य क्वाप्यदृष्टत्वेनान्त्यस्यापि क्षणिकतया स्थित्यभावे नाशकसम्बन्धाभावात्कर्मण इव द्रव्यादिसन्ततेरन्वयिरूपोच्छेदाभावेन निरन्वयध्वंसाभावादप्रतिसङ्ख्यानिरोधस्याप्यसम्भव इत्यर्थः ॥ २२ ॥

## उभयथा च दोषात् ॥ २३ ॥

पूर्वसूत्रे कार्यविचारेण दूषयित्वा स्वरूपविचारेणात्र तौ दूषयति । उभयथेत्यादि । अत्र पूर्वसूत्रात्साध्यांशोनुवर्तते । प्रतिसङ्ख्यानिरोधान्तर्गतो यो अविद्यानाशस्तस्मिन् सति मोक्ष इति क्षणिकवादिनो विज्ञानवादिनश्च मन्यन्ते । तत्र सपरिकराया अविद्याया निर्हे-

तुके विनाशेऽङ्गीक्रियमाणे अर्थचतुष्टयाभ्यासादिसाधनविधायकशास्त्रवैफल्यं द्वयोस्तुल्यम् । यदि स निरोधः सहेतुकोऽङ्गीक्रियते, तदा निर्हेतुकत्वप्रतिज्ञाहानिरपि द्वयोस्तुल्या । विज्ञानवादिमते विज्ञानातिरिक्तस्य सर्वस्य मिथ्यात्वान्नाश्यनाशकयोरप्यभावात्सहेतुको वक्तुमपि न शक्य इत्यधिकं दूषणम् । अतः सहेतुकत्वपक्षे निर्हेतुकत्वपक्षे च दोषान्निरोधद्वयस्याप्यप्राप्तिरित्यर्थः ॥ २३ ॥

## आकाशे चाविशेषात् ॥ २४ ॥

अतः परमाकाशं दूषयति । आकाश इति । अत्राप्यप्राप्तिरित्येकदेशोऽनुवर्तते । आकाशमप्यावरणाभावमात्रं निरुपाख्यमिति यदुक्तं तस्याप्राप्तिः । कुतः । अविशेषात् । यथा भूमौ घटो जले नौकेत्यादौ भूतान्तरे आधारत्वव्यवहारस्तथात्राकाशे गृध्रोऽत्र श्येन इति व्यवहारे भूतान्तरतुल्यतया अविशेषात् । तथा च नावरणाभावमात्रं निरुपाख्यं वा आकाशमिति तत्र तथात्वस्याप्राप्तिरित्यर्थः ॥ २४ ॥

## अनुस्मृतेश्च ॥ २५ ॥

एवं क्षणिकवादिसमयं विशेषतो निराकृत्येदानीं संक्षेपेण निराकरोति । अनुस्मृतेश्चेति । अत्राप्यप्राप्तिरित्येकदेशानुवृत्तिः । अनु पश्चात् स्मृतिरनुस्मृतिः प्रत्यभिज्ञानं तस्मादपि हेतोः क्षणिकवादस्याप्राप्तिः । अयमर्थः । क्षणिकवादी हि सर्वस्य क्षणिकत्वं मन्यमानोऽनुभवितुरनुभूतिविषयस्य सदृशसन्तानेन प्रत्यभिज्ञानमुपपादयति । तदसङ्गतम् । प्रत्यभिज्ञाने यः पूर्वं दृष्टः स एवायं पदार्थ इति । योऽहं पूर्वमद्राक्षं सोऽहमिदानीं पश्यामीत्याकारः, तत्र च स इत्यनेन पूर्वकालवर्तिनोऽयमहमित्यनेनोत्तरकालवर्तिनोऽनुभूतिविषयस्यानुभवितुश्चैक्यस्य परामृष्यमाणतया पूर्वापरकालवर्तिन एकस्य सिद्धत्वेन तत्र क्षणिकसन्तानस्य वक्तुमशक्यत्वात् । तथा च तत्तेदन्तादिसामानाधिकरण्यावगाहिप्रत्यभिज्ञानात्मकानुस्मृत्यन्यथानुपपत्त्या सिद्धे बाह्यार्थानामात्मनश्च स्थैर्ये सर्वोऽपि क्षणिकवादः सर्वत्र बाधित इत्यर्थः ॥ २५ ॥

## नासतोऽदृष्टत्वात् ॥ २६ ॥

वैनाशिकाभिमतं क्षणिकवादमष्टभिर्निराकृत्येदानीं 'नानुपमृद्य प्रादुर्भावा'दिति बुद्धसूत्रात्तदभिमतामभावाद्भावोत्पत्तिं निराकरोति । नासत इत्यादि । असतः अभावादलीकाद्वा भावोत्पत्तिर्न सम्भवति । कुतः । अदृष्टत्वात् । केवलस्य निःप्रतियोगिकस्यादृष्टत्वात् । अलीकादुत्पत्तेश्चादृष्टत्वात् । यत्र यत्र ह्यभावः कार्यजनकत्वेनोदाह्रियते अङ्कुरदधिघटाद्युत्पत्तिस्थले, तत्र तत्र बीजदुग्धमृत्पिण्डादिप्रतियोगिक एव दृश्यते । स च भावावस्थारूप एव । प्रतियोगिरूपभावविशेषणकत्वेन तदेकव्यङ्ग्यत्वात् । न क्वापि केवलः । अत उपमर्दस्थले तदवस्थाविशिष्टो भाव एव कारणम् । शशशृङ्गादिभ्य

उत्पत्तिस्तु न कस्यापि दृश्यत इति नोपमृद्य प्रादुर्भावस्थलेप्यभावस्यालीकस्य वा न कारणतेत्यर्थः ॥ २६ ॥

## उदासीनानामपि चैवं सिद्धिः ॥ २७ ॥

अभावकारणवाद एव दूषणान्तरमाह। उदासीनेत्यादि। च पुनः एवं अभावमात्रस्य केवलस्य कारणत्वे, उदासीनानां हलबीजबलीवर्दादिसाधनशून्यानामपि सिद्धिः कृष्यादिफलनिष्पत्तिः स्यादिति शेषः। अभावस्य सर्वत्र सुलभत्वात्। सा तु न दृश्यते, अतो नाभावस्य कारणतेत्यर्थः ॥२७॥ इति चतुर्थं समुदाय उभयहेतुकेपीत्यधिकरणम् ॥ ४ ॥

## नाभाव उपलब्धेः ॥ २८ ॥ ( २-२-५ )

एवं दशभिर्वैभाषिकसौत्रान्तिकयोर्मते निरस्ते विज्ञानवाद्यपि कारणांशे निराकृत एव। तथापि कार्यांशे तन्मतं पूर्वस्माद्विलक्षणमतस्तदपि निराचष्टे। नेत्यादि। यत्तेन ज्ञानं साकारमभ्युपगच्छता विचित्रवासनावशाच्च तादृशज्ञानोत्पत्तिमङ्गीकुर्वता बाह्यः प्रपञ्चो नास्तीत्यभाव इष्यते, स न युक्तः। कुतः। उपलब्धेः। इन्द्रियसन्निकर्षे बाह्यप्रपञ्चस्योपलभ्यमानत्वात्। अयमर्थः। यत्तेन ज्ञानं साकारमिष्यते, तत्किं सर्वाकारम्, उत यत्किञ्चिदाकारम्। आद्ये सर्वानेवाकारान्युगपदेव प्रकाशयेत्। द्वितीये त्वेकमेव प्रकाशयन्न कदापीतरं प्रकाशयेत्। न च समनन्तरप्रत्ययात्कादाचित्काकारसिद्धिः। उक्तदूषणस्य तत्प्रवाहेपि तौल्यात्। न च वासनावैचित्र्येणोपपत्तिः। सर्वमेव वैचित्र्यं युगपदेव प्रकाशयेत्। अतः आकारकादाचित्कत्वोपपत्तये बाह्योर्थोवश्यमभ्युपेयः। तस्मान्न तस्याभाव इति ॥ २८ ॥

## वैधर्म्याच्च न स्वप्नादिवत् ॥ २९ ॥

ननु विमतं नीलादिकं अस्ति, उपलभ्यमानत्वादयं हेतुरनैकान्तिकः। स्वप्नशुक्तिरजतादिदृष्टान्तेन तदभावस्यापि साधयितुं शक्यत्वादित्यत आह। वैधर्म्यादित्यादि। विमतं नीलादिकं अस्ति। उपलभ्यमानत्वेपि स्वप्नादिवैधर्म्यात्। वैधर्म्यं निर्हेतुकतात्कालिकान्यथाभावतदभावाभ्याम्, बाधाबाधाभ्यां दुष्टादुष्टकारणजन्यत्वाभ्यां बोध्यम्। प्रवृत्तेर्बाह्यत्वान्मोक्षार्थं स्वस्य प्रवृत्तेर्विघातोपि चकारेण सूच्यते। तस्मात्प्रपञ्चः सत्य इति सिद्धम् ॥ २९ ॥

## न भावोनुपलब्धेः ॥ ३० ॥

ननु वैधर्म्यमप्रयोजकम्। स्वप्नेपि स्वप्नान्तरवैधर्म्यदर्शनात्। अतो विचित्रवासनाभ्यो विचित्राणि ज्ञानानि तेभ्यः पुनस्ता इति चक्रवदनादिपरिवृत्त्यङ्गीकृतौ क्रिमपि न दूषणमिति शङ्कायां वासनां दूषयति। न भाव इत्यादि। वासनापरम्परायाः सद्भावः नोपपद्यते। कुतः। अनुपलब्धेः। अर्थं विना वासनानामनुपलब्धेः। अयमर्थः।

वासना नाम अनुभवजनितः स्मृतिजनकः संस्कारः, अनुभवश्चार्थजन्यः । यदि ह्यर्थं विनै-वानुभवो वासना वा स्यात्, तदा स्वप्नं दृष्ट्वोत्थितस्य तदनुभवजन्या वासनास्ताभ्यश्च तादृशानि विज्ञानान्येवानुवर्तेरन् । न तु तद्विसदृशानि जाग्रज्ज्ञानानि भवेयुः । तादृश-विज्ञानवासनोपमर्दकस्य बाह्यार्थस्य त्वन्मते अभावात् । दृश्यते त्वन्यथा । अतोर्थ-व्यतिरेकेण वासनाया अभावादर्थान्वयेनैव वासनोपलब्धेश्चान्वयव्यतिरेकाभ्यामर्थसिद्धेर्न बाह्यार्थापलापः शक्य इति नार्थं विना वासनेत्यर्थः ॥ ३० ॥

## क्षणिकत्वाच्च ॥ ३१ ॥

दूषणान्तरमाह । क्षणिकत्वादिति । वासनाजनकं प्रवृत्तिविज्ञानं पूर्वक्षणवृत्ति । तदाधारभूतमालयविज्ञानं तत्समानकालम् । तथा सति प्रवृत्तिविज्ञानेन यदा वासनोत्पाद्या, तदानीं प्रवृत्तिविज्ञानाधारस्यालयविज्ञानस्य नष्टत्वादाधाराभावेनापि वासनानुपपत्तिः । न च तत्सन्तानेनोपपत्तिः । विसदृशविज्ञानानुपपत्त्यादीनां दूषणानां प्रागेव व्युत्पादि-तत्वात् । तस्मादसङ्गतमेवेदं मतमित्यर्थः ॥ ३१ ॥

## सर्वथानुपपत्तेश्च ॥ ३२ ॥

किं बहुना । यथा यथा विचार्यते, तथा तथा सर्वप्रकारेणानुपपत्तिरेव स्फुरतीत्य-सङ्गतमेव सौगतं दर्शनमित्यर्थः । एतेनैव माध्यमिकमतमपि दूषितप्रायम् । स हि सत् असत् सदसद्विलक्षणमिति चतस्रोपि कोटीः विधूय शून्यमेव तत्त्वमाह । तत्र येन प्रमाणेन सकोटिचतुष्कं विधूय शून्यतां साधयति, तत्प्रमाणं सत् न वा, यदि सत्, तदा सर्वशू-न्यत्वप्रतिज्ञाहानिः । यदि न, तदा चतुर्थ्याः कोटेरविधूननादपि तथा, तदभावेन सर्वशू-न्यताया असिद्धत्वाच्चेति ॥ ३२ ॥ इति पञ्चमं नाभाव उपलब्धेरित्यधिकरणम् ॥ ५ ॥

## नैकस्मिन्नसम्भवात् ॥ ३३ ॥ (२-२-६)

एवं पञ्चदशभिः सौगतसमयो निराकृतः । इदानीं चतुर्भिरार्हतानां समयो निरा-क्रियते । एत एव क्षपणका दिगम्बरा जैनाश्चोच्यन्ते । एते ह्यन्तर्निष्ठाः प्रपञ्च उदासीनाः परेच्छया सर्वं वस्तु नित्यत्वानित्यत्वसत्त्वासत्त्वभिन्नत्वाभिन्नत्वादिभिरनैकान्तिकमिच्छन्तः सप्तभङ्गीनयं नाम न्यायमवतारयन्ति । स्यादस्ति, स्यान्नास्ति, स्यादस्ति च नास्ति च; स्यादवक्तव्यः, स्यादस्ति चावक्तव्यः । स्यान्नास्ति चावक्तव्यश्च, स्यादस्ति च स्यान्नास्ति चावक्तव्यश्चेति । ऐकान्त्यस्य सप्तभङ्गा घाता यस्मिन् असौ सप्तभङ्गी । सर्वे पदार्थाः केनचित्सदिति केनचिदसदिति केनचित्सदसदिति केनचिदनिर्वाच्यमिति सत्त्वेनानि-र्वाच्यमिति, असत्त्वेनानिर्वाच्यमिति सदसत्त्वेनानिर्वाच्यमित्येवं तेन तेन पुरुषेणोच्यमाना नैकान्तत ऐकरूप्येण निर्धारयितुं शक्यन्तेऽतः सर्व एव नैकान्ततो निश्चिताकाराः । स्याच्छब्दोभीष्टार्थः । तथा च सर्वेप्याकाराः सर्वत्राभीष्टा इति । तद्दूषयति । नेत्यादि ।

अयं सप्तभङ्गी नयो न सङ्गच्छते। कुतः। एकस्मिन्नसम्भवात्। सप्तानां भङ्गानामेकस्मिन् काल एकस्मिन् पदार्थे असम्भवात्। न हि यद्यदास्ति, तत्तदा नास्तीति सम्भवति। सार्वजनीनप्रत्यक्षविरोधात्। न च घटो घटरूपेणास्ति पटादिरूपेण नास्तीत्येवं सम्भवत्येव भङ्ग इति वाच्यम्। तत्रास्तिनास्त्योर्विषयभेदादैकान्त्याभञ्जकत्वेन भङ्गत्वस्यैवाभावात्। तस्मादयुक्तमेवेदं दर्शनम्। ब्रह्मणि तु शब्देन विद्वत्प्रत्यक्षेण च प्रमितत्वादपरिगणितगुणत्वाच्च न श्रौते मते किञ्चिद्दूषणम्॥ ३३॥

## एवं चात्माकार्त्स्न्यम्॥ ३४॥

प्रपञ्च उदासीनतया तद्दूषणाङ्गीकारे दूषणान्तरमाह। एवमित्यादि। एवं च एवमपि सति प्रापञ्चिकदूषणाङ्गीकारेपि सति आत्माकार्त्स्न्यम्। वस्तुपरिच्छेदाङ्गीकारादसर्वत्वम्। त्वया हि जीवोस्तिकायेषु गण्यते। अस्तिकायशब्दश्चानेकदेशवर्तिद्रव्यवाचकत्वेन परिभाष्यते। वस्तुपरिच्छेदे च सर्वस्मिन्नात्मनोऽसत्त्वात्तस्यास्तिकायत्वहानिः। यद्वा। अकार्त्स्न्यं कृत्स्नशरीरतुल्यत्वाभावः। तथा च पूर्वोक्तदूषणाङ्गीकारेपि शरीरपरिमाणात्मवादिनस्तव सर्वेषां शरीराणामेकपरिमाणाभावेन आत्मनस्तत्तुल्यत्वाभाव इत्यर्थः॥ ३४॥

## न च पर्यायादप्यविरोधो विकारादिभ्यः॥ ३५॥

देहपरिमाणात्मवाददूषणे समाधिमाशङ्क्य परिहरति। न चेत्यादि। न च जीवो नानाविधशरीरेषु तत्तत्कर्मभिः प्रविशंस्ततो निर्गच्छन्नपि तत्तच्छरीरावयवोपचयापचयानुसारेण स्वावयवोपचयापचयाभ्यां पर्यायाख्यान् क्रमिकादवस्थाविशेषात् पर्यायाक्रमाद्वा तत्तत्परिमाणस्याविरोधोपि न च, नैव, कुतः। विकारादिभ्यः विकारसावयवत्वानित्यत्वानां प्राप्तेः। तथा चानित्यत्वापातेनि बन्धमोक्षाङ्गीकारो बाध्येतेत्यर्थः॥ ३५॥

## अन्त्यावस्थितेश्चोभयनित्यत्वादविशेषः॥ ३६॥

दूषणान्तरमाह। अन्त्येत्यादि। अन्त्यस्य मोक्षावस्थावस्थितजीवपरिमाणस्य अवस्थितेः अवस्थानात् अनपायात्। चोप्यर्थे। पूर्वोक्तदोषपरिहारायापि उभयनित्यत्वात्। उभयोः संसारमोक्षावस्थयोर्जीवपरिमाणस्य नित्यत्वम्। न ह्येकस्य वस्तुनः कदाचित्परिमाणं नित्यं कदाचिदनित्यमिति वक्तुं शक्यते, लोके तथा अदर्शनात्। अतोऽवस्थाद्वयेपि परिमाणस्य नित्यत्वात् अविशेषः देहपरिमाणात्माऽसिद्ध्या न त्वदभिमतसिद्धिः। तथा चासङ्गतमेवेदं दर्शनमित्यर्थः॥३६॥ इति षष्ठं नैकस्मिन्नसंभवादित्यधिकरणम्॥६॥

एतेषु षट्स्वप्यधिकरणेषु तत्तत्स्मृतिविरोधेन ब्रह्म जगदुपादानं न वेति सन्देहे, नेति पूर्वः पक्षः। सर्वसमयानामयुक्तत्वाद्ब्रह्मैवोपादानमिति सिद्धान्तो बोध्यः। षष्ठे तु, ब्रह्मैव विरुद्धधर्माधारं नेतरदिति नियमो युज्यते न वेति सन्देहे, स्याद्वादिभिः सर्वत्र

तथाभ्युपगमान्नेति पूर्वः पक्षः । स्याद्वादस्यासङ्गतत्वात् श्रुत्या भक्तप्रत्यक्षेण च तथा प्रमितत्वाद्युक्त एव नियम इति प्रकारान्तरमधिकं ज्ञेयम् ।

## पत्युरसामञ्जस्यात् ॥ ३७ ॥ ( २-२-७ )

पराभिप्रेतान् जडजीवान्निराकृत्य पराभिप्रेतमीश्वरं निराकरोति, अणुमात्रस्यापि वेदविरोधस्य दुष्टत्वबोधनाय । अत्र पत्युरितिपदमेवाधिकरणभेदबोधकम् । पूर्वोक्तेषु मतेषु पत्युरभावात्, तेन स्मार्तस्य पत्युर्निराकरणमिदानीं प्रस्तूयत इत्यर्थः । तत्र तावद्गौतमीयैरौलूकैर्हैरण्यगर्भैः पातञ्जलैः शैवपाशुपतकालामुखकापालिकभेदेन चतुर्विधैर्माहेश्वरैश्चेश्वरो निमित्तकारणत्वेनाङ्गीक्रियते, न तूपादानत्वेनापि । तेषामयमाशयः । चेतनस्य खल्वधिष्ठातुः कुलालादेः स्वस्वकार्ये कुम्भादौ निमित्तत्वमात्रं दृष्टम्, न तूपादानत्वमपि । अत ईश्वरोपि जगतो निमित्तमेव, न तूपादानम् । एकस्मिन्नेवैकस्य निमित्तत्वोपादानत्वयोर्विरुद्धत्वादिति । तदिदं दूषयति । पत्युरित्यादि । अत्र पूर्वाधिकरणारम्भसूत्रान्नशब्दोनुवर्तते । यदेतैस्तार्किकादिभिः केवलं निमित्तकारणत्वेनेश्वर इष्यते, तन्न । कुतः । पत्युरसामञ्जस्यात् । पत्युरीश्वरस्य केवलनिमित्तत्वे असामञ्जस्यात् वैषम्यनैर्घृण्यादिभिः सर्वसमत्वनिवृत्त्या लौकिकेश्वरवत्सदोषत्वापत्तेः । तथा च श्रुतिमनादृत्य दृष्टानुरोधे इदं महादूषणमापततीत्यसङ्गतं तन्मतमित्यर्थः ॥ ३७ ॥

## संबन्धानुपपत्तेश्च ॥ ३८ ॥

दृष्टानुसारेण दूषणान्तरं वदति । संबन्धेत्यादि । अत्र पत्युरितिपदं विभक्तिविपरिणामेनानुषज्जते । तार्किकादिभिरङ्गीकृत ईश्वरो जीवानां पतिर्न । कुतः । संबन्धानुपपत्तेः नियम्यनियामकभावप्रयोजकस्य संबन्धस्यानुपपद्यमानत्वात् । तथा हि । निमित्तमात्रत्वाङ्गीकारान्न जीवेश्वरयोः समवायः । उभयोरपि विभुत्वेन कर्मावयवयोरभावान्न संयोगः । नाप्यजः संयोगः । अनुपलब्धिनिरस्तत्वात् । नापि स्वरूपसंबन्धः । स्वरूपस्य नित्यविभुत्वादिभिस्तुल्यत्वेन तस्य नियम्यनियामकभावाप्रयोजकत्वात् । अतः संबन्धानुपपत्तेर्न जीवानां पतित्वेनेश्वरस्य सिद्धिरित्यर्थः ॥ ३८ ॥

## अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

दूषणान्तरं पुनरप्याह । अधिष्ठानेत्यादि । अत्रापि पूर्ववदनुषङ्गः । तार्किकाद्यभिमतः पतिर्न । कुतः । अधिष्ठानानुपपत्तेः । अधिष्ठानं शरीरं तदनुपपत्तेः । स हि कर्तृत्वेन कल्प्यमानः शरीरी कल्पनीयः । तथा सति तच्छरीरस्य कर्ता कश्चित्कल्प्यः । शरीरस्य जन्यत्वनियमात् । कर्ता तु न वक्तुं शक्यते । सृष्ट्यादौ जीवानां निःशरीरतया असमर्थत्वात् । दृष्टसामग्रीविरहे केवलजीवादृष्टस्याप्यकिञ्चित्करत्वात् । निःशरीरत्वादेवेश्वरोपि न स्वशरीरकर्ता । न च तन्नित्यं निरवयवम्; अदर्शनात्तथात्वासिद्धेः । अधि-

ष्ठानपदे आधारस्यापि सङ्ग्रहः । आकाशादेर्नित्यद्रव्यस्याधारत्वानुपपत्तेरपि न निरधिष्ठानकर्तृत्वेन सिद्धिरित्यर्थः ॥ ३९ ॥

## करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

अधिष्ठानराहित्यस्यादोषत्वमाशङ्क्य परिहरति । करणवदित्यादि । करणवदिति द्वितीयार्थे वतिः । तथा च यथा शरीररहितोपि जीवो मनश्चक्षुरादिकं करणग्राममधितिष्ठति, स्वस्वकार्ये प्रेरयतीति यावत्, तथा ईश्वरोपि जीवानधिष्ठास्यतीति चेत् । न । कुतः । भोगादिभ्यः भोगादिदोषप्रसक्तेः । यथा हि करणान्यधितिष्ठन् जीवः पुण्यपापाभ्यां सुखदुःखरागद्वेषादिभाग्भवति, तथेश्वरोपि स्यात् । तत्र तदसंसर्गे नियामकाभावात् । इदानीमपि निरतिशयैश्वर्यस्यासिद्धत्वात् । अतो नानेनापि दृष्टान्तेनाधिष्ठानसम्भव इत्यर्थः ॥ ४० ॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

दूषणान्तरादपि तार्किकसमयो न युक्त इत्याह । अन्तवत्त्वेत्यादि । जडजीवयोर्नियमनार्थं हीश्वरोभ्युपगम्यते, नियमनं चेयत्तायां सम्भवति, अतस्तेषामियत्ताङ्गीकार्या । तथा सति तेषामन्तवत्त्वम्, इयत्तापरिच्छिन्नेषु घटादिष्वन्तवत्त्वस्य दृष्टत्वात् । यदि चैतद्भिया जीवानां व्यापकत्वादसङ्ख्येयत्वाच्च नेयत्ताङ्गीक्रियते, तदा असङ्ख्येयस्य सर्वाज्ञेयत्वनियमात्सर्वतद्विषयकज्ञानस्येश्वरे अभावेनासर्वज्ञता स्यात् । अत उभयथापि दोषादसङ्गतस्तार्किकसमय इत्यर्थः ॥ ४१ ॥ इति सप्तमं पत्युरसामञ्जस्यादित्यधिकरणम् ॥ ७ ॥

## उत्पत्त्यसम्भवात् ॥ ४२ ॥ ( २-२-८ )

अथ भागवते मते कञ्चिदंशं निराचष्टे तस्यांशस्य श्रुतिविरुद्धत्वख्यापनाय । न च मोक्षधर्मे 'पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायणः स्वय'मिति वाक्यात्तस्य भगवत्कृतत्वेन कथं तत्र श्रुतिविरोधः सम्भवतीति शङ्क्यम् । कौर्मे चतुर्दशाध्याये गौतमशप्तमुनिविमोहनाय कृतानां शास्त्राणां मध्ये 'पाञ्चरात्रं पाशुपतं तथान्यानि सहस्रश' इति पञ्चरात्रस्यापि गणनया तत्रापि तावतोंशस्य मोहनार्थं बुद्धिपूर्वं स्थापनेन तत्सम्भवस्य युक्तत्वात् । न च 'साङ्ख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा । आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभि'रिति मोक्षधर्मीयविरोधः । 'अक्षपादप्रणीते च काणादे साङ्ख्ययोगयोः । त्याज्यः श्रुतिविरुद्धोंशः श्रुत्येकशरणैर्नृभि'रिति पराशरोपपुराणोक्तदिशा तावदंशव्यतिरिक्तांशे हेतुभिर्न हन्तव्यानीति तदर्थेनाविरोधात् । एतेषां सर्वेषामात्मप्रमाणानां भगवदेकनिष्ठत्वे प्रमाणत्वम्, पुरःस्फूर्तिकान्यार्थग्रहणे त्वप्रमाणत्वमिति मोक्षधर्मे तत्रैव निष्कर्षाच्च । एवं सिद्धे विरुद्धांशे सोंश उदाह्रियते । ते हि वासुदेवः परं ब्रह्म तस्मात्सङ्कर्षणो जीवस्तस्मात्प्रद्युम्नो मनस्तस्मादनिरुद्धोहङ्कार इत्येवमुत्पत्तिप्रक्रियां वदन्ति । चतुर्णामी-

श्वरत्वं च । तदत्र दूष्यते । उत्पत्त्यसम्भवादिति । उत्तरसूत्रस्थो नकारोत्राप्यन्वेति । यदत्र जीवस्योत्पत्तिरुच्यते । तन्न । कुतः । उत्पत्त्यसम्भवात् । जीवस्य जन्यत्वाङ्गीकारे अनित्यत्वापत्त्या मोक्षसाधनशासनवैफल्यप्रसङ्गेन 'न जायते न म्रियत' इति श्रुतिविरोधेन च उत्पत्तेरयुक्तत्वात् ॥ ४२ ॥

## न च कर्तुः करणम् ॥ ४३ ॥

दूषणान्तरमाह । न चेत्यादि । यदुच्यते सङ्कर्षणसंज्ञकाज्जीवात्प्रद्युम्नसंज्ञं मन उत्पद्यते, प्रद्युम्नसंज्ञकान्मनसोनिरुद्धसंज्ञकोहङ्कार इति, तदपि न । कुतः । लोके कर्तुः सकाशात्करणोत्पत्तेरदर्शनात् करणादपि कार्यान्तरादर्शनाच्च ॥ ४३ ॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

अथोच्यते सर्वे एते विज्ञानादिमन्तः परमेश्वरा एव, तथा सति विरुद्धधर्माधारत्वान्न कोपि दोष इति । तत्राह । विज्ञानेत्यादि । उक्तरीत्या विज्ञानादीनामीश्वरधर्माणां तेषु सद्भावे तदप्रतिषेधस्तेषामनियमनम् । तथा सत्यनेकेश्वरत्वापत्तिरित्यर्थः ॥ ४४ ॥

## विप्रतिषेधाच्च ॥ ४५ ॥

शाण्डिल्यश्चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा इदं शास्त्रमधीतवानित्यादिरूपवेदनिन्दासूचितात्तद्विरोधाच्च । तथा चैतेभ्यो दोषेभ्य एतावानंशो न युक्त इत्यर्थः । तथा च वेदविरुद्धानां स्मृतीनामप्रामाण्यान्न ताभिः स्वतः किञ्चित्फलमिति सिद्धम् ॥ ४५ ॥ इत्यष्टममुत्पत्त्यसंभवादित्यधिकरणम् ॥ ८ ॥

इति श्रीमद्वल्लभाचार्यचरणैकतानश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचितायां ब्रह्मसूत्रवृत्तौ द्वितीयाध्यायस्य द्वितीयः पादः ॥

---

अथ द्वितीयाध्यायस्य तृतीयः पादः ।

## न वियदश्रुतेः ॥ १ ॥ ( २-३-१ )

द्वितीये पादे श्रुतिविरुद्धस्मृतिनिराकरणेन तद्विरोधस्याकिञ्चित्करत्वख्यापनात्तेन वैदिकवाक्ये प्रमेयविरोधो नापादयितुं शक्यत इति प्रतिपादितम् । तृतीये पादे श्रुतिवाक्यानां विप्रतिषेधपरिहाराय तेषां परस्पराविरोधः प्रतिपाद्यते । न चास्य प्रथमपादेन गतार्थता, तत्र ब्रह्मस्वरूपे तद्धर्मेषु च यो विरोधस्तस्य परिहारात् । अत्र तु जडानां जीवानां संबन्धी यो विरोधः स परिह्रियते इति तदभावात् । न च ब्रह्मजिज्ञासायाः प्रतिज्ञातत्वात्तदतिहायैतद्विचारस्य किं प्रयोजनमिति शङ्क्यम्, ब्रह्मवादे जडजीवयोरपि

ब्रह्मात्मकत्वात् । न च तथापि मुख्यं विहायास्य करणे किमावश्यकमिति शङ्क्यम् । जन्माद्यधिकरणविषयपरिशोधनार्थत्वेन मुख्योपयोगितयास्यावश्यकत्वात् । अतो द्वितीये प्रासङ्गिकं परिहृत्य प्रस्तुतस्य श्रुत्यविरोधस्यैव पुनर्विचारोऽवसरप्राप्तोऽस्मिन्पादे विधीयते । तत्र जीवविचारे प्रयासाधिक्यात्सूचीकटाहन्यायेन पूर्वं जडविचार आरभ्यते । जडानां सृष्टिर्वेदान्ते द्विधा । भूतभौतिकं सर्वं ब्रह्मणः सकाशादेव विस्फुलिङ्गन्यायेन साक्षादुत्पद्यत इत्येका विधा । वियदादिक्रमेणोत्पद्यत इत्यपरा । न च सर्वस्य ब्रह्मरूपत्वे अजत्वस्यावश्यकत्वात् तथा सत्युत्पत्तेरभावात्सृष्टिरेवासङ्गतेति वाच्यम् । अनामरूपात्मनोऽर्थस्य नामरूपवत्त्वेनाभिव्यक्तेरेव सृष्टितया तस्या अजत्वाविरोधित्वात् । सा च जडयैव प्रलये प्रतिनियतनामरूपत्यागेन सर्वेषां जडानामेव ब्रह्मण्येकीभावात् । जीवानां तु स्वरूपतिरोभावाभावेनाविभागेऽपि स्वरूपतादवस्थ्यात् । न चैवं सति ब्रह्मणो जीवकारणत्वाभावः । विभागद्वारा कारणत्वस्य सिद्धेः । 'अनित्ये जननं नित्ये परिच्छिन्ने समागमः । नित्यापरिच्छिन्नतनौ प्राकट्यं चेति सा त्रिधे'त्यभियुक्तप्रसिद्धेराविर्भावशक्तेस्त्रैविध्यात् । एवं च कालविशेषे प्रतिनियतनामरूपशालित्वं कार्यत्वम् । सर्वदातच्छालित्वादिकं च नित्यत्वमिति फलति । एवं सिद्धायां सृष्टौ क्रमिकायां तस्यां सन्देहः । छान्दोग्ये 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय'मित्युपक्रम्य, 'तदैक्षत तत्तेजोऽसृजते'ति तेजोबन्नसृष्टिरुक्ता, न वाय्वाकाशयोः । तैत्तिरीये तु 'ब्रह्मविदाप्नोति पर'मित्युपक्रम्य 'तस्माद्वा एतस्मादात्मन आकाशः सम्भूत' इत्यादिना आकाशादिकोक्ता । तत्र किमाकाश उत्पद्यते, न वा । तत्र तावत् नोत्पद्यत इति प्राप्तम् । कुतः । अश्रुतेः । अत एवौलूकादिदर्शनेषु तदवयवानङ्गीकारोऽपि । न च साङ्ख्यादिदर्शनेषु तामसाहङ्कारात्तदुच्यत इति स एव तदवयवस्थानीय इति युक्तम् । श्रौतानां वादिनां तद्विरुद्धाङ्गीकारस्यायुक्तत्वात् । श्रुतौ ब्रह्मण एव सर्वत्र कारणत्वात् । अतस्तस्मादीक्षापूर्वकसृष्टिबोधके छान्दोग्यवाक्ये तदुत्पत्तेरनुक्तत्वादाकाशो नोत्पद्यत इति ॥ १ ॥

अतः समादधानः सिद्धान्तमाह ।

## अस्ति तु ॥ २ ॥

तुशब्दः पूर्वपक्षं व्यावर्तयति । अस्ति वियदुत्पत्तिस्तैत्तिरीयके । यद्यपीक्षापूर्वकसृष्टिः सा न भवति, तथापि तदुक्तादरणे ईक्षापूर्विकायां कस्यचन विरोधस्याभावात्तदुक्तमपि ग्राह्यमेव । एकविज्ञानेन सर्वविज्ञानप्रतिज्ञाया अनुरोधात्तैत्तिरीयस्येक्षाकाङ्क्षित्वे छान्दोग्यस्थस्य चाकाशादिसाकाङ्क्षत्वेऽवधारिते द्वयोः क्रमसृष्ट्यैकार्थ्येनैकवाक्यत्वसिद्धेश्च ॥ २ ॥

## गौण्यसम्भवात् ॥ ३ ॥

सूत्रत्रयेण पुनः पूर्वपक्षं वदन्ननुत्पत्तिं समर्थयति। वियदुत्पत्तिरावरणनिवारणेनाभिव्यञ्जनाद्गौणी भविष्यति । कुतः । असम्भवात् । लोके हि सावयवस्यैवोत्पत्तिर्दृश्यते, आकाशस्य तु निरवयवत्वात्समवाय्यभावेनासमवायिनस्तद्द्वयसंयोगस्याप्यभावेन निमित्तभूतादीश्वराज्जीवादृष्टाच्च केवलादुत्पत्तिर्न वक्तुं शक्यते । किञ्च । व्यापकस्योत्पत्तिः प्रत्यक्षविरुद्धा । किञ्च । ब्रह्मणो अमूर्तत्वात्तेनाकाशावरणस्याप्यशक्यवचनत्वात्सृष्टेः पूर्वमाकाशाभावोपि न वक्तुं शक्यः । अतो निरवयवत्वविभुत्वाभ्यामसम्भवात्सा गौणी, ब्रह्मप्रशंसार्थमुच्यते, यथा गोअश्वप्रशंसार्थमन्ये त्वपशव इति । लोकेप्यवकाशं कुर्विति गौणप्रयोगदर्शनाच्चेत्यर्थः ॥ ३ ॥

ननु श्रुत्यपेक्षया लोकस्य दुर्बलत्वात् स्वर्गादिफलकतया पूर्वकाण्डस्यापि लोकानुरोधित्वात्तदादायोत्तरकाण्डव्याकुलीकरणमनुचितमित्यत आह ।

## शब्दाच्च ॥ ४ ॥

'वायुरन्तरिक्षं च एतदमृत'मिति। 'आकाशवत्सर्वगतश्च नित्य' इत्यमृतत्वनित्यत्वबोधकाच्छब्दादपि गौणीत्यर्थः ॥ ४ ॥

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

ननु तैत्तिरीयोक्ताया वियदुत्पत्तेर्गौणत्वं न वक्तुं शक्यम्। तत्र सम्भूत इत्येकस्यैव पदस्योत्तरत्रावर्तनादेकत्र गौण्यग्रे मुख्येत्यङ्गीकारे युगपद्वृत्तिद्वयविरोधापत्तेरित्याशङ्कायामाह। स्यादित्यादि। इयमाशङ्का न कार्या । यत एकस्यापि ब्रह्मशब्दस्य 'तपसा ब्रह्म विजिज्ञासस्व, तपो ब्रह्मे'ति श्रुतौ प्रथमवाक्ये मुख्या, द्वितीये गौणी दृश्यते, तद्वदत्रापि सम्भवात्। न च तत्र प्रयोगभेदोस्ति, नात्र, सम्भूतशब्दस्यैकस्यैव प्रयुज्यमानत्वात्, अतो न स दृष्टान्त इति शङ्क्यम्। अत्रापि वाक्यान्तरे सम्भूतशब्दस्य पुनरावर्तनेनैवान्वयस्य भवनेन प्रयोगभेदस्यात्रापि सत्त्वात् । तस्माद्गौण्येवाकाशसम्भूतिश्रुतिरित्येवं प्राप्ते तत्परिहरति ॥ ५ ॥

## प्रतिज्ञाहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

यद्याकाशोत्पत्तिश्रुतिर्गौणीत्यङ्गीक्रियते, तदा शब्देभ्यः प्रतिज्ञाहानिः 'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञात'मित्यादिशब्देभ्यः सिद्धाया एकविज्ञानेन सर्वविज्ञानस्य प्रतिज्ञायाः हानिः। प्रतिज्ञापदे सुपां सुलुगिति षष्ठ्यालुक्। कथं तस्याः हानिरित्यत आह। अव्यतिरेकात्। कार्यत्वेन रूपेण व्यतिरिक्तत्वाभावात्। अयमर्थः। छान्दोग्यवाक्यं हि तवोपजीव्यम्। तत्र या एकविज्ञानेन सर्वविज्ञानप्रतिज्ञा, साग्रे 'यथा सोम्य एकेन मृत्पि-

ण्डेने'त्यादिना प्रकृतिविकारभावेन व्युत्पाद्यते । यद्याकाशो नोत्पद्येत, तदा तस्य ब्रह्मविकारत्वाभावात् स ब्रह्मविज्ञानेन न विज्ञायेत । न च स्वरूपसंबन्धेनाकाशस्य ब्रह्मसंबद्धत्वात्तस्यापि ज्ञानं सुशक्यमिति वाच्यम् । तथा सति तस्य ज्ञानस्योभयमहिम्ना जायमानत्वेनैकविज्ञानजन्यत्वाभावाद्व्युत्पादनग्रन्थविरोधाच्च प्रतिज्ञाहानितादवस्थ्यमेव स्यात् । न च जीववदंशत्वेन तस्य ज्ञानं भविष्यतीति वाच्यम् । अंशस्य लौकिकज्ञानाविषयत्वात्, आकाशस्य च तद्विषयत्वेनांशत्वस्याशक्यवचनत्वादिति ॥ ६ ॥

## यावद्विकारं तु विभागो लोकवत् ॥ ७ ॥

नन्वाकाशो नोत्पद्यते, निरवयवत्वात् व्यापकाच्च, यदेवं तदेवं ब्रह्मवत्, यन्नैवं तन्नैवं घटादिवदिति प्राक्सूचितस्यानुमानस्य न परिहारः, तदभावे च न गौण्या अपि निवृत्तिरित्यत आह । यावदित्यादि । तुशब्द आकाशोत्पत्त्यसम्भावनां वारयति । इयं शंका न कार्या । कुतः । यावद्विकारं सकले विकारे विभागोस्ति । लोकवत् । यथा लोके विकृतं मात्रमुत्पद्यते, तथाकाशोपीति । अत्र व्याप्तिदृष्टान्तयोरुपन्यासात्प्रत्यनुमानं दर्शितम् । आकाश उत्पद्यते विकृतत्वात् । विकृतो लौकिकव्यवहारविषयत्वात् । यदेवं तदेवं घटादिवत् । यन्नैवं तन्नैवमीश्वरवदिति । तथा च पूर्वोक्तानुमानस्य सत्प्रतिपक्षत्वान्न तेनाकाशस्यानुत्पन्नत्वसिद्धिरित्यर्थः । न 'चाकाशवत्सर्वगतश्च नित्य' इति श्रुतौ ब्रह्मोपमानत्वेनाच्यमानस्याकाशस्य व्यापकत्वनित्यत्वयोः श्रावणात्तद्विरोध इति शङ्क्यम् । 'समोनेन सर्वेणे'त्यत्र सर्वस्य भगवदुपमानताया भगवतः सर्वपरिमाणत्वज्ञापन इवास्यापि भगवतो नित्यविभुत्वज्ञापन एव तात्पर्यात् । न च सादृश्यं विना उपमानताया असम्भव इति शङ्क्यम् । लोकदृष्ट्या सादृश्यमादाय तत्सम्भवात् । न चात्र मानाभावः । 'न तत्समश्चाभ्यधिकश्च दृश्यते, न तस्य प्रतिमा अस्ती'ति साम्यनिषेधश्रुते'र्ज्यायानाकाशा'दिति नभोज्यायस्त्वश्रुतेश्च तत्र मानत्वात् । एवं वाक्यान्तरेपि बोध्यम् । तस्मादीदृशां वाक्यानामज्ञबोधनार्थत्वान्न तैराकाशनित्यत्वसिद्धिरिति सोप्युत्पद्यत इति सिद्धम् ॥ ७ ॥ इति प्रथमं न वियदित्यधिकरणम् ॥ १ ॥

## एतेन मातरिश्वा व्याख्यातः ॥ ८ ॥ ( २-३-२ )

'म्लोचन्ति ह्यन्या देवता न वायुः सैषानस्तमिता देवता यद्वायु'रिति बृहदारण्यके वायोरनस्तमितत्वश्रावणादनुत्पन्नत्वस्यापि सिद्धेः श्रुतिविप्रतिषेधात्सन्देहे, भूतात्मा वायुर्नोत्पद्यते । छान्दोग्ये तदश्रुतेरिति पूर्वपक्षे आह । एतेनेत्यादि । एतेनाकाशोत्पत्तिसमर्थनेन मातरिश्वा मातर्यन्तरिक्षे श्वयति गच्छतीति मातरिश्वा वायुर्व्याख्यातश्छान्दोग्योक्तप्रतिज्ञानुरोधिनीभिः पूर्वोक्तयुक्तिभिरुत्पत्तिमत्त्वेन समर्थित इत्यर्थः ॥ ८ ॥ इति द्वितीयं मातरिश्वेत्यधिकरणम् ॥ २ ॥

## असम्भवस्तु सतोनुपपत्तेः ॥ ९ ॥ ( २-३-३ )

ननु 'हरितो रोहितादासीद्धुन्धुस्तस्याभवत्सुत' इत्यादिपुराणवाक्येष्वस्तेरुत्पत्त्यर्थकत्वदर्शना'त्सदेव सोम्येदमग्र आसी'दिति श्रुतावप्यस्तेरुत्पत्त्यर्थकत्वस्य शक्यवचनत्वादाकाशवद्ब्रह्मणोऽप्युत्पत्तिरस्त्विति वैतण्डिकशङ्कायामाह । असम्भव इत्यादि । तुरुक्तशङ्कानिरासे । सतः सन्मात्रस्य उत्पत्तेरसम्भवः । न हि कार्योत्पत्तिदृष्टान्तेन कारणस्याप्युत्पत्तिर्वक्तुं शक्यते । न हि कुण्डलोत्पत्तौ कनकोत्पत्तिः । नामरूपविशेषाभावात् । किञ्च, 'तुष्यतु दुर्जन' इतिन्यायेन स्वीक्रियमाणाया अपि तस्या असम्भवः । कुतः । अनुपपत्तेः । सा किं स्वतोन्यतो वा । नाद्यः । असम्भवात् । नान्यः । अनवस्थापत्तेः । अतो यदेव मूलं तन्नित्यमिति तदेव ब्रह्मेति तस्य नोत्पत्तिरित्यर्थः ॥ ९ ॥ इति तृतीयमसंभव इत्यधिकरणम् ॥ ३ ॥

## तेजोतस्तथा ह्याह ॥ १० ॥ ( २-३-४ )

तेजः किं साक्षात् ब्रह्मणः सकाशादुत्पद्यते, उत परम्परयेति सन्देहः । छान्दोग्यतैत्तिरीयश्रुती परस्परविरोधात्सन्देहोत्पादिके । तत्र छान्दोग्यश्रुतेरीक्षापूर्वकत्वेन मुख्यत्वात्साक्षात्पक्ष एव श्रेयानित्यत आह । तेजोत इत्यादि । तेजः अतः वायुत एवोत्पद्यते । कुतः । तथा ह्याह । 'वायोरग्नि'रिति श्रुतिः हि यतो हेतोः तथा वायोरेव सकाशात्तेजस उत्पत्तिमाह तस्मात् । अयमर्थः । छान्दोग्यवाक्यं प्रतिज्ञासिद्ध्यर्थं तैत्तिरीयमपेक्षत इति साधितम् । तथा सति तस्य तैत्तिरीयमुपजीव्यमिति निर्विवादम् । तत्र या पञ्चमी वायुपदे, सा चेदानन्तर्ये, तदा ब्रह्मणः सकाशाद्वाय्वनन्तरं तेज उत्पन्नमित्यर्थो भवति। यदा तु सा हेतौ, तु (तदा) वायोः सकाशादित्यर्थो भवति। यद्यप्युभयथापि प्रतिज्ञा सिध्यति, तथाप्यात्मन इति प्राथमिकी पञ्चमी हेतौ, 'पृथिव्या ओषधय' इत्यादावपि प्रत्यक्षानुरोधादित्यग्रेपि हेताविति हेतोरेव प्रायपाठो युक्तः, नानन्तर्यस्य । अत्र च 'तत्तेजोऽसृजते'ति साक्षादुच्यते, अत उभयसामञ्जस्यार्थं वायुभावापन्नाद्ब्रह्मणः सकाशात्तेजस उत्पत्तिः । एवमाकाशभावाद्वायोरित्यपि ज्ञातव्यमिति ॥ १० ॥ इति चतुर्थं तेजोऽत इत्यधिकरणम् ॥४॥

## आपः ॥ ११ ॥ ( २-३-५ )

तथा ह्याहेति पूर्वसूत्रादनुवर्तते । तथा च आपस्तेजस उत्पद्यन्ते । हि यतो हेतोः श्रुतिद्वयमपि तथाह 'तेज ऐक्षत तदपोऽसृजते'ति 'अग्नेराप' इति च । अतो नात्र किञ्चिद्विचार्यमित्यर्थः । अन्ये तु, अतः शब्दस्याप्यनुवृत्तिमिच्छन्ति । सूत्रप्रयोजनं त्वविरोधख्यापनं, श्रुतौ क्वापि न विरोध इति ॥ ११ ॥ इति पञ्चममाप इत्यधिकरणम् ॥ ५ ॥

## पृथिव्यधिकाररूपशब्दान्तरेभ्यः ॥ १२ ॥ ( २-३-६ )

'ता आप ऐक्षन्त बह्व्यः स्याम प्रजायेमहीति ता अन्नमसृजन्ते'ति। अत्र सन्देहः।

किमन्नशब्देन पृथिव्युच्यत, उत व्रीह्यादय इति। यद्यप्युपजीव्ये तैत्तिरीयवाक्ये अद्भ्यः पृथिवीत्युक्तम्, तथापि 'पृथिव्या ओषधय ओषधीभ्योन्न'मित्यग्रे दर्शनाद्यथा तैत्तिरीयानुरोधादाकाशवायुव्यवधानं तेजसोभ्युपगतम्, तथा पृथिव्योषधिव्यवधानमन्नस्याङ्गीकर्तुं शक्यते, रूढिश्च स्वीकृता भवतीति गुणः, तथापि भूतप्रायपाठत्यागोनपेक्षितभौतिकग्रहणं च दोषः। पृथिवीग्रहणे तु रूढित्यागो महान् दोष इत्यतः पक्षद्वयसाम्यं तत्र बीजम्। पूर्वपक्षस्तु, अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वा'गित्यप्तेजसोः सहचारात्पृथिवी लोकप्रसिद्धेर्व्रीह्यादिकम्। 'तस्माद्यत्र क्वचन वर्षति तदेव भूयिष्ठमन्नं भवती'ति वर्षणभूयिष्ठलिङ्गादोषधयोप्यत्र सम्भवन्ति। अद्यत इत्यन्नमिति योगोपि त्रिषु तुल्यः। कीटादिषु मृद्भक्षणस्य पशुष्वोषधिभक्षणस्य पुरुषादिष्वन्नभक्षणस्य दर्शनात्। अतोत्र यौगिकमन्नपदं त्रयाणां सङ्ग्राहकमतस्त्रयमपि ग्राह्यम्, न त्वेकं किमपि। एवं सत्युपजीव्यवाक्यप्रायपाठरूढीनां त्रयाणामप्यविरोधादिति। तत्रोच्यते। अन्नपदेन पृथिव्येव ग्राह्या। नान्यद्द्वयम्। कुतः। अधिकाररूपशब्दान्तरेभ्यः। अधिकारः प्रस्तावः, स भूतानामेव, न भौतिकानाम्। 'यत्कृष्णं तदन्नस्ये'त्यनेनोक्तं नीलं रूपमपि पृथिव्या एव, भूतसहपाठात्। 'अद्भ्यः पृथिवी'ति शब्दान्तरम्। तेभ्यो हेतुभ्य इत्यर्थः। एतैर्योगनैर्बल्यं परिह्रियते। लक्षणा तु नास्त्येव, अतोन्नपदेन पृथिव्येवात्रोच्यत इति सिद्धम् ॥ १२ ॥ इति षष्ठं पृथिव्यधिकारेत्यधिकरणम् ॥ ६ ॥

## तदभिध्यानादेव तु तल्लिङ्गात्सः ॥ १३ ॥ ( २-३-७ )

एवं तैत्तिरीयश्रुत्येकवाक्यतया छान्दोग्येपि क्रमेण ब्रह्मणः सकाशात्पञ्चमहाभूतसृष्टिरित्यवधारितम्। तत्र संशयः। क्रमसृष्टावाकाशादयः किं स्वतन्त्राः स्वस्वकार्यं सृजन्ति, उत परमेश्वरतन्त्रा इति। तत्र तावत् प्राप्तम्। 'आकाशाद्वायुः वायोरग्नि'रिति तैत्तिरीये, 'तत्तेज ऐक्षत बहु स्या'मिति छान्दोग्ये भूतानां देवतायाश्च हेतुत्वस्य कर्तृत्वस्य कथनात्त आकाशादयः स्वतन्त्रा एव सृजन्तीति। एवं प्राप्ते, अभिधीयते। तदभिध्यानादित्यादि। तुशब्द उक्तपूर्वपक्षव्युदासार्थः। स एव परमात्मा वाय्वादीन् सृजति। तर्ह्याकाशादिशब्दैः कथमभिधानं इत्यत आह। तदभिध्यानादिति। 'बहु स्यां प्रजायेये'ति श्रुत्या सङ्ग्रहेणोक्तात् आकाशरूपः स्याम्, वायुरूपः स्यामित्यादिरूपात्स्वस्य तत्तद्रूपभवनाभिध्यानात्। न चाभिध्यानस्य तेजःप्रभृतिसाधारण्यान्न तस्य ब्राह्मतत्पदाभिधानलिङ्गत्वमिति शङ्क्यम्। तेजःप्रभृतिष्वपि तत्पदोपनिबन्धेन प्रकरणेन च तस्य ब्रह्मधर्मत्वनिश्चयात्। अतस्तस्य तस्य कार्यस्योत्पादनार्थं तदभिध्यानं ततस्तदात्मकत्वं तेन च तच्छब्दवाच्यत्वमित्युपपत्तेः। ननु यथाश्रुतमेव कुतो न गृह्यत इत्यत आह। तल्लिङ्गादिति। सर्वत्र वेदान्तेषु 'स विश्वकृद्विश्वविदात्मयोनिः। यतः प्रसूता जगतः प्रसूती।' 'यः पृथिव्यां तिष्ठन् यः पृथिवीमन्तर' इत्यादिषु सर्वकर्तृत्वरूपाद्ब्रह्मलिङ्गात्। तथा चातो यथा

श्रुतार्थस्याग्रहणमित्यर्थः । एतेन जडतो देवताया वा यत्कार्यं जायमानं दृश्यते, तत्सर्वं ब्रह्मण एव तत्तदात्मकाज्जायत इति सिद्धम् ॥ १३ ॥ इति सप्तमं तदभिध्यानादेवेत्यधिकरणम् ॥ ७ ॥

## विपर्ययेण तु क्रमोत उपपद्यते ॥ १४ ॥ (२-३-८)

ननु तैत्तिरीये छान्दोग्ये सृष्टेः क्रमो निरूप्यते । न तु प्रलयस्य । नैयायिकास्तु समवाय्यसमवायिकारणनाशात्कार्यनाशमङ्गीकुर्वन्ति, तत्किमादरणीयं क्रमसृष्टाविति संशये, नैयायिकमतस्य लौकिकत्वात्, मुण्डकश्रुतौ 'यथा सुदीप्तात्पावकाद्विस्फुलिङ्गाः सहस्रशः प्रभवन्ते सरूपाः, तथाऽक्षराद्विविधाः सौम्य भावाः प्रजायन्ते तत्र चैवापियन्ती'त्यत्र यौगपद्येनैवाप्ययश्रावणाच्छ्रौतं यौगपद्यमादरणीयमि'ति प्राप्तम्, तत्राह । विपर्ययेणेत्यादि । तुः उक्तशङ्कानिरासे । क्रमसृष्टौ येन क्रमेणोत्पत्तिर्न तेन क्रमेण प्रलयः, किन्तु तद्विपरीतः प्रलये क्रमः । अतो ब्रह्मणः सकाशादुत्पत्त्यनन्तरं यतस्तत्रैव प्रलयः । ननु तथापि बुद्धौ कथमारोहेत्, तत्राह । उपपद्यते इति । न ह्यत्र युगपत्सृष्टिपक्षो येन यौगपद्यमाद्रियेत । नापि वैशेषिकादिवद् ध्वंसपक्षो येन तदुक्तमाद्रियेत । अत्र तु श्रौतः सत्कार्यवादः, उत्पत्तिप्रलयौ तु निर्गमप्रवेशौ, अतो येन क्रमेण निर्याति, तद्विपरीतक्रमेण प्रविशतीति विपरीतक्रम एवोपपद्यते, नान्य इत्यर्थः ॥ १४ ॥ इत्यष्टमं विपर्ययेणेत्यधिकरणम् ॥ ८ ॥

## अन्तरा विज्ञानमनसी क्रमेण तल्लिङ्गादिति चेन्नाविशेषात् ॥ १५ ॥

नन्वत्र तैत्तिरीयानुसारेण छान्दोग्यस्थं महाभूतोत्पत्तिवाक्यं विचारितम् । अतः परं जीवमनसोरप्युत्पत्तिक्रमो वक्तव्यः । छान्दोग्ये 'अनेन जीवेनात्मनानुप्रविश्ये'ति, 'षोडशानां कलानामेका कलातिशिष्टासी'दिति तयोः सिद्धवन्निर्देशादित्याशङ्कायामाह । अन्तरेत्यादि । पूर्वं तैत्तिरीयैकवाक्यतया छान्दोग्यवाक्यं विचारितम् । एवं सति छान्दोग्ये सिद्धवन्निर्देशेपि तैत्तिरीये आकाशाद्यन्नपर्यन्तमुत्पत्तिमुक्त्वा ततोन्नमयादयो निरूपिताः । तत्रान्नमयस्यान्नरसमयत्वादिदमा तन्निर्देशाच्च तत्कारणसामग्री ओषध्यन्नरूपा । तत आन्तरः प्राणमयः तत्सामग्री वाय्वाकाशपृथिवीरूपा, तच्छिरःप्रभृतिकथने प्राणव्यानापानाकाशपृथिवीनामेवोक्तत्वात् । एवमेतद्द्वयसामग्री 'ओषधिभ्योन्न'मित्यन्तेन पूर्वमुत्पन्नोक्ता । आनन्दमयस्तु परमात्मा मूलकारणम् । स तु 'तस्माद्वा एतस्मादात्मन' इति मूलकारणत्वादात्मपदेनैवोक्तः । अतः परं मनोमयविज्ञानमयाववशिष्येते । तत्र छान्दोग्यैकवाक्यतास्मारणाय विपरीतक्रमेणाह । अनन्तरा विज्ञानमनसी इति । मध्ये विद्यमाने विज्ञानमनसी किं भूतेभ्यः पूर्वमुत्पन्ने, उत पश्चादिति वक्तव्यम् । तत्र पूर्वपक्षी आह । क्रमेण तल्लिङ्गादिति । पूर्वमात्मनः सकाशादाकाशोत्पत्तिकथनेप्यत्रानन्दमयनिकटे विज्ञानमयः दूरे मनोमयस्ततोपि दूरे आकाशादिघटितः प्राणमय उक्तः, अतोग्रे परमात्मनिकटे वचन-

रूपात्तयोर्लिङ्गादाकाशात्पूर्वं मनस्तस्मादपि पूर्वं जीव इति । तद्दूषयन् सिद्धान्तमाह । इति चेन्नाविशेषादिति । एवं न वक्तव्यम् । कुतः । अविशेषात् । एतयोर्नामरूपविशेषाभावात् । छान्दोग्ये जीवस्यात्मपदेन विशेषितत्वात् । तैत्तिरीये च तन्निगमनश्लोके 'ब्रह्मज्येष्ठमुपासत' इति ब्रह्मत्वेन कथनात् । मनसोपि छान्दोग्येऽन्नेन पोषणस्यैवाभिप्रेततया तज्जन्मनोऽनभिप्रेतत्वात् । तैत्तिरीये तस्य वेदरूपतायाः स्फुटत्वाच्च । अतस्तयोरुत्पत्तिर्न वक्तव्येत्यर्थः । नन्वत्रान्तःकरणबहिःकरणानामुत्पत्तिक्रमः कुतो न विचारित इति शङ्क्यम् । प्रश्नोपनिषदि स 'प्राणमसृजत प्राणच्छ्रद्धां खं वायुर्ज्योतिरापः पृथिवीमिन्द्रियं मनोन्न'मिति श्रावणेनासन्दिग्धत्वादिति ॥ १५ ॥

## चराचरव्यपाश्रयस्तु स्यात्तद्व्यपदेशो भाक्तस्तद्भावभावित्वात् ॥१६॥

ननु मनोमयस्य वेदस्य विज्ञानमयजीवस्य चानुत्पत्तिर्न युक्ता, तदनुत्पत्तौ सर्वव्यवहारोच्छेदप्रसङ्गात् । व्यवहारमात्रस्य तदधीनत्वात् । न हि जीवं विना संसारी वा मुमुक्षुर्वा कर्मज्ञानभक्त्यधिकारी वा कश्चिद्भवेत् । न वा वेदं विना धर्माधर्मादिकमसङ्कीर्णमवगन्तुं शक्येत । अतस्तयोरुत्पत्तिर्वक्तव्येत्यत आह । चराचरेत्यादि । चरमचरं च चराचरे स्थावरजङ्गमे शरीरे तयोः शरीरयोर्व्यपाश्रयः समागमहेतुकः संबन्धः । स तु जीवस्य स्यात् । 'जायमान' शरीरमभिसम्पद्यमान उत्क्रमिष्यन् म्रियमाण' इति श्रुत्या सम्पत्त्युत्क्रमाभ्यां देहसम्बन्धेनैव जननमरणयोरुक्तत्वादिति । ननु यदि जीवस्य समागममात्रम्, नोत्पत्तिः, तदा जातकर्मादिसंस्काराभावप्रसङ्गः । न हि ते शरीरस्य क्रियन्ते । तथा सति मृतकोत्पत्तावपि कर्तव्याः स्युः । अतस्तस्याप्युत्पत्तिः स्वीकार्येत्यत आह । तद्व्यपदेशो भाक्त इति । तयोर्जन्ममरणयोर्यो जीवे व्यपदेशः, देवदत्तो जातो, देवदत्तो मृत इत्यभिलापः, स तु भाक्तः, शरीरस्य जन्ममरणशालित्वात्तत्संबन्धेन लाक्षणिकः । ननु येन लाक्षणिकत्वमुच्यते, स संबन्धो लक्षणारूपः, को वेत्यत आह । तद्भावभावित्वादिति । तस्य भावस्तद्भावः शरीरेऽहमित्यभिमानस्तेन भवति व्याप्तस्तिष्ठति तच्छीलस्तद्भावभावी तत्त्वात् । तथा च शरीराभिमानरूपः संबन्धो लक्षणारूपः, तद्धेतुकत्वेन जातादिप्रयोगस्य भाक्तत्वम्, जातकर्मादिसंस्काराणां च देहविशिष्टविषयत्वमित्यर्थः । एवं जीवस्य देहसंबन्धेनैवोत्पत्तिमत्त्वम्, न तु स्वत इति सिद्धम् ॥१६॥ इति नवममन्तरा विज्ञानमनसीत्यधिकरणम् ॥९॥

## नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः ॥ १७ ॥ ( २-३-१० )

ननु पूर्वं नामरूपविशेषसंबन्धाभावाज्जीवस्य नोत्पत्तिरित्युक्तम्, तत्र नियामकं किमप्यस्ति, न वेति शङ्कानिरासायाधिकरणान्तरमारभते । तत्र जीवस्यैव देवदत्तादि नाम, न शरीरमात्रस्य । मृते देवदत्ते गयाश्राद्धादिकरणानुपपत्तेः । एवं नामसंबन्धे तत्र सिद्धे सोप्युत्पद्यते इति प्राप्तम्, तत्राह । नात्मेत्यादि । आत्मा जीवो नोत्पद्यते । कुतः । अश्रुतेः ।

जीवोत्पत्तिबोधकश्रुत्यभावात्। लोकेपि देवदत्तो जात इति देहोत्पत्तिरेवाभिलप्यते, न तु तद्व्यतिरेकेणात्मनः। 'अङ्गादङ्गात्सम्भवसि हृदयादधिजायस' इत्यादिश्रुतावपि देहोपलक्षित एव जीवः प्रतीयते,अतः श्राद्धादिशास्त्रेपि देहोपलक्षित एव ग्राह्यः। अन्यथा तु देहवदनित्यतायां पुत्रेष्टिगयाश्राद्धादिविप्लवप्रसङ्गात् । प्रेतादिपूर्वजन्मकथनाद्यनुपपत्तेश्च । अतो देहस्यैव जन्मादिधर्मवत्त्वात्तत्संबन्धेनैव जीवस्य जन्मादिव्यपदेश इति निश्चयः। विस्फुलिङ्गवद्व्युच्चरणं तु नोत्पत्तिः । नामरूपविशेषसंबन्धाभावात् । नामरूपान्तरसंबन्धस्यैवोत्पत्तित्वम्, न केवलस्य व्युच्चरणस्येत्यत्र किं गमकमिति शङ्क्यम् । 'यथोर्णनाभस्तन्तुनोच्चरेदि'त्यव्यवहितपूर्वमुक्तस्य दृष्टान्तस्यैव गमकत्वात् । अन्यथैकेन निर्वाह इतरवैयर्थ्यप्रसङ्गात्। अतस्तन्तूनां नामरूपसंबन्धादयं दृष्टान्तः प्राणादीनां नामरूपान्तरसंबन्धवतामुत्पत्तिबोधको, विस्फुलिङ्गदृष्टान्तस्तु जीवानां व्युच्चरणमात्रबोधक इत्यास्थेयम् । ननु दृष्टान्तस्यान्यथापि नेतुं शक्यत्वान्नैतावन्मात्रेण निर्वाह इत्यत आह । नित्यत्वाच्च ताभ्य इति । ताभ्यः 'अयमात्माऽजरोऽमरः ।' 'न जायते न म्रियते वा विपश्चित् ।' 'नित्यो नित्यानाम् ।' 'अजो नित्यः शाश्वतोयं पुराण' इत्यादिश्रुतिभ्यो नित्यत्वादपि । तथा च न जीवस्योत्पत्तिरित्यत्र श्रुतिरेव नियामिकेति सिद्धम् ॥ १७ ॥ इति दशमं नात्माऽश्रुतेरित्यधिकरणम् १०

## ज्ञोत एव ॥ १८ ॥ ( २-३-११ )

अतः परं जीवस्य गुणान् विचारयन् प्रथमतश्चैतन्यं गुणमाह । ज्ञ इति । जानातीति ज्ञः । ज्ञानधर्मा । यो यद्गुणकः, स तदात्मक इति व्याप्तेः समन्वयसूत्रे साधितत्वात् ज्ञानस्वरूप इत्यपि । कुतः । अत एव । 'विज्ञातारमरे केन विजानीयात्' । 'न पश्यो मृत्युं पश्यति ।' 'एष हि द्रष्टा श्रोता मन्ता रसयिते'त्यादिभ्यः, 'अन्योन्तर आत्मा विज्ञानमयः विज्ञानं यज्ञं तनुत'इत्यादिभ्यः श्रुतिभ्य इत्यर्थः । तेन काणभुजानामिव न केवलं चिद्धर्मा। नापि साङ्ख्यवत्केवलं चिद्रूपः । किन्तु चिद्धर्मा चिद्रूपश्चेति सिद्धम् ॥ १८ ॥ इत्येकादशं ज्ञोऽत एवेत्यधिकरणम् ॥ ११ ॥

## उत्क्रान्तिगत्यागतीनाम् ॥ १९ ॥ ( २-३-१२ )

अतः परं जीवस्य परिमाणं विचार्यते । शारीरकब्राह्मणे 'स वा एष महानज आत्मे'ति, कौशीतकीब्राह्मणे च 'योयं विज्ञानमयः पुरुषः प्राणेष्वि'ति श्रावणेन, श्वेताश्वतरे च 'आराग्रमात्रो ह्यवरोपि दृष्ट' इति, 'बालाग्रशतभागस्य शतधा कल्पितस्य च भागो जीवः स विज्ञेयः, स चानन्त्याय कल्पत' इत्यणुत्वश्रावणेन सन्देहात् , बहुभिः सांख्यनैयायिकादिभिर्जीवस्य व्यापकत्वाङ्गीकाराद्व्यापक एव जीव इति प्राप्ते, आह । उत्क्रान्तीत्यादि । अत्र पूर्वसूत्रादत एवेत्यनुवर्तते । ततः पूर्वस्मादात्मेति च । सूत्रयोजना तु, जीवात्मा, उत्क्रान्तिगत्यागतीनां संबन्धी । कुतः । अत एव । उत्क्रान्त्यादिबोधक-

श्रुतित एवेति । उत्क्रान्तेः श्रुतिस्तु कौशीतकिब्राह्मणे प्रतर्दनाख्यायां 'स यदाऽस्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामती'ति । गतिश्रुतिरपि तत्रैव गाङ्ग्यायनिश्वेतकेतुसंवादे । 'ये के चास्माल्लोकात्प्रयान्ति चन्द्रमसमेव ते सर्वे गच्छन्ती'ति । आगतिश्रुतिस्तु बृहदारण्यके शारीरब्राह्मणे । 'तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' इति । तथा च व्यापकत्व उत्क्रान्त्यादिक्रियाबोधकश्रुतीनां पीडापत्त्या न तथा, किन्त्वणुरेवेत्यर्थः ॥१९॥

## स्वात्मना चोत्तरयोः ॥ २० ॥

ननूत्क्रान्तिगत्यागतयो लिङ्गविशिष्टस्यैव, न केवलस्येति, यथा स्थूलशरीरोपाधिना जन्ममरणव्यपदेश औपचारिकः, तथा लिङ्गशरीरोपाधिक उत्क्रान्तिव्यपदेशोपीत्यत आह । स्वात्मनेत्यादि । जीवात्मा स्वात्मना स्वस्वरूपेण चकारादिन्द्रियैः सहापि उत्तरयोः गत्यागत्योः संबन्धी । अत एव । तद्बोधकश्रुतिभ्य एवेत्यर्थः । तास्तु । 'ऊर्णनाभिर्यथा तन्तून्सृजते सञ्चरत्यपि । जाग्रत्स्वप्ने तथा जीवो गच्छत्यागच्छते पुन'रिति ब्रह्मोपनिषदि । 'अनेन जीवेनात्मनाऽनुप्रविश्ये'ति छान्दोग्ये । 'ब्रह्मैव सन् ब्रह्माप्येती'ति बृहदारण्यके । 'कामरूप्यनुसञ्चर'न्निति तैत्तिरीये भृगूपनिषदि । एवमेतासु चतसृषु जीवस्य षडवस्थाः प्रदर्शिताः । तत्र जाग्रत्युपाधिपरिष्वङ्गादिन्द्रियैः सह गत्यागतिसंबन्धी । स्वप्ने त्विन्द्रियाणां लयेन साक्षिण एव केवलस्य स्वयंज्योतिष्ट्वात्स्वात्मनैव । सृष्टावप्येवम् । अनुप्रवेशस्योपाधिसंवन्धघटकत्वादनुप्रवेशदशायां केवल एवेति स्वात्मना । अप्ययः सुषुप्तेरप्युपलक्षकः । तत्राप्युपाधिलयात्तथा । मुक्तौ तु प्राणो नास्ति, बुद्धिरपि नास्तीत्येवं स्वात्मना गत्यागतिसंबन्धाज्जीवः स्वतोणुरेवेत्यर्थः ॥ २० ॥

## नाणुरतच्छ्रुतेरिति चेन्नेतराधिकारात् ॥ २१ ॥

व्यापकत्वमाशङ्क्य परिहरति । नेत्यादि । जीवात्मा नाणुर्भवितुमर्हति । कुतः । अतच्छ्रुतेः । बृहदारण्यके 'स वा एष महानज आत्मे'ति । कौशीतकीब्राह्मणसमाप्तौ 'योयं विज्ञानमयः प्राणेष्वि'त्यणुत्वविरुद्धमहत्त्वसर्वप्राणव्याप्तृत्वश्रुतेरिति चेत् । न । एताभ्यामणुत्वाभावो न सिध्यति । कुतः । इतराधिकारात् । इतरस्य परब्रह्मणः अधिकारात्, प्रस्तावात् । आद्यायाः ब्रह्मप्रकरणस्थत्वं 'सुषुप्त्युत्क्रान्त्योर्भेदेने'त्यत्र व्युत्पादितम् । द्वितीयस्याः समाप्तौ 'इदं सर्वं यदयमात्मे'ति सर्वात्मस्वरूपाद्ब्रह्मलिङ्गादवगम्यते, तस्मादित्यर्थः ॥२१॥

## स्वशब्दोन्मानाभ्यां च ॥ २२ ॥

हेत्वन्तरमाह । स्वेत्यादि । बृहदारण्यके 'स्वयं विहृत्य स्वयं निर्माय स्वेन भासा स्वेन ज्योतिषा प्रस्वपिती'ति जीववाचकः स्वशब्दः । उद्धृत्य वस्त्वन्तरात्पृथक्कृत्य मानं उन्मानम् । 'वालाग्रशतभागस्य शतधा कल्पितस्य च । भागो जीवः स विज्ञेयः स चानन्त्याय कल्पत ' इति । ' अङ्गुष्ठमात्रो रवितुल्यरूपः सङ्कल्पाहङ्कारसमन्वितो यः । बुद्धेर्गुणेनात्म-

गुणेन चैव आराग्रमात्रो ह्यपरोपि दृष्ट' इति श्वेताश्वतरे उक्तम् । ताभ्यामपि जीवोणुरेव सिध्यति । स्वप्ने व्यापकस्य शरीरपरिमाणकस्य च विहारासम्भवात् । उक्तोन्माना-सम्भवाच्च । चकारेण ज्योतिर्ब्राह्मणोक्तं 'सन्ध्यं तृतीयं स्थानं तस्मिन् सन्ध्ये स्थाने तिष्ठन्नुभे स्थाने पश्यतीदं च परलोकस्थानं चे'त्युक्तं सन्धावागतिदर्शनं सङ्गृह्यते । तथा चैभ्योपि हेतुभ्योणुरेव जीव इत्यर्थः ॥ २२ ॥

## अविरोधश्चन्दनवत् ॥ २३ ॥

ननु सत्यमेभिरणुत्वं सिध्यति, तथापि जलावगाहादौ सकलशरीरव्यापिशैत्या-द्युपलब्ध्या बाध्यते, अतोत्राणुत्वसाधिका युक्तिर्वक्तव्येत्याकाङ्क्षायां तामाह । अविरोध इत्यादि । जीवे अणुत्वसर्वशरीरव्याप्त्योर्विरोधो नास्ति, तादृशसामर्थ्यवत्त्वात् । अयं च हेतुर्दृष्टान्तेन सूच्यते । चन्दनवदिति । यथा चन्दनं शरीरैकदेशे स्थितं सकलदेहसुखं जनयति, यथा च तत्खण्डस्तप्ततैलकटाहे निक्षिप्तः सर्वं तैलं शीतलं करोति, तद्वत् । सामर्थ्येनाङ्गीकारेपि मूलमुन्मानवाक्यशेषे 'स चानन्त्याय कल्पत' इति 'क्लृप् सामर्थ्ये' इति सामर्थ्यार्थकधातुप्रयोगो बोध्यः । चन्दनसूक्ष्मावयवा सर्वदेहप्रसर्पणमङ्गीकृत्य दृष्टान्तं व्याकुलयतामर्थे 'ज्वरं हन्ति शिरोबद्धा सहदेवी जटा यथे'त्यपि दृष्टान्तो बोध्यः । चन्द-नपदं तु सूत्र उपलक्षणविधयोक्तमित्यदोषः ॥ २३ ॥

## अवस्थितिवैशेष्यादिति चेन्नाभ्युपगमाद्धृदि हि ॥ २४ ॥

ननु चन्दनदृष्टान्तेन सामर्थ्यव्याप्तिसाधनमयुक्तम् । चन्दन एकदेशस्थायित्वस्य प्रत्यक्षतो निश्चितत्वेन ततः सकलशरीरव्यापिशैत्यप्रत्यक्षबलेन च चन्दने व्यापनसामर्थ्य-कल्पनाया उचितत्वेपि जीवे शरीरैकदेशस्थायित्वस्य प्रत्यक्षेणानिश्चयाद्दृष्टान्तवैषम्येन जीवे तादृशसामर्थ्यसिद्धिर्न भवतीत्याशङ्कायामाह । अवस्थितीत्यादि । अत्र पूर्वसूत्रादविरोध-पदमनुवर्तते । अवस्थानमवस्थितिः । विशेषस्य भावो वैशेष्यम्, तस्मात् । अनुपहतत्वचि तप्ततैलकटाहे चैकदेशावस्थानस्य प्रत्यक्षगोचरत्वरूपाद्विशेषभावश्चन्दने भवतु नाम तथा । जीवे तु न तथा वक्तुं युक्तम्, तादृशावस्थितिवैशेष्याभावादिति चेत् । न । कुतः । अभ्यु-पगमात् । जीवस्यापि स्थानविशेषस्याभ्युपगमादविरोधः । नन्वभ्युपगमसिद्धान्तस्त्वप्रयो-जक इति शङ्कायामाह । हृदि हीति । हि 'गुहां प्रविष्टौ परमे परार्द्धे' इति श्रौतयुक्तिसद्भा-वाद्धृदि हृदयदेशे जीवस्थितिः । तथा च श्रुत्यन्तरम् । 'हृद्यन्तर्ज्योतिः पुरुषः । स वा एष आत्मा हृदि । हृद्येष आत्मे'त्यादि । तथा च प्रत्यक्षेण चन्दनस्येव जीवस्यापि हृद्यवस्थितेः शब्दान्निश्चये सामर्थ्येन सर्वशरीरव्याप्तौ दृष्टान्तवैषम्याभावेनाविरोध इत्यर्थः ॥ २४ ॥

## गुणाद्वा लोकवत् ॥ २५ ॥

श्रौतरीत्या समाधानेपि लौकिकः प्रतिवादी न तूष्णीको भवतीति लोकरीत्या

युक्तिमाह । गुणाद्वेत्यादि । वाशब्दोनादरे । लोकवत् । लोक इव गुणादविरोधः । यथा लोके एकदेशस्थायिनोपि मणेः प्रभारूपो गुणो बहुदेशं व्याप्नोति, तथा जीवस्यापि चैतन्यरूपो गुणः सर्वं शरीरं व्याप्नोतीति । न च प्रभाया द्रव्यत्वम् । स्पर्शानुपलम्भात् । मण्याच्छादने बहिस्तदनुपलम्भात् मणिनाशे नाशाच्चेति ॥ २५ ॥

## व्यतिरेको गन्धवत् ॥ २६ ॥

प्रभायां गुणत्वस्य सन्दिग्धत्वादन्यं सिद्धं दृष्टान्तमाह । व्यतिरेक इत्यादि । विशेषेणातिरिच्यते इति व्यतिरेकोऽधिकदेशवृत्तित्वम्, सोप्यनुभूयते गुणविशेषे । कुत्रेत्याकाङ्क्षायामाह । गन्धवत् । यथा गन्धश्चम्पकादेस्तद्रहितेपि देश उपलभ्यते, तद्वदित्यर्थः । अयमर्थः श्रुत्याप्युच्यते । 'यथा वृक्षस्य सम्पुष्पितस्य दूराद्गन्धो वात्येवं पुण्यस्य कर्मणो दूराद्गन्धो वाती'ति ॥ २६ ॥

## तथा च दर्शयति ॥ २७ ॥

चैतन्यस्य गुणत्वे प्रमाणमाह । तथेत्यादि । यथास्माभिर्गुणाद्व्याप्तिरुक्ता, तथा च तेनापि प्रकारेण दर्शयति श्रुतिः । कौशीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे 'तं होवाचाजातशत्रुर्यत्रैष एतद्वालाके पुरुषोऽशयिष्ट यत्रैतदभूद्यत एतदागा'दिति प्रतिज्ञाय, 'हिता नाम पुरुषस्य नाड्यो हृदयात्पुरीततमभिप्रतन्वन्ति, तद्यथा सहस्रधा केशो विपाटितस्तावदण्व्यः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य कृष्णस्य पीतस्य लोहितस्य च तासु तदा भवती'ति हृदयायतनत्वं तादृशनाडीषु स्थानेनाणुपरिमाणत्वं चाभिधाय, तस्यैव हृदयायतनस्याणोरात्मनः 'स एष प्राण एव प्रज्ञात्मेदं शरीरमात्मानमनुप्रविष्ट आलोमभ्य आनखाग्रेभ्य' इति प्रज्ञात्मत्वोक्तिपूर्वकं प्रविष्टत्वकथनाच्चैतन्येन गुणेन सर्वशरीरव्यापित्वं दर्शयति । अन्यथा अणोर्व्याप्तिर्नोपपद्येत । अतोणुत्वबोधनपूर्वकं व्याप्तिबोधनाच्चैतन्यं गुण एवेत्यर्थः ॥ २७ ॥

## पृथगुपदेशात् ॥ २८ ॥

हेत्वन्तरमाह । इन्द्रप्रतर्दनसंवादे 'प्रज्ञया शरीरं समारुह्ये'ति प्रज्ञायाः करणत्वेन पृथगुपदेशात्प्रज्ञापदवाच्यं चैतन्यं गुण एवेत्यर्थः ॥ २८ ॥

## तद्गुणसारत्वात्तु तद्व्यपदेशः प्राज्ञवत् ॥ २९ ॥

ननु परिमाणविषयिणी विप्रतिपत्तिस्तदा निवर्तते, यदा जीवस्य ब्रह्मणः सकाशाद्भेदः सिद्धः स्यात् । स एव तु नास्ति । छान्दोग्ये 'ऐतदात्म्यमिदं सर्वं तत्सत्य'मिति सर्वस्य ब्रह्मात्मकत्वमुक्त्वा, अग्रे 'स आत्मा तत्त्वमसी'ति सर्वस्माद्भिन्नतया त्वंपदार्थस्य जीवस्य तत्पदसामानाधिकरण्यश्रावणेन परमेव ब्रह्म जीव इति साधयति । ब्रह्मणश्च व्यापकत्वं 'सत्यं ज्ञानमनन्तं ब्रह्मे'त्यादिश्रुतिशतेषु स्फुटम्, अतः कथमणुत्वमिति शङ्काया-

माह । तद्गुणेत्यादि । तुशब्द उक्तशङ्काव्यावृत्त्यर्थः । उक्तव्यपदेशमात्रेणाणुत्वाभावशङ्का न कर्तव्या । कुतः । तद्व्यपदेशः जीवस्य ब्रह्मत्वेन कथनम् । तद्गुणसारत्वात् । तस्य ब्रह्मणो गुणाः साराः प्रधानभूताः जडवैलक्षण्यकारिणो यस्मिन् । जीवस्य तादृशत्वात् । तथा चाज्ञाशक्त्यादिना राजधर्मेण यथामात्ये राजपदप्रयोगो गौण्या, तथा प्रज्ञाद्रष्टृत्वादिब्रह्मधर्मेण जीवेपि गौण्या ब्रह्मत्वव्यपदेशः । प्रज्ञायाः ब्रह्मधर्मत्वं तु 'प्रज्ञा च तस्मात्प्रसृता पुराणी'ति श्वेताश्वतरे । द्रष्टृत्वादीनां 'तद्वा एतदक्षरं गार्गि अदृश्यं द्रष्टृ अश्रुतं श्रोतृ' इत्यादौ प्रसिद्धम् । त एव धर्मा जीवे प्रधानभूता इति त्विन्द्रप्रतर्दनसंवादे 'प्रज्ञया वाचं समारुह्य वाचा सर्वाणि नामान्याप्नोती'त्यादिवाक्येषु । गौण्या च जीवे ब्रह्मत्वं मैत्रेयीब्राह्मणे 'न वा अरे पत्युः कामाय पतिः प्रियो भवत्यात्मनस्तु कामाय पतिः प्रियो भवती'त्युपक्रममनादृत्य वाक्यान्वयादिभिर्हेतुभिर्ब्रह्मणो वाक्यार्थत्वप्रतिपादनेन प्रियत्वस्यापि ब्रह्मधर्मत्वे साधितेऽर्थात् सिध्यति । जीवब्रह्मणोर्भेदश्च 'सुषुप्त्युत्क्रान्त्योर्भेदेने'त्यत्र साधितः । अतो ब्रह्मव्यपदेशमात्रान्नाणुत्वबाधः । नन्वेतदयुक्तम् । तत्त्वमस्यादिवाक्ये तस्य ब्रह्मत्वं कण्ठतो निरूप्यते । न हि निरूपणस्थल एवोपचारः सम्भवतीत्यत आह । प्राज्ञवदिति । सम्भवति निरूपणस्थलेप्युपचारो यथा प्राज्ञे । तथा हि । बृहदारण्यके शारीरकब्राह्मणे सुषुप्त्यवस्थासामयिकं जीवस्वरूपं निरूप्य, 'तद्यथा प्रियया स्त्रिया सम्परिष्वक्तो न बाह्यं किञ्चन वेद नान्तर'मिति जीवब्रह्मणोर्भेददृष्टान्तनिरूपणावसरे, 'एवमेवायं शारीर आत्मा प्राज्ञेनात्मना सम्परिष्वक्तो न बाह्यं वेद नान्तर'मिति भेदमभिधाय, कः प्राज्ञ इत्याकांक्षायां प्राज्ञस्वरूपमाह । 'तद्वा अस्यैतदतिछंदोऽपहतपाप्माऽभयंरूपमशोकान्तरमत्र पिता अपिता भवती'त्यादि । प्राज्ञश्च सुषुप्तिसाक्षीति माण्डूक्ये नृसिंहोत्तरतापनीये च सिद्धम् । 'विश्वो वैश्वानरः प्रथमः पादस्तैजसो हिरण्यगर्भो द्वितीयः पादः प्राज्ञ ईश्वरस्तृतीयः पाद ईश्वरग्रासस्तुरीय' इति । प्राज्ञे च ब्रह्मधर्मा बोध्यन्ते । 'एष सर्वेश्वर एष सर्वज्ञ एषोन्तर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूताना'मित्यनेन । तदनन्तरं 'अथ तुरीय ईश्वरग्रासः स्वराट् स्वयमीश्वरः स्वप्रकाशश्चतुरात्मा ओतानुज्ञात्रनुज्ञाविकल्पै'रित्युक्त्वा ओतादयो विव्रीयन्ते । एवं सति शारीरकब्राह्मणे अस्य रूपमितिकथनात् तापनीये च तुरीयस्य स्वयमीश्वरस्येश्वरग्रासत्वकथनेन प्राज्ञस्य ग्रस्यमानत्वबोधनाच्च प्राज्ञो नेश्वरः । किन्तु तस्य रूपान्तरम् । तस्मिंश्चोपचारो निरूपणस्थल एव दृश्यते शारीरकब्राह्मणे, तथा जीवेपि तत्त्वमस्यादिवाक्येषु निरूपणस्थल एवोपचारो बोध्यः, एकत्र दृष्टः शास्त्रार्थोऽपरत्रापि तथेति न्यायादित्यर्थः ॥ २९ ॥

## यावदात्मभावित्वाच्च न दोषस्तद्दर्शनात् ॥ ३० ॥

ननु जीवस्य ब्रह्मणः सकाशाद्भेदाङ्गीकारे अन्यत्वं सिद्धम् । हीनत्वं त्वज्ञत्वानीशत्वाद्यनुभवसिद्धम् । एवं सत्यन्यस्य नीचस्य सर्वोत्कृष्टत्वेन व्यपदेशः कथं

घटते। न हि प्रामाणिकैः सर्वथा अयुक्तेऽर्थे व्यपदेशः क्रियते। अथ ग्रामाधीशे राजसेवके त्वमस्माकं राजेति राजधर्मवत्त्वाद्यथा प्रयुज्यते, तथा जीवे आनन्दांशप्राकट्येन ब्रह्मधर्मवत्त्वाद्ब्रह्मत्वप्रयोगः प्राज्ञवदुक्तः, सोप्ययुक्तः हताधिकारे राजसेवक इव। तुरीयग्रस्यमाने प्राज्ञ इव च तस्यापि तिरोधानसम्भवेन वैयर्थ्यापत्तेरिति शङ्कायामाह। यावदित्यादि। यावदात्मभावित्वात्। यावदिति पदार्थानतिवृत्तौ। भावित्वं वर्तनशीलत्वम्। आत्मानमनतिक्रम्यानन्दांशस्य वर्तनशीलत्वात्। आनन्दांशस्य प्राकट्योत्तरं सर्वदा वर्तनादिति यावत्। अतो न दोषः। नानन्दांशस्य पुनस्तिरोधानम्। कुतः यावदात्मभावित्वमित्यत आह। तद्दर्शनात्। 'स खल्वेवं वर्तयन्यावदायुषं ब्रह्मलोकमभिसम्पद्यते, न च पुनरावर्तते।' 'ब्रह्म वेद ब्रह्मैव भवति।' 'तस्य तावदेव चिरं यावन्न विमोक्ष्येथ सम्पत्स्य' इत्यादिष्वनावृत्त्यैश्वर्यादीनामुक्तत्वेन तस्य सर्वदा ब्रह्मात्मकत्वेनानुभवादिति। न च प्राज्ञवत्तिरोधानमानन्दांशस्य शङ्क्यम्। सम्पन्नत्वरूपस्य विशेषस्यास्मिन्नक्तत्वात्। यद्वा। यावदवधारणे। यावदात्मा संसारी। व्यपदेशस्य तावद्भवनशीलत्वात्। न दोषः। नायुक्तत्वम्। तद्दर्शनात्। 'ब्रह्म वेद ब्रह्मैव भवती'त्यादिष्वग्रे ब्रह्मभावस्यैव दर्शनादिति। पूर्वव्याख्याने जीवभावस्योत्तरावधिग्रहणम्, अत्र तु ब्रह्मभावस्य पूर्वावधिग्रहणमिति विशेषः। एतद्बीजं तु यावदात्मभावित्वपदम्, अन्यथा नित्यत्वपदमेव ब्रूयादिति बोध्यम्। अत्र च 'उत्क्रमिष्यत एवं भावा'दित्यौडुलोमिमतं समर्थितं भवति ॥ ३० ॥

## पुंस्त्वादिवत्त्वस्य सतोभिव्यक्तियोगात् ॥ ३१ ॥

ननु पूर्वमसतश्चेदानन्दांशस्य प्राकट्यम्, तदा जन्यत्वेन नश्वरत्वेन व्याप्तेरानन्दांशतिरोधानस्य सम्भवान्न यावदात्मभावित्वं वक्तुं शक्यमित्याशङ्कायामाह। पुंस्त्वेत्यादि। तुः पूर्वोक्तशङ्कानिरासे। व्यपदेशदशायामपि नात्यन्तमानन्दांशस्यासत्त्वम्। कुतः। अस्य सतोभिव्यक्तियोगात्। अस्यानुद्भूतस्य सतस्तदानीमभिव्यक्त्या संसर्गात्। तत्र दृष्टान्तः। पुंस्त्वादिवदिति। पुंस्त्वं सेकादिसामर्थ्यम्। आदिपदेन रूपादिगतं विभ्रमादि। तद्यथा बाल्ये विद्यमानमेव यौवने प्रकाशते, तद्वत्। तथा नानन्दांशस्य जन्यतेति यावदात्मभावित्वं निर्बाधमित्यर्थः ॥ ३१ ॥

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोन्यतरनियमो वान्यथा ॥ ३२ ॥

ननु व्यपदेशपक्षमाश्रित्य किमित्यानन्दांशस्य मोक्षदशायामेव प्राकट्यम्, नान्यदेत्यङ्गीक्रियते, तत्र हेतुं न पश्याम इत्याकाङ्क्षायामुक्तोपगमेन्यथानुपपत्तिरूपं हेतुमाह। नित्येत्यादि। अन्यथा। यद्यानन्दांशप्राकट्यकादाचित्कत्वं नाभ्युपगम्यते, तदा पक्षत्रयं सम्भवति। जीवे सच्चिदानन्दानां त्रयाणां नित्यमुपलब्धिप्रसङ्गो वा, नित्यमनुपलब्धिप्रसङ्गो वा, जीवो निरानन्द एव, ब्रह्म त्वानन्दरूपमेवेत्यन्यतरयोर्नियमो वा। तत्राद्य आनन्दांशस्य नित्यमुपलब्ध्या संसारावस्थायाः अनुपपत्तिः। द्वितीये नित्यं विद्यमानस्या-

प्यानन्दांशस्यानुपलब्ध्या मोक्षदशाविरोधः । तृतीये 'ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुत्युक्त-ब्रह्मभावविरोधः । तस्मात्पूर्वोक्तपक्षाङ्गीकारे श्रौतान्यथानुपपत्तिरेव हेतुरित्यर्थः । एवमणुत्वं जीवस्यावधारितम् ॥ ३२ ॥ इति द्वादशमुत्क्रान्तिगत्यागतीनामित्यधिकरणम् ॥ १२ ॥

## कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥ ( २-३-१३ )

अतः परं कर्तृत्वं विचार्यते, जीवेऽस्ति, न वेति । साङ्ख्यैः प्रकृतिगतमेव कर्तृत्वं जीवे भासत इत्युच्यते । नैयायकैस्तु जीवगतमित्युच्यते । अत्र जीवे ज्ञानरूपत्वाङ्गीकारः साङ्ख्यानामिव, ज्ञानवत्त्वाङ्गीकारो नैयायकानामिवेत्यतः सन्देहः । तत्र साङ्ख्यमतस्य शिष्टपरिगृहीतत्वान्न कर्तृत्वमिति प्राप्ते, आह । कर्तेति । कुतः । शास्त्रार्थवत्त्वात् । शास्त्रस्य अर्थवत्त्वं शास्त्रार्थवत्त्वं तस्मात् । शास्त्रस्य फलवत्त्वादिति यावत् । अयमर्थः । 'कारीर्या वृष्टिकामो यजेत, ज्योतिष्टोमेन स्वर्गकामो यजेत, अथ खलु क्रतुमयः पुरुषो यथा क्रतुरस्मिन् लोके पुरुषो भवति, तथेतः प्रेत्य भवति, स क्रतुं कुर्वीते'त्यादिभिर्वेदेऽभ्युद-यनिःश्रेयसफलार्थं यज्ञोपासनादीनि कर्माणि विहितानि । तत्र स्वर्गकामादिपदोक्ते कर्तरि विचार्यमाणे ब्रह्मणो न कर्तृत्वम्, आप्तकामत्वात् । नापि जडायाः प्रकृतेः, तादृशका-माभावेन बोधाभावे चाशक्यत्वात् । यदि पुनर्जीवस्यापि कर्तृत्वं नोच्यते, तदा तादृ-शार्थिविद्वत्कर्तृशून्यानि स्वर्गकामादिपदानि कुप्यन्ति शास्त्रवैयर्थ्यमापादयेयुः । अत उक्त-हेतोर्जीवः कर्तेति । न च 'प्रकृतेः क्रियमाणानी'ति गीतादिवाक्यविरोधः । तस्य लौकि-ककर्तृत्वनिषेधपरत्वात् । अन्यथा 'अधिष्ठानं तथा कर्ते'ति कर्तृत्वोक्तिविरोधापत्तेः ॥३३॥

## विहारोपदेशात् ॥ ३४ ॥

ननु प्रतीयते शास्त्रेषु कर्तृत्वं कामिनां जीवानाम् । कामस्तु मनोधर्मः, श्रुतावेव प्रसिद्धः, 'कामः सङ्कल्प' इत्यादीनां मनस्त्वश्रावणात् । मनश्च प्राकृतम्, अतो जीवस्य प्रकृ-तिसंसृष्टस्यैव तद्विवेकाग्रहात्कर्तृत्वे शास्त्रसार्थक्यसिद्धेर्न तेन जीवस्य वास्तवकर्तृत्वसिद्धि-रित्यत आह । विहारेत्यादि । छान्दोग्ये दहरविद्यायां 'स यदि पितृलोककामो भवती'-त्यादिना 'यं कामं कामयते, सोऽस्य सङ्कल्पादेव समुत्तिष्ठति, तेन सम्पन्नो महीयत' इत्य-न्तेन तत्तत्समुत्थानादिकथनमुखतो विहारस्य स्वेच्छाक्रीडात्मकभोगरूपस्योपदेशाद्दहर-विदो भोक्तृत्वं भासते । न च तादृशस्य विवेकाग्रहः सम्भवति, अतः कर्तृत्वमपि तस्य सिध्यति, 'साधुकारी साधुर्भवती'ति कर्तृत्वभोक्तृत्वयोः सामानाधिकरण्यश्रवणात् । अतो जीव एव कर्ता ॥ ३४ ॥

## उपादानात् ॥ ३५ ॥

सङ्कल्पस्य मनोधर्मत्वाद्दहरविदोऽपि मनःसंसृष्टत्वमेव, न केवलत्वम्, अतो नानेन जीवे कर्तृत्वसिद्धिरित्याशङ्कायां हेत्वन्तरमाह । उपादानादिति । बृहदारण्यके दृप्तबालाकि-

ब्राह्मणे 'य एष विज्ञानमयः पुरुषस्तदेषां प्राणानां विज्ञानेन विज्ञानमादाय य एषोन्तर्हृदय आकाशस्तस्मिन् शेत' इति । 'स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेतैवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तत' इति स्वप्नावस्थायामज्ञानबहुलायामपि प्राणानामन्तर्बहिरिन्द्रियाणां पृथक्तया ग्रहणश्रावणात्तदानीमिन्द्रियेभ्यो विविक्तस्यैव गृहीतृत्वमुच्यते, अतो दहरविदः सङ्कल्पोप्यात्मधर्म एव ज्ञातव्यः । 'कामः सङ्कल्प' इति श्रुतिस्तु लौकिकतत्परा । अतः स्वातन्त्र्यादात्मन एवोभयत्रापि कर्तृत्वमित्यर्थः ॥ ३५ ॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥ ३६ ॥

एवं श्रुतार्थापत्त्या जीवस्य कर्तृत्वं साधयित्वा साक्षात् श्रुत्या साधयति । व्यपदेशादिति । 'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि चे'ति यज्ञादिविस्तारणक्रियायां प्रथमाविभक्त्या अत्र विज्ञानरूपो जीवः कर्तृत्वेनोच्यते । अतः कर्तृत्वे सन्देह एव नास्तीत्यर्थः । ननु साङ्ख्ये बुद्धेरेव कर्तृत्वाङ्गीकारादस्यामपि श्रुतौ बुद्धिरेव कर्त्री विज्ञानपदेनोच्यत इत्याशङ्क्य परिहरति । न चेदित्यादि । अत्र श्रुतौ बुद्धिरेवोच्यते, जीवो न, चेत् । निर्देशस्य विभक्तिरूपस्य विपर्ययः अन्यथारूपत्वं स्यात् । प्रथमास्थले तृतीया निर्दिश्यते, यथा 'विज्ञानेन विज्ञानमादाये'ति । यदि च कारकमात्रस्य स्थाली पचतीत्यादिवत् स्वव्यापारे स्वातन्त्र्यान्न दोष इति विभाव्यते, तदापि स एव दोषः । एतस्य श्लोकस्य विज्ञानमयमुपक्रम्य पठितत्वादेतदैकार्थ्यानुरोधेन विज्ञानमयपदेपि विज्ञानपदस्य बुद्धिवाचकत्वे मयटो विकारार्थतापद्येत । सा च 'द्व्यचश्छन्दसी'ति व्याकरणसूत्रस्थनियमाद्विरुध्यत इति तस्य विज्ञानमयप्रयोगस्य विपर्ययः स्यात् । तस्मात् विज्ञानमयो जीव एवेति तस्यैव कर्तृत्वमित्यर्थः ॥ ३६ ॥

## उपलब्धिवदनियमः ॥ ३७ ॥

ननु जीवस्य कर्तृत्वे स्वातन्त्र्यं भवति । स्वातन्त्र्ये च सदा स्वहितमेव कुर्यात्, न स्वाहितम् । दृश्यते तु तत्करणमपीत्यतो न कर्तृत्वं जीवस्य युक्तमित्यत आह । उपलब्धिवदनियम इति । साङ्ख्यमते भोक्तृत्वस्याङ्गीकाराद्भोगस्य च सुखदुःखसाक्षात्कारात्मकत्वात्तत्र स्वातन्त्र्यं तु तवापि वाच्यम् । तथा सत्युपलब्धिवत् उपलब्धिरूपे कार्ये इव अनियमः । तत्र यथा चक्षुरादीनि करणानि व्यापारयन्निष्टमनिष्टं चोपलभत इत्यनियमः, एवं क्रियारूपेपि कार्ये तत्करणानामिन्द्रियाणां व्यापारणादिष्टमनिष्टं चाप्नोतीत्यनियमः । तथा च दोषपरिहारयोः साम्यान्नैवं पर्यनुयोगो युक्त इत्यर्थः ॥ ३७ ॥

## शक्तिविपर्ययात् ॥ ३८ ॥

नन्वत्रोपलब्धिदृष्टान्तो न युक्तः, उपलब्धेः प्रमाणवस्तुपरतन्त्रत्वेन दैवादपि सम्भ-

वात् । कर्मणस्तु बुद्धिपूर्वकस्वप्रयत्ननिष्पाद्यत्वेन स्वायत्ततया दृष्टान्तवैषम्यात् । अतः साम्याभावाद्युक्तः पर्यनुयोग इत्यत आह । शक्तीत्यादि । न दृष्टान्तवैषम्यम् । शक्तेः सामर्थ्यस्य विपर्ययादभावात् । यदि हीश्वरवत्समर्थः स्यात्, स्वानिष्टे यत्नं न कुर्यात् । सामर्थ्यं तु नास्ति । अत उपलब्धिवदत्र कर्मण्यपि दैवादेवाहितमिति दृष्टान्तसाम्याज्ञानेन कर्तृत्वहानिरित्ययुक्त एव पर्यनुयोग इत्यर्थः ॥ ३८ ॥

## समाध्यभावाच्च ॥ ३९ ॥

ननु शक्त्यभाव एव कुत इत्याकाङ्क्षायामाह । समाधीत्यादि । योगेन हि जीवे ज्ञानक्रियाशक्ती सिध्यतः । समाधिस्तु तदङ्गभूतोतस्तदभावात्, चकारेण तादृग्मन्त्राभावाच्च शक्त्यभाव इत्यर्थः ॥ ३९ ॥

## यथाच तक्षोभयथा ॥ ४० ॥

ननु यदुक्तं भोक्तृत्ववत्कर्तृत्वमपि न पर्यनुयोज्यमिति, तदयुक्तम् । कर्मकराणां राजभटानां युद्धादिकर्तृत्वेपि तत्सुखभोक्तृत्वाभावेन कर्तृत्वभोक्तृत्वयोर्वैयधिकरण्यादित्यत आह । यथेत्यादि । यथा तक्षा रथं पीठं वा निर्माय तत्रारूढो विहरति । यथा च स्वतो न व्याप्रियते, करणद्वारा च व्याप्रियते । यथा च स्वार्थमिवान्यार्थमपि करोति, तद्वदुभयथापि जीवस्य कर्तृत्वं सिध्यतीति कर्मकरदृष्टान्तः साधारणो न कर्तृत्वबाधक इत्यर्थः । न च कर्तृत्वस्य दुःखरूपत्वं शङ्क्यम् । पयःपातृत्वादेः सुखरूपत्वेन तथा नियमाभावात् । नापि तत्सत्त्वे अनिर्मोक्षः शङ्क्यः । ब्रह्मणि तत्सत्त्वेपि तस्य नित्यमुक्तत्वात् । अतः प्रकृत्यधीन एव कर्तृत्वे दोषाः, न वास्तवे । तस्माज्जीवस्य स्वार्थे परार्थे कर्तृत्वं कारयितृत्वं च तक्ष दृष्टान्ते साधितं बोध्यम् ॥४०॥ इति त्रयोदशं कर्ता शास्त्रार्थवत्त्वादित्यधिकरणम् ॥१३॥

## परात्तु तच्छ्रुतेः ॥ ४१ ॥ ( २-३-१४ )

एवं निर्धारिते जीवकर्तृत्वे, तत्किं नैयायकादीनामिव स्वातन्त्र्येण, उत ब्रह्माधीनतयेति सन्देहः । 'पुण्यः पुण्येने'ति 'एष उ एव साधु कारयती'ति विरुद्धश्रुतिद्वयदर्शनात् । तत्र ईश्वराधीनत्वे, ईश्वरस्य सर्वत्र समत्वेन जीवस्य दुःखभोगासम्भवात्कर्मानादित्वस्य प्राक्साधितस्य कर्तृत्वाधीनत्वात्तदप्यनाद्येवेति स्वातन्त्र्येणैव कर्तृत्वं युक्तमित्याशङ्कायामाह । परादित्यादि । तुः पूर्वोक्तशङ्कानिरासे । कर्तृत्वं ब्रह्मगतमेव, परात् ब्रह्मसंबन्धात् ऐश्वर्यादिवत्तद्दत्तं जीवे भासते । कुतः । तच्छ्रुतेः । तस्यैव कर्तृत्वकारयितृत्वश्रवणात् । 'नान्योतोस्ति द्रष्टे'त्यादिषु 'स विश्वकृत्स हि सर्वस्य कर्ता' 'सर्वमिदं प्रशास्ती'त्यादिषु सर्वकर्तृत्वस्य, 'एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषती'ति कारयितृत्वस्य च ब्रह्मण्येव श्रावणादित्यर्थः ॥ ४१ ॥

## कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥ ४२ ॥

ननु ब्रह्मणः कारयितृत्वं न युज्यते, वैषम्यनैर्घृण्यप्राप्तेः । न च वैषम्यनैर्घृण्यसूत्रे तयोः परिहृतत्वान्न शङ्कावकाश इति शङ्क्यम् । तत्र कर्मानादित्वेन तत्सापेक्षतया कृतस्य परिहारस्य कारयितृत्वानादिताग्रस्तत्वेनायुक्तत्वादिति शङ्कायामाह । कृतेत्यादि । तु, उक्तशङ्कानिरासे । कारयितृत्वानादितया ब्रह्मणि वैषम्यादिदोषो न भवति । यतः परमात्मा कृतप्रयत्नापेक्षः । तैत्तिरीये 'सोकामयत बहु स्यां प्रजायेयेति । स तपोतप्यत । स तपस्तप्त्वा इद्ᳪसर्वमसृजत यदिदं किञ्च । तत्सृष्ट्वा तदेवानु प्राविशत् । तदनु प्रविश्य सच्च त्यच्चाभवत् । निरुक्तं चानिरुक्तं च । निलयनं चानिलयनं च । विज्ञानं चाविज्ञानं च । सत्यं चानृतं च । सत्यमभवदि'ति स्वस्यैव बहुभवनोच्चनीचभवनेच्छाभ्यामालोचनेनानुप्रवेशपूर्वकनानाविधद्वैधीभावकथनोत्तरं सर्वस्य ब्रह्मरूपत्वनिगमनात् सर्वस्य ब्रह्मरूपत्वे समानेपि तत्तत्स्वभावभेदस्याप्यकारणकत्वाभावेनालोचितत्वात्रसायात्तेन स्वभावेन यो जीवकृतः प्रयत्नस्तत्सापेक्षः कारयति । वेदेन पदार्थगुणदोषौ वर्णयति । यथा पुत्रं यतमानं बालं पदार्थगुणदोषौ वर्णयन्नपि यत्प्रयत्नाभिनिवेशं पश्यति, तथैव पिता कारयति, तद्वत् । एवं सति उन्निनीषत्यधो निनीषतीति या श्रुतिः, सा सर्वत्र कारणत्वं ब्रह्मण एवेति बोधनाय जीवप्रयत्नोत्तरं फलदानेच्छामनुवदति, कारणश्रुतिश्च तदनुकूलसामग्रीसङ्घट्टनरूपं कारयितृत्वम् । तथा च गुणदोषकथनपूर्वकं तदिच्छानुरूपसामग्रीसम्पादके पितरि यथा न दोषः, किन्तु पुत्रस्वभाव एव दोषः, तथा न ब्रह्मण्यपि, किन्तु जीव एव । नन्वेवं कल्पने किं बीजमत आह । विहितेत्यादि । विहितप्रतिषिद्धयोरवैयर्थ्यम्, आदिपदेन प्रमाणव्यापारावैयर्थ्यं प्रामाणिकप्रेक्षावत्कृतप्रमाणानुसरणान्यकृततदननुसरणावैयर्थ्यं चेत्येभ्यो हेतुभ्यः । अन्यथैतेषां वैयर्थ्यमेव स्यात् । ईश्वरस्य स्वतन्त्रस्य फलदातुः सत्त्वात् । कर्मपक्षे पूर्वपूर्वकर्मणैव तादृशतादृशस्वभावकर्मफलपरम्परायाः सिद्धेरन्धपरम्परात्वापत्तेश्च । तथा चैतद्बीजमित्यर्थः । एवं चात्रेदं सिध्यति । भगवान् स्वकृतमर्यादारक्षार्थं तज्ज्ञापकं वेदमाविश्चकार । तत्र च फलदाने कर्मापेक्षाश्रावणात्फलदाने कर्मापेक्षः, कर्मणि जीवकृतप्रयत्नापेक्षः, प्रयत्ने तत्कामापेक्षः, कामे लोकप्रवाहापेक्षः, कारयतीति । एवं फलदाने जीवकृतप्रयत्नापेक्षोपि न स्वातन्त्र्याद्धीयते । तथैवालोचितत्वात् । आलोचनानुसारेण विविधं फलं जीवेभ्यो ददद्पि न वैषम्यादिदोषभाग्भवति, सर्वरूपत्वात् । कर्मणामप्यनादित्वं भगवद्धर्मत्वादेवेति ॥ ४२ ॥ इति चतुर्दशं परात्तु तच्छ्रुतेरित्यधिकरणम् ॥ १४ ॥

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥ ४३ ॥ (२-३-१५)

एवं जीवस्य कर्तृत्वं ब्रह्माधीनमित्यवधारितम् । अतः परं जीवस्य ब्रह्मसंबन्धि रूपं निरूप्यते । अंश इति । जीवो ब्रह्मणोंश एव । कुतः । नानाव्यपदेशात् । नानात्वेन व्यपदेशो नानाव्यपदेशः । 'सर्व एवात्मानो व्युच्चरन्ति । कपूयचरणा रमणीयचरणा' इति श्रुतौ बहुत्वसङ्ख्याविशिष्टत्वेन ब्रह्मणः सकाशाद्विभक्तत्वेन च व्यपदेशः कथनम्, तस्मात् । न च श्रुतौ 'निष्कलं निष्क्रियं शान्तमि'ति निरंशत्वश्रावणादंशत्वमौपचारिकमिति वाच्यम् । 'सर्वतः पाणिपादं तत्' 'अपाणिपादो जवनो गृहीता ।' 'आसीनो दूरं व्रजति ।' 'अन्यदेव तद्विदितादथो अविदिता'दित्यादिश्रुतिशतेषु ब्रह्मणो विरुद्धधर्माश्रयत्वलोकविलक्षणत्वयोः श्रावणादत्रापि व्युच्चरणादिश्रुतिबलेन निरंशत्वेप्यंशानामङ्गीकर्तुं शक्यतया औपचारिकांशत्वकल्पनाया अप्रयोजकत्वादिति । ननु नानाव्यपदेशमात्रेण जीवस्यांशत्वं न वक्तुं शक्यम् । अंशत्वे साजात्यस्य सुवर्णखण्डादिषु दृष्टत्वेनात्रापि ब्रह्मसाजात्यापातात् । न चेष्टापत्तिः कर्तुं शक्या । 'ब्रह्मदाशा ब्रह्मदासा ब्रह्मेमे कितवा उते'ति श्रुत्यन्तरे ब्रह्मविरुद्धस्वभावानां दाशादीनां ब्रह्मत्वश्रावणेन मृद्घटवदसजातीयेषु तेषु ब्रह्मकार्यताया एव स्फुटीभावात् । न च तत्रोपचार इति वाच्यम् । तथा सति कार्यत्वस्याप्यभावे भेदापातादेकविज्ञानेन सर्वविज्ञानप्रतिज्ञाबाधः प्रसज्जेत । अतो जीवस्य लोकभूतादिवत्कार्यत्वमेव युक्तम्, न त्वंशत्वमिति शङ्कायामाह । अन्यथा चापि । चोवधारणे । प्रकारान्तरेणापि । एतस्याः श्रुतेर्विचारेप्यंश एव जीवः । कुतः । दाशकितवादित्वमधीयते एके । एके शाखिनः ब्रह्मानूद्य दाशत्वादिविधानाद्ब्रह्मणो दाशकितवादित्वं पठन्ति, न तु दाशाद्यनुवादेन ब्रह्मत्वं तस्मात् । स्यात्कार्यत्वं यदि दाशादीननूद्य ब्रह्मत्वं विधीयेत । विधीयते तु विपरीतम् । अतो ब्रह्मण एव शरीरत्वं तन्निविष्टत्वं च । इम इत्यनेन सजीवानां देहानां परामर्शात् । निवेशश्चांशद्वारैव सम्भवति । यथा चन्द्रमसो जलादिषु, वह्नेश्चायःपिण्डादिषु । अत एतच्छ्रुतिविचारेप्येतादृशानूद्यविधेयभावान्यथानुपपत्त्या अंश एव जीवः । न चासजातीयत्वस्य बाधकत्वं शङ्क्यम् । तस्य देहनिवेशहेतुकत्वात् । देहनिवेशस्य चानन्दतिरोभावहेतुकत्वात् । अतो देहनिवेशेन कार्यत्वेपि स्वरूपेण कार्यत्वाभावात् नित्यत्वचिद्रूपत्वादिभिः साजात्यस्य विद्यमानत्वाद्ब्रह्मणोंश एव जीव इत्यर्थः ॥ ४३ ॥

## मन्त्रवर्णात् ॥ ४४ ॥

श्रुत्यन्तरसम्मतिं प्रदर्शयितुं हेत्वन्तरमाह । मन्त्रेति । पुरुषसूक्ते 'पुरुष एवेदꣳसर्व'मित्युक्त्वा 'पादोस्य विश्वा भूतानी'ति वदति । श्रीभागवते पुरुषसूक्तव्याख्यानाध्याये 'पादेषु सर्वभूतानि पुंसः स्थितिपदो विदु'रिति व्याख्याति । अतोऽस्मान्मन्त्रवर्णाज्जीवानां पादत्वेन पादे स्थितत्वेन चांशत्वमित्यर्थः ॥ ४४ ॥

## अपि स्मर्यते ॥ ४५ ॥

गीतायां 'ममैवांशो जीवलोके जीवभूतः सनातन' इति स्मर्यते । तेन नित्यानुमेयवेदस्याप्यत्र सम्मतिरित्यर्थः ॥ ४५ ॥

## प्रकाशादिवन्नैवं परः ॥ ४६ ॥

एवं त्रिभिर्जीवस्यांशत्वं निर्धार्यांशत्वे प्राप्ता दोषाः परिह्रियन्ते । तत्र परमात्मनः पुरुषरूपत्वाज्जीवानां हस्तपादादिवदंशत्वे तद्दुःखेन परस्यापि दुःखित्वं स्यादित्याशङ्कायामाह । प्रकाशेत्यादि । अत्र एवमित्यनेन जीवनिष्ठः प्रकारो बोध्यते, स च नेत्यनेन निषिध्यते । तेन च निषेधेन निषेधहेतुभूतः प्रकारोपि सूच्यते । तथा सति एवं जीववद्दुःखी परः परमात्मा नास्ति, किन्त्वितोन्यथा प्रकारान्तरेण सर्वरूपत्वेनास्ति । अतो न दुःखीत्यर्थः । ननु सर्वरूपत्वे कुतो न दुःखमित्यतो दृष्टान्तमाह । प्रकाशादिवदिति । प्रकाशादिभिरिव । यथा प्रकाशेन न सूर्यस्याग्नेर्वा तापः, शीतरश्मेर्वा शैत्यम् । तथेति । तदुक्तमेकादशस्कन्धे भिक्षुगीतायां 'नाग्नेर्हि तापो न हिमस्य तत्स्या'दिति । अतो द्वैतबुद्धिर्यस्य तस्यैव दुःखम्, परस्य तु सर्वत्रात्मबुद्धिरेवेति न तस्य दुःखमित्यर्थः । यद्वा । यथा सूर्यस्य प्रकाशः स्वांशभूतस्य रूपस्य दोषेण न दुष्यति, तद्वदित्यर्थः । रूपस्य प्रकाशांशत्वं द्वादशस्कन्धे उक्तम्, 'सूर्यश्चक्षुस्तथा रूपं ज्योतिषो न पृथग्भवे'दिति ॥ ४६ ॥

## स्मरन्ति च ॥ ४७ ॥

स्मरन्ति चर्षयोंशिनो दुःखासंबन्धम् । तथा हि मोक्षधर्मे 'तत्र यः परमात्मा हि स नित्यो निर्गुणः स्मृतः । न लिप्यते फलैश्चापि पद्मपत्रमिवाम्भसा । कर्मात्मा त्वपरो योसौ मोक्षबन्धैः स युज्यत' इति । चकारात् श्रुतिरपि । 'सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः, एकस्तथा सर्वभूतान्तरात्मा न लिप्यते लोकदुःखेन बाह्य' इति कठवल्ल्याम् । एवं सूत्रद्वयेनैको दोषः परिहृतः ॥ ४७ ॥

## अनुज्ञापरिहारौ देहसंबन्धाज्ज्योतिरादिवत् ॥ ४८ ॥

ननु जीवस्य भगवदंशत्वे ब्रह्मण इव विधिविषयत्वायोगात्फलसंबन्धाभावः । ततश्च पूर्वोक्तस्य शास्त्रार्थवत्त्वस्य बाधः । किञ्च । शास्त्रस्य जीवाधिकारकत्वाज्जीवस्य चानेकदेहसंबन्धात्को जीवः शूद्रः को वा भार्येति ज्ञानमप्यशक्यम् । तदज्ञाने च 'ऋतौ भार्यामुपेयात् ।' 'न शूद्राय मतिं दद्या'दिति शास्त्रविषयज्ञानाभावात्तच्छास्त्रव्याकुलीभावेनाव्यवस्थायां निषिद्धफलभूतदुःखित्वस्याप्ययोग इत्याशङ्कां परिहर्तुमाह । अनुज्ञेत्यादि । अनुज्ञापरिहारौ विधिनिषेधौ । तौ यद्यपि जीवस्य स्वरूपेण विध्यादिविषयत्वाभावान्न सम्भवतः, तथापि देहसंबन्धात् । यो देहो यदा अध्यासेन भगवदिच्छया वा गृहीतः, तत्संबन्धात्सम्भवतः । ननु स्वतोऽविषयत्वमन्यसंबन्धाच्च तद्विषयत्वमिति कथमवगन्तुं

शक्यत इत्यतो दृष्टान्तमाह । ज्योतिरादिवत् । ज्योतिरादयोऽग्न्युदकपृथिव्यः, तद्वत् । तेषां यथा स्वतो विध्याद्यविषयत्वेपि शवसंबन्धादग्निश्चण्डालभाण्डसंबन्धादुदकं चण्डालसंबन्धात्तद्भाण्डं च परिह्रियते, श्रोत्रियादिसंबन्धाच्च तत्तदुपादीयते, तथात्रगन्तव्यम् , अतो देहसंबन्धान्नोक्तदोष इत्यर्थः ॥ ४८ ॥

## असन्ततेश्चाव्यतिकरः ॥ ४९ ॥

ननु देहसंबन्धेन विध्याद्यविषयत्वपरिहारो न युक्तः । बाल्यकौमारादिभेदेन देहस्य प्रतिक्षणमन्यान्यतया कर्मकाले ब्राह्मणत्वादेरभावात् । जीवैक्येन तत्र ब्राह्मणत्वाद्यापादने तु देहान्तरेपि तस्य सत्त्वेन सर्वसङ्करप्रसङ्ग इत्यत आह । असन्ततेरित्यादि । अव्यतिकरः असङ्करः । जीवैक्याद्यः सङ्कर आपादितः, स न भवति । कुतः । असन्ततेः । देहान्तरे तस्याः सन्ततेरभावात् । एवं सङ्करे परिहृते सन्तत्यैक्येन तत्र देहे ब्राह्मणत्वादेः सत्त्वात्सुखेनानुज्ञापरिहारविषयत्वमित्यर्थः ॥ ४९ ॥

## आभास एव च ॥ ५० ॥

ननु सच्चिदानन्दस्य ब्रह्मणोंशः सच्चिदानन्द एव भवेत् । तथा सति ब्रह्मण इव तस्यापि संसारप्रवाहे प्रवेशोनुपपन्न इत्यत आह । आभास एव चेति । आनन्दांशस्य तिरोभावात् चकाराद्भगवदाकारस्य च तिरोभावाज्जीवो ब्रह्माभास एव । यथाऽनाचारिब्राह्मणो ब्राह्मणाभासस्तथा । तथा चानन्दांशतिरोभावात्संसारप्रवाहे प्रवेशः, तत्सम्पत्तौ च पुनर्ब्रह्मत्वमेवेति न कोपि दोष इत्यर्थः ॥ ५० ॥

## अदृष्टानियमात् ॥ ५१ ॥

एवं जीवस्याणुत्वं नानात्वादिकं च श्रुत्यनुसारेण व्यवस्थाप्य साङ्ख्यनैयायिकाद्यभिमतं जीवस्वरूपं निराचष्टे । ते हि पुरुषबहुत्वमात्मनानात्वं च भोगव्यवस्थया आहुः, भोगव्यवस्थां चादृष्टनियमेन । निमित्तभूतस्यादृष्टस्य भोग्योत्पत्तिदेशवर्तित्वेनात्मनां व्यापकत्वं च । तद्दूषयति । अदृष्टानियमादिति । स्यादात्मनां व्यापकत्वम् , यदि भोगव्यवस्थापादकमदृष्टं प्रत्यात्मनियतं व्युत्पादयितुं शक्येत । तदेव तु न सम्भवति । विभूनां सर्वेषामात्मनां सकलमूर्तद्रव्यसंयोगित्वेन सर्वेन्द्रियमनःशरीरसंयोगितया तत्तदिन्द्रियसंयोगादिजन्यानां ज्ञानेच्छाप्रयत्नानां सर्वेष्वात्मसूत्पत्त्यापत्त्या तज्जन्यकर्मभिः सर्वेष्वप्यात्मसु सर्वविधादृष्टोत्पत्तौ बाधकाभावेन तस्य तस्यादृष्टस्य तत्तदात्मनि नियन्तुमशक्यत्वादिति॥५१॥

## अभिसन्ध्यादिष्वपि चैवम् ॥ ५२ ॥

ननु यद्यप्येवं साधारण्यमस्ति, तथापि तत्तच्छरीरेन्द्रियमनोभिमानस्य तस्मिंस्तस्मिन्नेवात्मनि दर्शनात्तत्र हेत्वपेक्षायां विलक्षणमनःसंयोगस्य ईश्वरेच्छाया नियामकत्वे सुखेनादृष्टनियमसिद्धिरित्यत आह । अभीत्यादि । अभिसन्धिः पूर्वोक्तोभिमानस्तस्यादयो

हेतवस्तेष्वपि, एवं पूर्वतुल्यत्वम् । तथा च । विलक्षणमनःसंयोगस्यापि सर्वेषु विभुष्वात्मसु तुल्यत्वान्नादृष्टादिनियमसिद्धिः । न चेश्वरेच्छया नियम इति वाच्यम् । साङ्ख्यमते तस्यैवाभावात् । नैयायकमत ईश्वराङ्गीकारेपि तदिच्छाया आकारः अयमनेन प्रकारेणेदं भुङ्क्तामित्येव वाच्यः । स त्वण्वात्मवादेपि तुल्य इति न तेनात्मनां नानात्वव्यापकत्वसिद्धिरित्यर्थः ॥ ५२ ॥

## प्रदेशादिति चेन्नान्तर्भावात् ॥ ५३ ॥

नन्वात्मनां विभुत्वेपि तेषु तादृशः कश्चित्प्रदेशविशेषोस्ति येनादृष्टादिकं व्यवस्थाप्यत इति शङ्कायामाह । प्रदेशेत्यादि । ल्यब्लोपे पञ्चमी । प्रदेशविशेषमालम्ब्य व्यवस्थाप्यत इति चेत् । न । कुतः । अन्तर्भावात् । आत्मान्तरप्रदेशस्यापि तत्रान्तर्भावात् न तत्सिद्धिः । यद्वा । प्रदेशस्य क्रियारहितत्वेन स्थिरतया तं प्रदेशं विहाय देहस्यान्यत्र गमने तस्य प्रदेशस्यान्तर्भावात्तिरोभावाददृष्टादिकं न व्यस्थापयितुं शक्यम् । तथा च श्रुत्युपष्टम्भरहितं तन्मतमसङ्गतमेवेत्यर्थः ॥ ५३ ॥ इति पञ्चदशमंशो नानाव्यपदेशादित्यधिकरणम् ॥ १५ ॥

इति श्रीमद्वल्लभाचार्यचरणैकतानश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचितायां
ब्रह्मसूत्रवृत्तौ द्वितीयाध्यायस्य तृतीयः पादः ॥ ३ ॥

---

### अथ द्वितीयाध्यायस्य चतुर्थः पादः ।

## तथा प्राणः ॥ १ ॥ ( २-४-१ )

पूर्वपादे जीवस्य स्थूलशरीरनिष्पादकानां भूतानामुत्पत्तिक्रमादिकं विचार्य ततो जीवस्य स्वरूपादिकं विचारितम् । अस्मिन् पादे तु जीवशरीरान्तर्वर्तिनां प्राणादीनां स्वरूपादिकमवसरेण विचार्यते । तत्र शरीरान्तर्वर्तिनां शरीरान्वयव्यतिरेकानुविधायित्वात्किं शरीरवदुत्पत्तिनाशशालित्वम्, उत जीववदुद्गमागमशालित्वमिति संशये, प्राणादिनित्यतागमकस्य श्रुतावनुपलम्भा'देतस्माज्जायते प्राण' इति मुण्डके जन्मोपलम्भाच्च शरीरारम्भकभूतवज्जननादिशङ्कायां पूर्वपादान्ते जीवं निरूप्यात्र जीवनैकट्यात्तादृशधर्मवत्त्वं प्राणेष्वतिदिशति । तथा प्राण इति । लिङ्गे मनसो मुख्यत्वादेकवचनम् । 'अथ ह प्राणा अहं श्रेयसि व्युदिरे' इत्यादिश्रुतिषु प्राणशब्द इन्द्रियेषु प्रसिद्ध इति 'प्राणाश्च प्रिया' इति तथात्वं बोधयितुं प्राणशब्दप्रयोगः । ननु प्राणेषु वियदादिधर्मातिदेशे 'स प्राणमसृजते'ति श्रुत्युक्तं सृज्यत्वरूपं जन्यलिङ्गमतिदेशकं लभ्यते । जीवधर्मातिदेशे तु न किञ्चिदतिदेशकं पश्याम इति चेत् । न । 'स यदास्माच्छरीरादुत्क्रामति सहैवैतैः सर्वैरुत्क्रामति ।

स यथा महाराजो जानपदान् गृहीत्वा स्वे जनपदे यथाकामं परिवर्तेत, एवमेवैष एतत्प्राणान् गृहीत्वा स्वे शरीरे यथाकामं परिवर्तते' इत्यादीनां उत्क्रान्त्यादिसूत्रेषूक्तानां सर्वासां जीवसहभावबोधिकानामुपपत्तीनामतिदेशकत्वात् । 'विप्रतिषिद्धधर्मसमवाये भूयसां स्यात्स्वधर्मत्व'मिति पौर्वतन्त्रन्यायेन तासामेवोपपत्तीनां ग्राह्यत्वात् । सृजत्यर्थविचारेपि विसर्गस्य व्युच्चरणरूपताया एव सिद्धेर्जायत इत्यर्थस्यापि प्रादुर्भावरूपत्वेन तयोरप्यविरोधाच्च । न च जैवधर्मातिदेशे पृथग्विचारार्थानां सूत्रान्तराणामानर्थक्यं शङ्क्यम् । प्राणेषु चिदंशस्यापि तिरोभावेन पृथग्विचारस्यावश्यकत्वात् । न च तद्गुणसारत्वतद्व्यपदेशयोरभावः शङ्क्यः । बृहदारण्यके 'प्राणा वै सत्य'मिति सत्यस्य ब्रह्मधर्मस्य, 'प्राणो वै ब्रह्म वाग्वै ब्रह्मे'ति तद्व्यपदेशयोरपि सत्त्वात् । अतोत्र जीवधर्माणामेवातिदेशो युक्तो, न वियदादिधर्माणाम् ॥ १ ॥

## गौण्यसम्भवात् ॥ २ ॥

अतिदेशकमाक्षिप्य समाधत्ते । उत्क्रान्त्यादिश्रुतिर्नाशोत्पत्तिपरतया सत्यत्वादिश्रुतिश्चोपासनापरतया प्राणेषु गौणीति चेत् । न । कुतः । गौण्यसम्भवात् । गौण्या असम्भवो गौण्यसम्भवस्तस्मात् । पूर्वसूत्रात्तथा प्राणा इत्यनुवर्तते । 'स यदास्माच्छरीरा'दिति वाक्ये प्रथमा श्रुतिरुत्क्रान्तिविधायिका । द्वितीया तु तामेवानूद्य तत्र प्राणादीनां जीवसाह्यं विधत्ते । अत एकस्या एवोत्क्रान्तिश्रुतेर्जीवे मुख्यत्वम्, प्राणेषु गौणत्वमिति युगपद्वृत्तिद्वयविरोधान्न सम्भवतीत्यतस्तथेत्यर्थः ॥ २ ॥

## तत्प्राक् श्रुतेश्च ॥ ३ ॥

ननु यद्यप्यतिदेशे जीवतुल्यत्वमायाति, तथाप्युत्पत्त्यनन्तरं चिरकालस्थायित्वेनापि तदुपपद्यते, अतो न तेषां नित्यत्वमिति शङ्कायामाह । तदित्यादि । अत्रापि पूर्ववदनुवृत्तिः । तस्याः सृष्टेः सकाशात्प्राक् प्राणानां स्थितिश्रुतेः । वाजिनामग्निप्रकरणे 'असद्वा इदमग्र आसीत्तदाहुः किं तदसदासीदित्यृषयो वाव तेग्रे असदासीत्तदाहुः के ते ऋषय इति प्राणा वा ऋषय' इति श्रूयते । अतः सृष्टिप्राक्कालवर्तित्वान्नित्यत्वम् । चकारान्मोक्षे तेषामपि ब्रह्मसम्पत्तेः स्थलान्तरे श्रावणं सङ्गृह्यते । 'न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते । ब्रह्मैव सन्ब्रह्माप्येती'ति । न च 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीय'मिति श्रुतौ सृष्टेः पूर्वं ब्रह्मातिरिक्तसत्तानिषेधात्तद्विरोध इति शङ्क्यम् । एतस्याः प्राणस्थित्यपेक्षयापि पूर्ववृत्तान्तबोधकत्वेनाविरोधात् । न चात्र मानाभावः शङ्क्यः । असत्पदेन प्राणानामव्यक्ततया ब्रह्मरूपेणैव स्थितिबोधनात् । अतो यथा जीवस्य उद्गमानन्तरं व्यक्तीभावः, तथा प्राणानामिति तेपि ब्रह्मांशा एव, न तु कार्यरूपा इति नित्यत्वं निर्बाधमित्यर्थः ॥ ३ ॥

## तत्पूर्वकत्वाद्वाचः ॥ ४ ॥

ननु प्राक् सृष्टेः प्राणस्थितिबोधिकायाः श्रुतेरवान्तरप्रलयात्प्रागवस्थितस्य प्रजापतेः प्राणानां तदानीं सत्ताबोधकत्वेनाप्युपपद्यमानत्वान्न तया जीववत्प्राणनित्यत्वाग्रहो युक्त इत्याकाङ्क्षायां हेत्वन्तरमाह । तदित्यादि । अत्रापि पूर्ववदेवानुवृत्तिः । 'मनः पूर्वरूपं वागुत्तररूप'मिति श्रुतेर्वाचः पूर्वरूपं मनः । किञ्च । मनोमयमात्मानमुपक्रम्य तदवयव-कल्पनायां 'तस्य यजुरेव शिर' इत्यादिना तदवयवानां वेदरूपत्वमुक्तम् । वेदाश्च 'एवं वा अरे अस्य महतो भूतस्य निःश्वसितं यदृग्वेदो यजुर्वेद' इति 'वाचा विरूपनित्यये'ति च श्रुत्या भगवन्निःश्वासरूपा नित्या इति तेषां स्वरूपत उत्पत्त्यभावादुद्गममात्रम् । तथा सति तत्पूर्वरूपस्य मनसः कथमुत्पत्तिः सम्भवति । तस्मान्न तस्याप्युत्पत्तिः, किन्तूद्गममा-त्रम् । अतो जीवतुल्यत्वाद्युक्तमेव नित्यत्वम्, न त्वाग्रह इत्यर्थः । जैवानां तु प्राणमनो-वाचां तद्व्यष्टित्वादेव तथात्वसिद्धिरिति न कोपि शङ्कालेशः ॥ ४ ॥

## सप्तगतेर्विशेषितत्वाच्च ॥ ५ ॥

एवं प्राणमनोवाक्त्वतिदेशिकाया उपपत्तेः सिद्धावपि चक्षुरादिषु सा न स्फुटेत्यतो हेत्वन्तरमाह । सप्तेत्यादि । अत्रापि पूर्ववदेवानुवृत्तिः । शारीरब्राह्मणे 'तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'त्यनेनोक्ता सप्तानां प्राणानां या गतिः, सा सप्तगतिः, तस्याः 'अथारूपज्ञो भवत्येकीभवति न पश्यतीत्याहु'रित्यादिषु पूर्ववाक्येषु गत्या विशेषितत्वात् ततो वा जीवगमनस्य विशेषितत्वात् एकीभावेनोक्तत्वात् जीवतुल्याः प्राणाः । तथा चानश्वरस्य भावस्याजन्यत्वनियमाज्जीववदेव नित्याः प्राणा इत्यर्थः । चकारेण व्रतमीमांसादिषूक्तं चक्षुरादीनां देवतात्वेन संवादेन च चेतनतुल्यत्वं सङ्गृह्यते । एवमत्रेन्द्रियाणामुत्पत्त्यादिविचारेण नित्यत्वं समर्थितम् ॥ ५ ॥ इति प्रथमं तथा प्राण इत्यधिकरणम् ॥ १ ॥

## हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥ ( २-४-२ )

'ते प्राणाः कती'त्याकाङ्क्षायां सप्तप्राणाः प्रभवन्तीति । अष्टौ ग्रहा अष्टावतिग्रहा इति । सप्त वै शीर्षण्याः प्राणाः द्वाववांचाविति । नव वै पुरुषे प्राणाः नाभिर्दशमीति । दश वै पशोः प्राणाः आत्मैकादश'त्येवमादिषु नानासङ्ख्याश्रावणेन श्रुतिविप्रतिषेधे किं युक्तमिति संशये, तत्सङ्ख्या निर्धार्यते । तत्र, सप्त प्राणाः प्रभवन्ति तस्मादिति प्रतिज्ञाय, मन्त्रसमाप्तौ 'सप्त इमे लोका येषु चरन्ति प्राणा गुहाशयान्निहिताः सप्तसप्ते'ति सप्तलोकेषु सप्तानामेव गतेर्निगमनाज्जीवोत्क्रमणसमये सप्तानामेव च गत्या जीवगतेर्विशेषितत्वाच्च सप्तैवेति युक्तम् । अन्ये त्वेतेषामेव वृत्तिभेदाद्भेदा इति उत्सूत्रे पूर्वपक्षे प्राप्ते, आह ।

हस्तादय इति । तुः पूर्वपक्षनिरासे । 'हस्तौ चादातव्यं च उपस्थश्चानन्दयितव्यं पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं चे'ति श्रुतौ चक्षुरादिगणनायां हस्तादीनामपि चतुर्णां गणनया चक्षुरादितुल्यत्वे स्थिते निर्णीते सति, अतः तत्तुल्यत्वादेव हेतोः नैवम् । सप्तैवेति न, किन्तु ततोधिकाः । 'इन्द्रियाणि दशैकं' च । 'इन्द्रियाणां मनश्चास्मी'ति गीतायाम् । 'एकादशेन्द्रियचमू'रिति पञ्चमस्कन्धे पुरञ्जनोपाख्यान अध्यात्मपारोक्ष्ये वाक्याच्चैकादशे-त्यर्थः । अवान्तरगणनासु सप्तगणना तु प्राधान्याभिप्राया । अष्टगणना तु बन्धकत्वाभि-प्राया । नवेति त्वनावृतद्वाराभिप्राया । दशेति द्वारमात्राभिप्राया । चतुर्दशसङ्ख्या त्वन्तः-करणस्य चतुर्विधत्वात्तदादायेत्यविरोधः ॥६॥ इति द्वितीयं हस्तादय इत्यधिकरणम् ॥२॥

## अणवश्च ॥ ७ ॥ ( २-४-३ )

परिमाणनिर्धारार्थमिदम् । तत्र किमेते सर्वे प्राणाः समानपरिमाणाः, उत नाना-परिमाणा इति सन्देहे, त्वचः शरीरव्यापित्वस्य चक्षुर्मनसो दूरग्राहित्वस्य वाचो दूरग-मनस्य च दर्शनादेते महान्तः शेषाः सूक्ष्मा इति प्राप्ते, आह । अणवश्चेति । चोवधारणे । पूर्वोक्तया उत्क्रान्त्या सृष्टिपूर्ववर्तित्वश्रुत्या च गतिमत्त्वे नित्यत्वे च सिद्धेऽणव एवेत्यर्थः । सर्वशरीरव्याप्त्यादिस्तु सामर्थ्याद्गुणव्याप्त्या च जीववदेव बोध्या । गुणश्च त्रिवृत्कृतभूत-पोषितत्वेन च स्पर्श एव बोध्यः ॥ ७ ॥ इति तृतीयमणवश्चेत्यधिकरणम् ॥ ३ ॥

## श्रेष्ठश्च ॥ ८ ॥ ( २-४-४ )

इन्द्रियाणि विचार्येदानीं मुख्यप्राणं विचारयति । तत्र मुख्यप्राणस्य नित्यतायाः स्फुटतया अश्रवणात्प्राणसंवादे अपहतपाप्मत्वादिरूपमाहात्म्यश्रावणाच्च स नित्यो न वेति सन्देहे 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्चे'ति छान्दोग्ये ज्येष्ठपदेन प्रथमोत्पन्नत्वलाभान्माहात्म्य-वत्त्वनित्यत्वयोर्व्याप्तेरभावाच्चानित्य एवेति प्राप्त, आह । श्रेष्ठश्चेति । भाववृत्तसूक्ते 'नास-दासी'दित्युपक्रम्य 'आनीदवातं स्वधया तदेक'मिति वातरूपतानिषेधपूर्वकमननात्मकस्य धर्मस्य पूर्वं सत्ताप्रदर्शनाद्ब्रह्मणोऽननात्मको यो धर्मः स एव मुख्यः प्राण इति नित्यो गतिमानणुपरिमाणश्च । चकारेणातिदेशः सूच्यते । न च ज्येष्ठपदात्प्रथमोत्पन्नत्वं शङ्क्यम् । गुणाधिक्येपि तथा व्यवहारात् । अत एव 'ब्रह्मज्येष्ठा वीर्या सम्भृतानी'ति । 'ज्यायान्गुणै-रवरजोप्यदितेः सुताना'मित्यादिप्रयोगः । तस्मान्नित्यः । गतिमत्त्वस्यानूत्क्रान्तिश्रुत्यैव सिद्धत्वाच्चाणुरित्यर्थः ॥ ८ ॥

## न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

ननु मुख्यः प्राणो वायुरेवास्तु । 'यः प्राणः स वायुः । एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानश्चे'ति श्रुतेः । अथवा । इन्द्रियाणां क्रियास्तु । साङ्ख्ये

तथाङ्गीकारात् । अतस्तस्यातिरिक्तत्वकल्पनं न युक्तमत आह । नेत्यादि । यदाशङ्कितम्, तन्न । कुतः । पृथगुपदेशात् । 'एतस्माज्जायते प्राण' इति वायुप्राणयोः पृथगुपदेशात् इन्द्रियेभ्यः पृथगुपदिष्टत्वाद्वृत्तिवृत्तिमतोरभेदेनेन्द्रियेभ्योपि भेदसिद्धेश्च अतिरिक्त एवेत्यर्थः ॥ ९ ॥ इति चतुर्थं श्रेष्ठश्चेत्यधिकरणम् ॥ ४ ॥

## चक्षुरादिवत्तु तत्सहशिष्यादिभ्यः ॥ १० ॥ ( २-४-५ )

स प्राणः स्वतन्त्रः परतन्त्रो वेति सन्देहे, 'सुप्तेषु वागादिषु प्राण एको मृत्युनाऽनाप्तः प्राणः संवर्गो वागादीन् संवृङ्क्ते । प्राण इतरान् रक्षति मातेव पुत्रा'नित्यादिश्रुतिषु प्राणस्य मृत्युसंसर्गशून्यता इतरसङ्कुसितृताया इतररक्षकतायाश्च कथनात्स्वतन्त्र इति प्राप्ते, आह । चक्षुरादीत्यादि । उक्तपूर्वपक्षनिरासार्थस्तुशब्दः । चक्षुरादिवदयमप्यस्वतन्त्रः । कुतः । तत्सहशिष्यादिभ्यः । तैः सह शिष्यं शासनं तदादिभ्यः । श्वेताश्वतरे 'त्रिरुन्नतं स्थाप्य समं शरीरं हृदीन्द्रियाणि मनसा सन्निवेश्य । ब्रह्मोडुपेन प्रतरेत विद्वान् स्रोतांसि, सर्वाणि भयावहानि । प्राणान्प्रपीड्येह सयुक्तचेष्टः क्षीणे प्राणे नासिकयोः श्वसीते-तीन्द्रियाणां हृदि सन्निवेशनेन शासनवत् प्राणानामायामेन पीडया तच्छाशनस्यापि श्रावणात् । आदिपदाज्जडत्वजीवोपकरणत्वादिभ्यश्च चक्षुरादिवद्व्यवहारे जीवाधीनः । मुख्यविचारे तु प्रश्नोपनिषदि भगवदधीनोत्पत्त्यादिश्रावणाद्भगवदधीन इत्यर्थः ॥ १० ॥

## अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ ११ ॥

न 'न्वेकादशामी मनसो हि वृत्तय आकूतयः पञ्चधियोभिमानः । मात्राणि कर्माणि पुरं च तासां वदन्ति हैकादश वीरभू'रिति योगतन्त्रे एकादशानामेव वृत्तीनां जीवोपका-रकाणां सिद्धत्वात्प्राणस्य चैतद्वृत्तिराहित्येन जीवोपकरणताया एवाभावाज्जीवाधीनत्वं न युक्तमित्यत आह । अकरणेत्यादि । प्राणस्य उक्तवृत्तिराहित्यं न दोषः । न जीवोपक-रणत्वविघटकम् । कुतः । अकरणत्वात् । करणस्यैव हि व्यापारवत्त्वमुपकरणतासम्पादकम्, न त्वकरणस्यापि । अतस्तदभावो न दोषः । ननु किमत्र मानमित्यत आह । तथा हि दर्शयति । हि यतो हेतोः तथा । अकरणत्वेपि कार्यवत्त्वमात्रेणोपकरणत्वं श्रुतिरेव दर्शयति । 'तस्मिन्नुत्क्रामत्यथैते सर्व एवोत्क्रामन्ते, तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रतिष्ठन्ते, तद्यथा मक्षिकामधुकरराजानमुत्क्रामन्तं सर्वा एवोत्क्रामन्ति, तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठन्त' इति । तस्मात्प्राणहेतुकैव शरीरस्थितिव्यापाराभावेपि स्वरूपस्थितिमात्रेण तस्य जीवोपकारित्वादुपकरणत्वं निर्बाधम्, अतस्तस्य जीवाधीनत्वं सुस्थिरमित्यर्थः ॥ ११ ॥

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥

ननु व्यापाराभावे जीवोपकारित्वमेव दुर्घटमित्यत आह । पञ्चेत्यादि । पञ्चवृत्तेः 'अहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामी'त्युक्ता या पञ्चधा वृत्तिः सा

पञ्चवृत्तिः, ततो हेतोः मनोवत्, यथा मनो द्वारभेदेन स्वरूपत एकादशवृत्तिकम्, तथा व्यपदिश्यते, पञ्चधात्मविभागेन कार्यकरः प्राणश्रुत्योच्यते । अतो व्यपदेशप्रामाण्याद्व्यापाराभावेपि जीवोपकारित्वं सुघटमेवेत्यर्थः ॥ १२ ॥

## अणुश्च ॥ १३ ॥

ननु पञ्चधात्मविभागे सति कथमणुत्वमित्यत आह । अणुश्चेति । चकारादुत्क्रान्त्यादिश्रुत्युक्तधर्माणां समुच्चयः । तथा चाणुत्वसाधकानां धर्माणां भूयस्त्वात् पञ्चवृत्तित्वस्य सामर्थ्येनापि सम्भवाद्वृत्तिभिः सर्वशरीरव्याप्तेरपि सम्भवात्त्रिवृत्करणोत्तरमद्भिः पोषणेन बहिःप्रत्ययस्यापि सम्भवात्पञ्चधाविभागेप्यणुत्वं निर्बाधमित्यणुरेवासन्यः प्राण इत्यर्थः । अतिदेशेनाणुत्वस्य पूर्वं प्राप्तत्वेपि वृत्तिविभागेन जायमानस्य सन्देहस्य निवारणायेदं सूत्रम् ॥ १३ ॥ इति पञ्चमं चक्षुरादिवच्चित्यधिकरणम् ॥ ५ ॥

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥ (२-४-६)

अध्यात्मस्थितानां वागादीनां देवताधिष्ठानवतां प्रवृत्तिः स्वत एव वेति सन्देहे, अन्तर्यामिब्राह्मणोक्तस्य ब्रह्मप्रेरणस्याण्डसृष्टिरूपविशेषकार्यार्थतया तत्र देवताधिष्ठानस्यावश्यकत्वादाध्यात्मिकानामेतेषां विशेषकार्याभावाद्भोगमात्रस्य च जीवाधिष्ठानादेव सम्भवान्न देवताधिष्ठानापेक्षेति प्राप्तम्, तत्राह । ज्योतिरित्यादि । उक्तपक्षवारणार्थं तुशब्दः । आध्यात्मिकानामप्येषां ज्योतिरादि । अग्न्यादिकम् । अधितिष्ठतीत्यधिष्ठानम् । 'नन्द्यादित्वात्कर्तरि ल्युः' 'सामान्ये नपुंसकं' अधिष्ठातृ अवश्यमङ्गीकर्तव्यम् । कुतः । तदामननात् । ऐतरेये सृष्ट्यादौ 'अग्निर्वाग्भूत्वा मुखं प्राविश'दित्यादिभिर्देवताया इन्द्रियरूपेण गोलके प्रवेशकथनात् । तथा सृष्ट्यादौ या मर्यादा ईश्वरेण कृता सर्वं तदनुसारेणैव तत्सृष्टिर्भवतीति इदानीमपि सर्वेन्द्रियाणां देवतासंवलितत्वम् । अन्यथा अणूनां इन्द्रियाणां एकस्मिन्नेव शरीर उपक्षीणत्वाच्छरीरान्तरे तच्छून्यता स्यात् । अतः पुराणानां श्रुत्युपबृंहणत्वेन द्वितीयस्कन्धे 'योध्यात्मिकोयं पुरुषः सोसावेवाधिदैविकः । यस्तत्रोभयविच्छेदः स स्मृतो ह्याधिभौतिक' इत्याध्यात्मिकाधिदैविकयोरैक्यकथनात्तदनुसरणीयम् । तथा सति इन्द्रियदेवता अग्न्यादिरूपानेकरूपभवनसमर्था सर्वशरीरेषु प्रविष्टेति सङ्गच्छते । अनेकेन्द्रियोत्पत्तिनाशकल्पनापेक्षया देवतासामर्थ्यमात्रकल्पने लाघवं च भूयो भवति । भुज्युब्राह्मणोक्तः प्राणस्य समष्टिव्यष्टिभावः सामान्यविशेषभावेन व्याप्तिरूपोपि सङ्गच्छते । तस्मात्सर्वदा देवताधिष्ठानमावश्यकमित्यर्थः ॥ १४ ॥ इति षष्ठं ज्योतिराद्यधिष्ठानं त्वित्यधिकरणम् ॥ ६ ॥

## प्राणवता शब्दात् ॥ १५ ॥ (२-४-७)

अधिष्ठानभूतं यदग्न्यादि, तत्किं मुख्यप्राणसहितं सत् वागादीनीन्द्रियाण्यधि-

तिष्ठति, किंवा स्वतः केवलमेवाधितिष्ठतीति सन्देहे, स्वत एवाधितिष्ठति । पूर्वस्मिन्नधिकरणेऽग्न्यादीनामेवाधिष्ठातृत्वसाधनात्तदधिष्ठानमात्रेणैव वागादीन्द्रियव्यापारस्य सर्वजीवसान्निध्यादेश्च सिद्ध्या इतरसाहित्यप्रयोजनाभावात् । तदङ्गीकारे चाग्न्यादीनामप्यधिष्ठात्रन्तरापेक्षासम्भावनेनाग्रे तस्यापीत्यव्यवस्थानाच्च । अधिष्ठातृत्वस्यैव देवतात्वेन तस्या अधिष्ठेयतायां देवतात्वव्याघाताच्च । अतः स्वत एवेति पूर्वपक्षः प्राप्तः, तत्राह । प्राणेत्यादि । प्राणवता प्राणसहितेनाधिष्ठात्राधिष्ठितं वागादि । कुतः । शब्दात् । 'सोयमग्निः परेण मृत्युमतिक्रान्तो दीप्यत' इत्यादिरूपादुद्गीथब्राह्मणस्थाद्वाक्यचयात् । तत्र हि 'द्वयाः प्राजापत्या' इत्यादिना इन्द्रियाधिष्ठातॄणां देवानामसुराणां चैषु लोकेषु स्पर्धामुक्त्वा, प्रतिबन्धकासुरातिक्रमेण तेषां स्वर्जिगमिषायां 'स्वर्गकामो यजेते'त्यादिभिर्यज्ञैनैव तत्प्राप्तिमवगत्य, तत्रासुरकृतप्रतिबन्धं चाकलय्य, आश्वलब्राह्मणे याज्ञवल्क्येन 'उद्गात्रर्त्विजा वायुना प्राणेने'ति कथनादुद्गीथेनैवासुरातिक्रमेण स्वर्गाक्रमणं निश्चित्य, वागादीनामुद्गातृत्वेन वृतवन्तः, ततस्तेषां सर्वेषां पर्यायेणोद्गातॄणामसुरकृते पाप्मवेधे श्रमात्मकमृत्युव्याप्त्या अप्रतिरूपवदनादिरूपदोषसंसृष्टांस्तान्वीक्ष्यासन्यं प्राणमुद्गातारं चक्रुः, तस्य यदा वेधार्थमसुराः प्रवृत्ताः, तदा यथाऽश्मानं गत्वा लोष्ठविध्वंसो भवति, तथा असुरा एव नष्टाः, तदा तेन सर्वेषां देवानां पापसंबन्धवारणेन 'न ह वै देवान् पापं गच्छती'ति श्रुतिविप्रतिषेधोपि निवारितः । ततः 'सा वा एषा देवता एतासां देवतानां पापं मृत्युमपहत्याथैनां मृत्युमत्यवहत् । स वै वाचमेव प्रथमामत्यवहत् । सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्, सोयमग्निः परेण मृत्युमतिक्रान्तो दीप्यत' इत्यादिना मुख्यप्राणाश्रयवशाद्वागाद्यधिष्ठातृदेवानां मृत्युरूपश्रमात्मकपाप्मनिवृत्त्या प्रतिबन्धकासुरातिक्रमेण दीप्यमानत्वादिकमुक्तम् । अतो दीप्यमानस्यैवाधिष्ठातृत्वात्प्राणवतैवाग्न्यादिनाधिष्ठितं वागादीति सिद्धम् ॥ १५ ॥

## तस्य च नित्यत्वात् ॥ १६ ॥

ननु प्राणसंबन्धस्य जन्यत्वात्कादाचित्कत्वेन निवृत्तावधिष्ठातृत्वमप्यनियतं स्यादित्यत आह । तस्येत्यादि । प्राणस्य चकारात्तत्संबन्धस्य नित्यत्वादग्न्यादीनां सर्वदाधिष्ठातृत्वान्नानैयत्यमित्यर्थः । प्राणनित्यता तु श्रेष्ठश्चेत्यधिकरणे 'आनीदवात'मिति श्रुतिविचारेण निर्णीता । तत्संबन्धनित्यता तु छान्दोग्ये प्राणानां अहंश्रेयोविवादे अन्येषां प्राणानां मुख्यप्राणं विना स्थातुमशक्तिबोधकवाक्यैर्निर्णीयते । न चैवमेतत्साधनस्यासङ्गतत्वं शङ्कनीयम् । जीवपरिकरेषु मुख्यप्राणस्य मुख्यामात्यस्थानीयत्वेन तदधिष्ठानविचारस्याप्यावश्यकत्वात् । तदधिष्ठानेनैव जीवभोगस्य सुखेन सिद्धेरिति ॥ १६ ॥ इति सप्तमं प्राणवतेत्यधिकरणम् ॥ ७ ॥

## तदिन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥ १७ ॥ ( २-४-८ )

ननु इन्द्रियाणां प्राणाधीनसर्वव्यापारत्वात्तन्नामव्यपदेशाच्च प्राणवृत्तिरूपाणीन्द्रियाणि, किं वा नानाकार्यकरणात्तत्त्वान्तराणीति सन्देहे, नानाकार्यकरणस्यापानादिवत्सम्भवात्प्राणवृत्तिरूपाणीन्द्रियाणीति प्राप्ते, आह । तदिन्द्रियाणीत्यादि । तदिति लुप्तविभक्तिकं पदम् । तानि इन्द्रियाणि तत्त्वान्तराणि । कुतः । तद्व्यपदेशात् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे'ति श्रुताविन्द्रियशब्देन व्यपदेशात् । यदि हि प्राणवृत्तिरूपाणि स्युः, जननश्रुताविन्द्रियपदेन न व्यपदिष्टानि स्युः । प्राणाधीनव्यापारत्वं तु स्वामिभृत्यन्यायेनोपपद्यते । प्राणनामव्यपदेशस्तु द्रोणकर्णादिषु कुरुव्यपदेशवदुपपद्यते । अतो भिन्नशब्दवाच्यानां क्वचिदेकशब्दवाच्यत्वेपि नैकत्वम् । नन्वेवं सति प्राणापानादिशब्दवाच्यत्वादासन्येपि तर्हि भेदः स्यादित्यत आह । अन्यत्र श्रेष्ठादिति । प्राणस्य ते यौगिकाः शब्दाः पाचकपाठकादिवत् । अतो न ते भेदका इत्यर्थः ॥ १७ ॥

उक्तोपोद्बलनार्थं सूत्रद्वयेनान्यदपि हेतुद्वयमाह ।

## भेदश्रुतेः ॥ १८ ॥ वैलक्षण्याच्च ॥ १९ ॥

यत्रापि प्राणशब्दप्रयोगः, तस्यामपि श्रुतौ 'तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'ति भेदश्रवणात् । 'एवं ह वै परे देवे मनस्येकं भवती'ति सर्वेषामिन्द्रियाणां स्वापमुक्त्वा 'प्राणाग्नय एवैतस्मिन् पुरुषे जाग्रती'ति प्रश्नोपनिषदि वैलक्षण्यबोधनात् पूर्वोक्तरीत्या स्वामिसेवकवत् स्थित्यापि वैलक्षण्याच्चेन्द्रियाणि प्राणाद्भिन्नान्येवेति सिद्धम् ॥ १८–१९ ॥ इत्यष्टममिन्द्रियाणि तद्व्यपदेशादित्यधिकरणम् ॥८॥

## संज्ञामूर्तिक्लृप्तिस्तु त्रिवृत्कुर्वत उपदेशात् ॥ २० ॥ ( २-४-९ )

भूतानां वियदादीनां भौतिकानां लोकानां च सृष्टिः परमेश्वरादेवेति निर्णीय नामरूपव्याकरणमपि परमेश्वरादेवेति निर्णेतुमधिकरणान्तरमारभते । संज्ञेत्यादि । तत्र लोके नामरूपव्याकरणं कुलालादिजीवेषु प्रसिद्धम्, श्रुतौ च परमेश्वरादुक्तम्, अतः सन्देहे, जीव एव तत्कर्तेति युक्तम् । श्रुतौ 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति तदर्थकप्रवेशे जीवस्यैव मुख्यत्वात् । न च करणत्वबोधकतृतीयाविरोधः । चारेण परबलं प्रविश्याकलयामीतिवत्तस्या अविरुद्धत्वात् । न च तेषामलौकिके तत्करणे असामर्थ्यं शङ्क्यम् । जीवसमष्टिरूपस्य हिरण्यगर्भस्य समर्थत्वादिति पूर्वपक्षनिराकरणार्थं तुशब्दः । संज्ञामूर्त्योर्नामरूपयोः क्लृप्तिः करणम्, सा तु त्रिवृत्कुर्वतः 'सेयं देवतैक्षत हन्ताहमिमास्तिस्रो देवता अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणी'ति 'तासां त्रिवृतं त्रिवृतमेकैकां करवाणी'ति वीक्षणाकारकथनेन त्रिवृत्कर्ता परमेश्वरस्तस्मान्निश्चेया । कुतः । उपदेशात् ।

उप समीपे एकस्मिन्नेव वाक्ये देशात् त्रिवृत्करणनामरूपव्याकरणयोः प्रतिज्ञानात् । तथा च तदानीं जीवस्य शरीरसंबन्धाभावान्न नामरूपव्याकर्तृत्वं संभावयितुं शक्यम् । शरीरमन्तरेण तत्कार्यस्य क्वाप्यदृष्टत्वात् । अतः ' सर्वाणि रूपाणि विचित्य धीरः नामानि कृत्वाभिवदन् यदास्त' इति श्रुत्यन्तराद्भगवानेव नामरूपव्याकर्ता । न च जीवप्रवेशवैयर्थ्यं शङ्क्यम् । तद्भोगार्थमेवैतत्करणेन तत्प्रवेशस्यावश्यकत्वादिति । तस्माद्भगवानेव नामरूपप्रपञ्चकर्तेति सिद्धम् । सृष्टिप्रक्रिया तु द्वितीयस्कन्धसुबोधिनीतोवगन्तव्या ॥ २० ॥ इति नवमं संज्ञामूर्तिक्लृप्तिस्त्वित्यधिकरणम् ॥ ९ ॥

## मांसादिभौमं यथाशब्दमितरयोश्च ॥ २१ ॥ ( २-४-१० )

इदानीं त्रिवृत्करणप्रसङ्गादिदं विचार्यते । 'अन्नमशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति यो मध्यमस्तन्मांसं योणिष्ठस्तन्मनः । आपः पीतास्त्रेधा विधीयन्ते, तासां यः स्थविष्ठो धातुस्तन्मूत्रं यो मध्यमस्तल्लोहितं योऽणिष्ठः स प्राणः । तेजोशितं त्रेधा विधीयते तस्य यः स्थविष्ठो धातुस्तदस्थि भवति यो मध्यमः सा मज्जा योऽणिष्ठः सा वाक् । अन्नमयं हि सोम्य मन आपोमयः प्राणस्तेजोमयी वा'गिति मनआदीनां भौतिकत्वं श्रूयते । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि चे'त्यत्र स्वातन्त्र्यम् । एवं श्रुतिविप्रतिषेधात्संशये किं युक्तमित्यपेक्षायां पूर्वपक्षमाह । मांसादीति । मांसादि, पुरीषमांसे मूत्रलोहिते अस्थिमज्जा च । भौमं स्वस्वकारणजन्यं 'भूमिः स्थितौ स्थानमात्र' इति कोशात् भूमिरुत्पत्तिस्थानं तज्जन्यं यथायथं तेजोबन्नप्रकृतिकम् । तत्र हेतुः । यथा शब्दम् । अन्नमशितमित्यादिश्रुत्या निःसन्दिग्धप्रतिपादनात्तदनतिक्रम्य वर्तमानम् । एवं निःसन्दिग्धत्वे सति इतरयोर्मनःप्राणयोरपि यथाशब्दं भौतिकत्वं मन्तव्यम् । चकारेण छान्दोग्ये यथा तेजोमयीति । तथा ऐतरेये अग्निर्वाग्भूत्वेति वाचोपि निःसन्दिग्धत्वं सङ्गृह्यते । तथा च सर्वेषां तथात्वे एतयोरपि तथात्वमेव युक्तम् । उद्गमश्रुतिस्तु स्तुतिपरा, अतो भौतिकान्येव मनआदीनीति प्राप्तमित्यर्थः ॥ २१ ॥

## वैशेष्यात्तु तद्वादस्तद्वादः ॥ २२ ॥

अत्र समाधत्ते । तुः पूर्वपक्षनिरासे, वैशेष्यात् अन्नादिभिर्मनःप्रभृति विशेष्यते । छान्दोग्ये 'पञ्चदशाहानि माशी'रित्यारभ्य 'सान्नेनोपसमाहिता प्राज्वाली'दित्यन्ते ग्रन्थे कार्यक्षमत्वेन व्यक्तीक्रियते । अतो विशेषणं विशेषस्तस्य भावो वैशेष्यं तस्मादेव हेतोस्तद्वादः अन्नमयत्वादिवादः । न च प्राणवाचोस्तथात्वानुपपादनात्सन्देहम् । काममपः पिबेत्यविच्छेदनिदर्शनेनोपपादितप्रायत्वात् । किञ्च । उद्गीथब्राह्मणे ' अथा-

त्मनेऽन्नाद्यमागायत्, यत् किश्चान्नमद्यते, अनेनैव तदद्यत' इति प्राण एव सर्वस्यान्नस्यात्ता निर्दिष्टः । ऐतरेये वागादयोऽन्नार्थं मुखादिस्थानेषु प्रविष्टा उक्ताः, प्रथमसृष्टौ भिन्नतया च निर्दिष्टा इत्यत्तृत्वेनैवाभिप्रेताः । अतोपि नान्नादिकार्यभूताः । अन्नं चादनीयमात्रम्, न तु पृथिवी, तत्र तद्गमकस्याभावादिति । अतो मनआदीनि न भौतिकानि, किन्तु तत्त्वान्तराणीतिसिद्धम् । तद्वाद इति वीप्साऽध्यायसमाप्तिसूचिका ॥ २२ ॥
इति दशमं मांसादिभौममित्यधिकरणम् ॥ १० ॥

इति श्रीमद्वल्लभाचार्यचरणैकतानश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचितायां ब्रह्मसूत्रवृत्तौ द्वितीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥

**समाप्तोऽयं द्वितीयाध्यायः ।**

# EDITORS' NOTE.

The text of the present work is based on the Mss. written by the author's pupil Sri Purushottamaji in his own hand, except in a few places where the original was damaged. In such cases we had to consult other Mss. It seems our author always writes नैयायक instead of नैयायिक. We have accordingly retained नैयायक, though apparently the correct form should be नैयायिक. For the loan of Mss. we are obliged to Pandit Gattulalaji's Library and Srimad Vaishnava Parishad collection. We have to thank also H. H. Srimad Goswami Sri Vraja Ratnaji Maharaja of Surat and Seth Ichharam Pranjivandas for supplying us with funds for this publication. We offer this fruit of our labour of Love at the Lotus-Feet of Lord Sri Krishna.

16-6-24.<br>
Bombay, 4.

M. T. TELIVALA.<br>
D. V. SANKALIA.

श्रीकृष्णाय नमः ।

# भावप्रकाशिका ।

## श्रीमद्गोस्वामिश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचिता ।

(ब्रह्मसूत्रवृत्तिः)

## तृतीयाध्यायस्य प्रथमः पादः ।

**तदन्तरप्रतिपत्तौ रंहति संपरिष्वक्तः प्रश्ननिरूपणाभ्याम् ॥ १ ॥ (३-१-१.)**

प्रथमेऽध्याये वेदान्तवाक्यानां ब्रह्मणि समन्वयं, द्वितीयाध्याये च तेषामितरेतराविरोधं, तद्विरुद्धानां स्मृत्यादीनां चाप्रामाण्यं प्रतिपाद्योपनिषदामेव मुख्यतया ब्रह्मबोधकत्वम्, नेतरेषामिति दृढीकृतम् । अतः परं तृतीयेऽध्याये उपनिषदां ब्रह्मबोधनप्रकारश्चिन्त्यते, किं सर्वा उपनिषदः संहत्यैकां विद्यां जनयन्ति, उत तत्तच्छाखादिभेदेनानेकामिति । किञ्च । ताः सर्वत्र न जनयन्ति, किन्तु जन्मना कर्मणा शुद्धे पुंसि जनयन्ति मर्यादायाम् । पुष्टौ तु केवले शुद्धान्तःकरणेऽपि जनयन्ति । तस्मात्प्रथमपादे प्रकारशेषतया तदधिकारिणो जन्मप्रकारस्तत्प्रसङ्गागतं च निरूप्यते, द्वितीये तस्य ब्रह्मभावाप्तियोग्यताविचारपूर्वकं विषयावधारणप्रकारश्चिन्त्यते, तृतीये च बोधसौकर्यार्थं गुणोपसंहारः, चतुर्थे च तदङ्गभूतः क्रियोपसंहार इत्येतत्सर्वं विद्याजननोपयोगितया निरूप्यते । तत्र प्रथमे पादेऽधिकारिणो जन्मोच्यते । तच्च बृहदारण्यके छान्दोग्ये च पञ्चाग्निविद्यायामुक्तम्, 'असौ वाव लोको गौतमाग्निस्तस्यादित्य एव समिद्रश्मयो धूमोऽहरर्चिश्चन्द्रमा अङ्गारा नक्षत्राणि विस्फुलिङ्गास्तस्मिन्नेतस्मिन्नग्नौ देवाः श्रद्धां जुह्वति, तस्या आहुतेः सोमो राजा संभवति' इत्यादिभिः पञ्चभिर्वाक्यैः । तत्र द्वितीये वाक्ये पर्जन्यवाय्वभ्रविद्युदशनिह्रादनयो विस्फुलिङ्गान्ताः, सोमो राजा होम्यः, वर्षं फलम्, तृतीये पृथिवीसंवत्सराकाशरात्रिदिगवान्तरदिशो विस्फुलिङ्गान्ताः, वर्षं होम्यम्, अन्नं फलम्, चतुर्थे पुरुषवाक्प्राणजिह्वाचक्षुःश्रोत्राणि विस्फुलिङ्गान्ताः, अन्नं होम्यम्, रेतः फलम्, पञ्चमे योषोपस्थोपमन्त्रणयोनितदन्तःकृत्यभिनन्दा विस्फुलिङ्गान्ताः, रेतो होम्यम्, गर्भः फलम्, तदग्रे च, 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्तीति स उल्बावृतो गर्भो दश वा नव वा मासानन्तः शयित्वा यावद्वाथ जायते, स जातो यावदायुषं जीवति, तं प्रेतं दिष्टमितोऽग्नय एव हरन्ति, यत एवेतो यतः संभूतो भवति' इत्यन्तेन ।

अर्थस्तु, एतेष्वग्निषु देवा लोकपालाः कर्मसचिवाः श्रद्धादीनि जुह्वतीति । तत्र श्रद्धापदेनाप उच्यन्ते, 'श्रद्धा वा आप' इति श्रुत्यन्तरात्, न च शुद्धिजनकत्वसाम्यादत्र

गौणीति शंक्यम्, वैदिके निघण्टौ श्रत्पदस्य सत्यनामसु गणिततया श्रत् सत्यं दधातीति श्रद्धा इत्येवं योगस्य शक्यवचनत्वात्, एवञ्च द्युलोकाग्नौ देवैर्हुतानां श्रद्धाख्यानामपां परिणामः सोमो राजा संभवति, एवं हुतास्ता आपो द्युलोकस्थमंगारत्वेनोक्तं चन्द्रमनुप्रविश्यापूर्यमाणपक्षे पञ्चदशकलाभिः पोषणात्तमारभन्ते, एवमग्रेऽपि, पर्जन्येऽग्नौ हुतः सोमो राजा वर्षं भवति, तच्च वर्षं पृथिव्यग्नौ हुतमन्नं भवति, तदन्नं पुरुषाग्नौ हुतं रेतो भवति, तद्रेतश्च योषाग्नौ हुतं गर्भो जायते, तदाह 'इति तु पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति। ततो वैराग्यार्थमाह 'स उल्बावृतो गर्भ' इत्यादि। अत्र यद्यपि पञ्चाहुतीनां पुरुषमात्रसाधारण्यं प्रतीयते, तथापि चन्द्रगतेः साधारण्यस्याग्रे सूत्रेषु परिहरणीयत्वान्न सर्वसाधारण्यं तासाम्, अतः पूर्वजन्मनि ये निष्कामयज्ञादिकर्तारो ज्ञानरहितास्तेषां ज्ञानाभावेन यज्ञाभिव्यक्त्यभावान्न मोक्षः, कामाभावाच्च न स्वर्गादिर्मुख्यतया फलम्, साङ्गवैदिककर्मणः फलावश्यंभावनियमाच्च न वैयर्थ्यम्, किन्तु 'यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्' इति गीतावाक्यात्पावनता, अतस्तादृशयज्ञकर्तॄणां हविर्गृहीत्वा कर्मसचिवा देवाः वाजिशाखीयषट्प्रश्नीयब्राह्मणोक्तरीत्या आहुतिभिः स्वर्गं आनीतं यजमानं प्रत्युपकर्तुं तस्याग्रे ज्ञानजननार्थं पञ्चाग्निप्रकारेण देहं संपादयन्तीति तत्पराः पञ्चाहुतयः।

तत्रापामेव होम्यत्वश्रावणाज्जीवेन्द्रियाणां होमाभावेनाशुद्धिमाशंक्य तेषामपि होमं वक्तुमधिकरणमारभते। तत्रैते पञ्चाहुतयो धूममार्ग एव, अर्चिर्मार्गेऽपि वेति संदेहः। 'तद्य इत्थं विदुर्ये चेमेरण्ये श्रद्धातप इत्युपासते, तेऽर्चिषमभिसंभवन्ति' इति पञ्चाग्निज्ञानवतां यत्राचिरादिमार्गः, तत्र तथा देवहुतानां स कुतो न भवेदिति युक्तिः पुनरावृत्तिश्च संदेहबीजम्। किञ्च, योग्यदेहनिष्पत्त्यर्थं स्वयमेव भूतसहितो गच्छति, उत श्रद्धाहोमानन्तरं सोमभावे वा भूतसंबन्धः। 'तदेव तत्सह कर्मणैति लिङ्गं मनो यत्र निषिक्तमस्ये'ति देहान्तरप्राप्तिसाधकस्य मनःप्रधानस्य लिङ्गस्य 'एवं पञ्चविधं लिङ्गं त्रिवृत् षोडशविस्तृत'मिति पञ्चभूतसाहित्यस्मरणं श्रुतौ प्राणानामेवोत्क्रमणश्रावणाद्भूतोत्क्रमाश्रावणं च संदेहबीजम्। तत्र श्रौतेऽर्थे श्रौतन्यायेनैव निर्णयस्योचितत्वात्, भूतान्तरसाहित्ये होम्यानामपां गौणत्वापत्तेः संस्कृतभूतोपस्थापकस्याभावात्, तादृशस्योपकार्यस्य यजमानस्य शरीरवियोगोत्तरं देवानां तावद्विलंबे कारणाभावाच्च श्रद्धारूपाब्भोमानन्तरं होमान्तरे भूतसंबन्धः, अतो न भूतैः परिष्वक्तो गच्छति, इति प्राप्तम्।

तत्राभिधीयते। **तदन्तरप्रतिपत्तावि**त्यादि। 'आपः पुरुषवचसो भवन्ति' इति प्रश्नवाक्ये पुरुषपदस्य जीवाधिष्ठितदेहपरत्वात्तस्य निष्कामयज्ञादिकर्तुर्जीवस्य अन्तरे मध्ये मोक्षलक्षणस्य मुख्यफलस्यार्वाक् प्रतिपत्तौ योग्यशरीररूपावान्तरफलप्राप्त्यर्थम्; तस्य मुख्यफलस्य वा, अन्तरे या प्रतिपत्तिरवान्तरफलं तदर्थं वा, शरीरकारणभूतैर्भूतैः संपरिष्वक्त एव जीवो रंहति। पूर्वशरीरान्निष्क्रम्य द्युलोके गच्छति। 'तं विद्याकर्मणी समन्वारभेते,

पूर्वप्रज्ञा च' इति श्रुतौ जीवद्दशासंबन्धिज्ञानेन्द्रियजनितं ज्ञानं कर्मेन्द्रियजनितं कर्म, 'यं यं वापि स्मरन्भाव'मित्युक्ता मरणकालीना प्रज्ञा च भाविदेहारम्भकारणत्वेन श्राव्यते । अत्र च होमे कर्मणो रूपभूता आप उपलभ्यन्त इति जीवद्दशासंबन्धिकर्मरूपभूतानि सूक्ष्मभूतान्तराण्यपि तं परिष्वजन्तीति तैः परिष्वक्तो दिवि गच्छति । तत्र हेतुः । प्रश्ननिरूपणाभ्याम् । 'वेत्थ, यथा पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति प्रश्नः । 'असौ वाव लोको गौतमाग्नि'रित्यादिरूपं प्रतिवचनं निरूपणं ताभ्याम् । अयमर्थः । प्रश्ने पुरुषत्वं वक्ति । पुरुषश्च न देहमात्रम्, किन्तु जीवाधिष्ठितः । छान्दोग्ये 'प्राणो हि पिता प्राणो माता' इत्यत्र जीवविशिष्ट एव तत्तच्छब्दवाच्यतानिर्णयेन पुरुषपदेऽपि तन्न्यायस्य तुल्यत्वात्, अत्र च सिद्धवत्कारेण पुरुषतावचनात्, निरूपणेऽपि अङ्गाररूपेण पूर्वं सतश्चन्द्रस्य 'सोमो राजा भवति' इति राजत्वकथनतः प्रजात्मकचेतनान्तरसाहित्यसूचनेन, अन्याधिष्ठानादन्यदीयदेहासंभवेन सोमाधिष्ठानाद्यजमानदेहस्य वक्तुमशक्यतया च प्रथमाहुतौ जीवसाहित्यं प्राप्यते, तथा वर्षस्योषरे पातेऽन्नस्य मांसादिभावे रेतसो वृथापाते गर्भस्य स्रावादौ च पुरुषभावाभावादत्र फलोपहितैस्तैः सर्वैराहुत्यन्तरेऽपि तत्प्राप्यते । अतः कर्मानीतस्य सपरिकरस्य होम्यत्वेन लाभादित उत्क्रमणे संस्कृतैः सूक्ष्मभूतैः संपरिष्वक्त एव रंहति । एवं जीवसाहित्येऽप्यपामेव होम्यत्वोक्तिस्तु यथा वाजसनेयिनां षष्ठेऽग्नावग्नौ पुरुषस्य होम्यत्वेऽपि शरीरस्य मुख्यत्वम्, तद्वत्तन्मुख्यत्वाभिप्राया । अयं च देवकृतो होमस्तत्र तं ज्ञानार्थं तथा जनयतीति परिणामसुखदत्वादभिमानराहित्येनैव तत्र जीवस्थितेश्च न दुःखहेतुः । तस्मात्सर्वं सुष्ठु । अतो होमेऽपां गौणत्वस्य परिहृतत्वात्, तासां द्रव्यत्वेन कर्मरूपतया तद्धोमप्रयोजकानां पूर्वजन्मीनकर्मणामेव रूपभूतसंस्कृतभूतोपस्थापकत्वात्, अब्भोमस्य दिव्युक्तत्वेन तावत्पर्यन्तागमनस्यैव देवविलम्बे कारणत्वाच्च संस्कृतभूतसंपरिष्वक्त एव रंहति, नतु श्रद्धाहोमोत्तरं भूतसंबन्ध इति सिद्धम् ॥ १ ॥

**त्र्यात्मकत्वात्तु भूयस्त्वात्** ॥ २ ॥

ननु सकलभूतसंस्कारकत्वमस्य होमस्य न युक्तम्, वाक्येऽपामेव होम्यत्वेनोक्त्या तन्मात्रसंस्कारकत्वस्यैव प्रतीतेः । न चापां भूतान्तरोपलक्षकत्वमिति वाच्यम् । उपलक्षणतायां नियामकानुपलंभात्, तैत्तिरीये द्विदैवत्यहविःस्तुतौ 'अस्थि चैव तेन माꣳसं च यजमानः सꣳस्कुरुत' इति श्रावणेनान्यसंस्कारस्य प्रागेव सिद्धतया तद्विरोधापत्तेश्चेत्याशङ्कायामाह **त्र्यात्मकत्वात्त्वि**त्यादि । तुरुक्तशङ्कानिरासे । अपां ग्रहणे तेजोबन्नानि ग्राह्याणि । कुतः । त्र्यात्मकत्वात् । होम्यानामपां सृष्टिनिर्माणोत्तरवर्तित्वेन त्रिवृत्कृततया भूतान्तरसाहित्यात् तेषामनुक्त्यापि प्राप्तेः । नन्वेवं सति तेज एवोक्तं स्यात्, प्राथम्यात्, नत्वाप इत्याकांक्षायामाह **भूयस्त्वा**दिति । अब्ग्रहणे नियामकानां बहूनां सत्त्वात् । तानि च 'आपः स्वभावतो मेध्या' इति शुद्धत्वम्, श्रद्धाजनकतया सर्वत्राविशिष्टत्वम्,

मध्यभावात्तेजोऽन्नसंबद्धत्वम्, बृहदारण्यकोक्ते षष्ठे पर्याये भास्वरवर्णपुरुषतायां दीक्षित-तुल्यतया वक्तव्यत्वम्, पयःसोमादिरूपबहुहेतुकत्वम्, वृष्ट्यन्नरेतःशोणितरूपेण बहु-धापरिणामः, द्रव्यभूयोवरत्वं चेति बोध्यानि । न चोक्ततैत्तिरीयश्रुतिविरोधः । अस्थि-मांसयोः पूर्वयोस्तद्देहनिवृत्तावेव निवृत्तत्वात् । अतोऽग्रिमदेहार्थं भूतमात्रसंस्कारस्यावश्य-कत्वादपामेव ग्रहणं युक्तमित्यदोषः ॥ २ ॥

**प्राणगतेश्च ॥ ३ ॥**

लौकिकीं युक्तिमपि दर्शयति । प्राणस्य गतिः प्राणगतिः, 'तमुत्क्रामन्तं प्राणोनूत्क्रा-मति' इति श्राविता । अतः स निर्गच्छन् स्वाप्यायका आप आदायैव निर्गच्छति । लोके तथा दर्शनात् । अपां प्राणाप्यायकत्वं च 'काममपः पिबे' त्यत्र श्रावितम् । एतेनैव मनसा-न्नग्रहणं वाचा तेजोग्रहणं च बोधितं ज्ञेयम् ॥ ३ ॥

**अग्न्यादिगतिश्रुतेरिति चेन्न भाक्तत्वात् ॥ ४ ॥**

ननु 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राण' इत्यादिश्रुत्यन्तरे प्राणाना**म-ग्न्यादिगति**र्लयात्मिका श्रूयते, उक्तश्रुतौ चोत्क्रमणम्, अतः परस्परविरोधान्न विनिगमने-तिचेत्, न । कुतः । **भाक्तत्वात्** । अग्न्यादिगतिश्रुतिर्हि बृहदारण्यक आर्त्तभागब्राह्मणस्था, मरणावस्थां सिद्धवदनुवदति, सावस्था च मुक्तामुक्तयोस्तुल्या, तत्र मुक्तस्येन्द्रियाणि 'अत्रैव समवनीयन्त' इति श्रुतेर्ब्रह्मण्येव लीयन्त इत्येकः पक्षः । 'स वाचमेव प्रथमामत्यवह'दिति-श्रुत्युक्तरीत्या देवभूतानि भवन्तीति द्वितीयः पक्षः । तयोर्मध्ये देवभावपक्षमादाय प्रवृत्तेयं श्रुतिः प्रकरणव्यतिरेकेणामुक्तविषये त्वया नीयमाना अप्ययमिव बोधयन्ती भाक्ता भवति । अतो भाक्तत्वान्न विरोधाधायिका, तस्मात्सिद्धे उत्क्रमणे भूतैः संपरिष्वक्तो गच्छतीति सिद्धम् ॥ ४ ॥

**प्रथमेऽश्रवणादितिचेन्न ता एव ह्युपपत्तेः ॥ ५ ॥**

ननु पञ्चाग्निविद्यायां प्रथमाहुतौ श्रद्धा श्रुता, नापः । तास्तु 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ती'ति फलकथने श्रूयन्ते, उपक्रमस्त्वसंजातविरोधत्वाद्दुर्बलः। नच मनोधर्मस्य होमायोग्यत्वं शङ्कयम्, मनसा सह होमोपपत्तेः । नच तस्याः गौणत्वापत्तिः । यथा 'ह्यरु-णया पिङ्गाक्ष्यैकहायन्या गवा सोमं क्रीणाती'त्यत्र क्रयेऽरुणगुणस्य मुख्यत्वं गोद्रव्यावच्छेदक-तया, तथात्रापि मनोऽवच्छेदकतया तत्सिद्धेः । अतः प्रथमाहुतावपामश्रवणात् ताभिः परिष्वङ्गो न युक्त इति चेत् । न । **ता एव** आप एव श्रद्धापदेनोच्यन्ते । हि युक्तोयमर्थः । वैदिके निघण्टौ श्रदित्यस्य सत्यनामत्वात्, श्रत् सत्यं दधातीति श्रद्धेत्येवं योगेनाप्सु प्रवृत्तिसौकर्यात् । 'एतद्वा अपां नामधेयं गुह्यं यदाधावा' इतिवत् 'श्रद्धा वा आप' इति श्रुत्या योगरूढत्वस्यापि वक्तुं शक्यत्वाच्च । अत्र विनिगमकं हेतुमाह **उपपत्ते**रिति । उपक्रमः प्रश्नवाक्यम्, तादृगेव चोप-संहारे वाक्यमप्पदघटितम्, श्रद्धाशब्दस्तु मध्ये श्रुत इति तेन तौ नान्यथा नेतुं शक्यौ । श्रद्धा-

पदप्रयोगस्तु कामनाकृतकर्मव्यावृत्त्यर्थः, कामुकानां फल एव श्रद्धावत्त्वात् । अतो निष्कामयष्टृसंबन्धित्वमाहुतीनां बोधयितुं प्रथमाहुतिहोम्ये श्रद्धापदप्रयोगः । तेन प्रथमाहुतावप्यस्त्यपां श्रवणम् ॥ ५ ॥

**अश्रुतत्वादिति चेन्नेष्टादिकारिणां प्रतीतेः ॥ ६ ॥**

जीवः संस्कृतपरिष्वक्तो रंहतीति निर्णीतम् । तत्रेदं विचार्यते । किं सर्वे जीवाः संपरिष्वक्ता रंहन्ति, उत ज्ञानोपयोगिन एवेति संशयः । संशयबीजं तु श्रुतौ विशेषाश्रवणम्, देवानां तदुपकारार्थं प्रवृत्तिश्च । तत्र श्रौतेऽर्थे श्रुतानुसारिकल्पनाया एवौचित्यात् पञ्चाग्निब्राह्मणेऽधिकारिविशेषाश्रवणात् सर्वेषामेव पञ्चाहुतिप्रकार इति हृदिकृत्याह **अश्रुतत्वा-दित्यादि** । पञ्चाग्निब्राह्मणेऽधिकारिविशेषस्याश्रुतत्वात् सर्वेषामेव होम इति सर्वेऽपि भूतसंपरिष्वक्ता गच्छन्तीति चेत् । **न** । न सर्वेषां होमादिः । कुतः । **इष्टादिकारिणां प्रतीतेः** । 'यो वै श्रद्धामनारभ्य यज्ञेन यजते, नास्येष्टाय श्रद्धधत' इत्यश्रद्धालुनिन्दया, 'उभयेस्य देवमनुष्या इष्टाय श्रद्दधत' इति श्रद्धालुस्तुत्या च श्रद्धावत एव यज्ञः फलमुख इति पूर्वकाण्डे लभ्यते । ते च निष्कामयष्टारोत्र श्रद्धापदोक्त्या प्रतीयन्ते, देवानां च तेषामेव प्रत्युपकार आवश्यक इति देवानां होतृत्वेन च ते प्रतीयन्ते । 'अथ ये ग्रामे इष्टापूर्ते दत्तमित्युपासत' इत्यादिना धूममार्गव्युत्पादने 'आकाशाच्चन्द्रमसमेष सोमो राजा' इत्यादिना इष्टादिकारिणां सोमभाव उक्तः । अत्रापि प्रथमाहुतिफलं सोमभाव इति सोमभावश्रुतिसाम्यादपीष्टादिकारिण एव प्रतीयन्ते इति त एव तथा रंहन्ति, न सर्व इति सिद्धम् ॥ ६ ॥

**भाक्तं वानात्मवित्त्वात्तथाहि दर्शयति ॥ ७ ॥**

ननु यदि सोमभावश्रुतिसाम्यादिष्टादिकारिणो रंहन्तीत्युच्यते, तदा सोमभावे तेषामनिष्टं श्रूयते । 'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति' इति, समानश्रुतौ 'चाप्याययस्वापक्षीयस्वेत्येवमेनांस्तत्र भक्षयन्ति' इति । अतः किमेतयाहुत्या । किंच, चन्द्रवत्तेऽपि देवान्नभूता इति देवाः स्वान्नं कथं पर्जन्याग्नौ जुहुयुः । अतः पञ्चाहुत्यभाव इत्याशङ्कायामाह **भाक्तं वेत्यादि** । वाशब्दः शङ्कापरिहारे । तेषां सोमभावो भक्षणं च भाक्तम्, गौणम् । कुतः । **अनात्मवित्त्वात्** । सोमभावे मुख्ये हि मुख्यं भक्षणं संभवति, स हि मुख्यो ब्रह्मभावे सति भवति, 'स सर्वं भवति, तद्धैतत्पश्यन् ऋषिर्वामदेवः प्रतिपेदे मनुरभवमहं सूर्यश्च' इत्यादिश्रुतेः । एतेषां तु स न, तथा सति मोक्ष एव भवेत् । अतोनात्मवित्त्वात् सोमभावे गौणेऽन्नभावस्य गौणतया भक्षणमपि गौणमेव । अत्रोपष्टंभकमाह **तथाहि दर्शयतीति** । **तथा** शब्दस्य गौणभावं **हि** यतो हेतोः 'यावत्संपातमुषित्वा' इति श्रुतिरेव दर्शयति । यावत्कर्मफलभोगं वासेन बोधयति । अतो यथा 'अथ योऽन्यां देवतामुपास्ते, न स वेद यथा पशुरेवं हि देवानां पशुः' इत्यत्र यथा पशुशब्दो गौणः, एवमत्र

भक्षणमपि गौणम्। तथा च यथा 'स्त्रियं भुङ्क्ते' इत्यत्राभ्यवहारो भोग एव, न तु चर्वणादिकम्, तथा भक्षणमपि सहक्रीडादिकमेव। अतस्तेषामनिष्टाभावान्न कोपि दोषः। एवं प्रथमाहुतिः सफला विचारिता ॥ ७ ॥ इति प्रथमं रहस्यधिकरणम् ॥ १ ॥

**कृतात्ययेऽनुशयवान् दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥** (३-१-२.)

द्वितीयामाहुतिं विचारयितुमधिकरणान्तरमारभते। तत्र हि सोमस्य पर्जन्ये होमे वृष्टित्वम्। तत्र रूपरसादीनां हीनतया प्रतीयमानत्वाद्यागस्यावान्तरफलं चन्द्रलोके भुङ्क्ते इति निश्चितम्। तत्र भोगे संशयः। किं सर्वमेवावान्तरफलं भुङ्क्ते, उत अनुशयवान् वृष्टिर्भवतीति। अनशयो नाम शेषः। अनु पश्चात् शेते भोगानन्तरं तिष्ठतीत्यनुशय इति व्युत्पत्तेः। एतद्विचारप्रयोजनं तु सद्वासनयाग्रिमजन्मनि सदाचारयुक्तस्य भवनम्, अन्यथा सर्वस्य स्वभावाधीनतयोभयविधं कर्म संभवतीति निरनुशयत्वे, पूर्वकृतदुष्कर्मभोगस्यानुक्तत्वात् तेन कपूययोनित्वमापद्येत, नच वेदैरधीतैस्तदभावः, 'आचारहीनं न पुनन्ति वेदाः' इति बाधोपलब्धेः। तस्माद्विचार आवश्यकः।

तत्र पूर्वः पक्षः। आहुतिभिर्द्युलोके नीतानां तदग्नौ देवहोमोत्तरं सोमभावे तत्र बहुकालावस्थानं धूममार्गिणामवस्थाबोधिकया 'तस्मिन् यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्त' इति श्रुत्या कर्मभोगोत्तरं भवतीत्यवसीयते, सम्यक् पतत्युत्पतत्यस्माल्लोकात्स्वर्गं लोकमिति व्युत्पत्त्या संपातपदेन कर्मबोधनात्। एवं सति सकामानां धूममार्गिणां यथा सुकृतभोगोत्तरमावृत्तिः, तथैतेषामपि प्रारब्धभोगोत्तरमेव वृष्टिभाव इति न्यायसाम्यात्सिध्यति। स च भोगः सकामानां मुख्यं फलम्, निष्कामानामवान्तरफलम्, उभयथापि फलत्वस्याप्रच्यवात्सर्वस्य भोगः प्राप्नोति, शेषाङ्गीकारे 'यावत्संपातमुषित्वा' इति श्रुतिबाधप्रसङ्गात्। न चानुशयाभावे सद्वासनाशून्यतायामग्रिमजन्मनि सदाचाराभावप्रसक्तिः शङ्क्या। उक्तरूपदेवोद्यमेनैव ज्ञानोपयोगिशरीरभावादेव घटे छिद्रेतरत्ववदर्थबलादेव सदाचारसिद्धेः। अतो निरनुशय एव वृष्टिभावं प्राप्नोतीति।

एवं प्राप्ते, अभिधीयते। **कृते**त्यादि। कृतस्य सोमभावस्यात्यये नाशे सति, न च कृतपदेन कर्मैव कुतो न गृह्यत इति वाच्यम्, तस्य मुख्यफलावधिकत्वेनावान्तरफलभोगनाश्यत्वाभावादत्ययपदविरोधापत्तेः। कर्मपदप्रयोगाभावाच्चेति। अतः सोमभावनाशेऽनुशयवानवान्तरफलसाधकलेशसहित एव वृष्टिभावं प्राप्नोति। कुतः। **दृष्टस्मृतिभ्याम्**। लौकिकप्रत्यक्षेण स्मृत्या च तथा निश्चयात्। दृष्टं तावल्लोके भोगसाधनभूतद्रव्यनाशेऽपि भोगसाधकतादृशदेहवस्त्रादिसहित एव तस्मात्स्थानादपगच्छति। यदि फलशेषो नाङ्गीक्रियेत, तदा देहादेरपि कर्मजन्यत्वेन कर्मनाश एव तन्नाशात्सद्य एव देहः पतेत्। अतो यथा लोके सानुशयो गच्छति, तथात्रापि बोध्यम्। स्मृतिश्च पञ्चमस्कन्धे देवगाथा, 'यद्यत्र नः स्वर्गसुखावशेषितं स्विष्टस्य दत्तस्य कृतस्य शोभनम्, तेनाजनाभे स्मृतिमज्जन्म नः स्याद्वर्षे

हरिर्यद्भजतां शं तनोति' इति । अस्यां स्मृतौ 'शेषितं स्विष्टं दत्तं कृत'मित्यनुक्त्वा, 'स्विष्टस्य दत्तस्य कृतस्य शोभन'मिति यदुक्तम्, तेन कर्मजन्यफलशेषरूपानुशयलाभः । अतो दृष्टस्मृतिभ्यां तथा सिद्धत्वात् ज्ञानौपयिकं जन्मानुशयवत एव भवति, तदभावे पूर्वजन्मस्मृत्यभावाद्विषयासक्तेरिति । नन्वेतादृशानुशयाङ्गीकारे पूर्वजन्मस्मारकं संस्कृतेन्द्रियादिकमेव वक्तव्यम्, तच्च देहमन्तरेण स्वकार्याक्षमं सत् देहमाक्षेप्स्यतीति तत एव योग्यदेहः सेत्स्यतीत्यप्परिष्वङ्गो व्यर्थ इत्यत आह **यथेत**मिति । धूममार्गे 'यथेत'मित्युक्तम् । अत्राप्यग्रे वृष्टिभावादिरुच्यते । अतोऽप्परिष्वङ्गे त्यक्ते तद्विरुध्येत । तस्मान्न तद्वैयर्थ्यम् । अत्र शास्त्रे निष्प्रमाणककल्पनाभावादिति । ननु यदि पूर्ववदेवाप्परिष्वक्तत्वम्, तदा पूर्ववद्भोगसाहित्यमप्यापद्येतेति । अत आह **अनेवं** चेति । न एवम्, अनेवम्, पूर्वप्रकारयुक्तागमनं नास्ति, भोगस्य जातत्वात् । चकारेण वैराग्यसाहित्यं सूच्यते । तस्मादनुशयवान् देवकृपायुक्तो वैराग्यसहितो वृष्टिर्भवतीति सिद्धम् ॥ ८ ॥

**चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥ ९ ॥**

ननु नात्रोत्तमजन्मार्थमनुशयापेक्षा । कुतः । **चरणात्** । 'तद्य इह रमणीयचरणास्ते रमणीयां योनिमापद्येरन्, कपूयचरणाः कपूया'मिति पूर्वजन्मविहिताचारेण तादृशतादृशयोनिश्रावणात्प्रकृते पूर्वजन्मीनसदाचारादेव समीचीनं जन्म भविष्यतीति, किमनुशयेनेति चेत् । न । कुतः । **उपलक्षणार्था,** चरणश्रुतौ या योनिरुक्ता, सा पूर्वजन्मकृतकर्मज्ञापिका, न तु तस्मिन् जन्मनि समीचीनकर्मनियामिका । अन्यथा ब्राह्मणानां निषिद्धकरणं न स्यात् । अतस्तदर्थमनुशयेऽवश्यमङ्गीकार्ये 'साधुकारी साधुर्भवती'ति श्रुत्यनुसारेणैतज्जन्मन्यपि कर्मानुशय एव नियामको मन्तव्यः । न च चरणश्रुतिविरोधः । 'आपद्येर'न्निति गत्यर्थस्य ज्ञानार्थतायां व्यवधारणकल्पनया पूर्वजन्मज्ञापनार्थतया विरोधाभावात् । तस्मादियं श्रुतिरुपलक्षणार्थेत्यनुशयो ज्ञानोपयोगार्थमपेक्ष्यत इति कार्ष्णाजिनिराचार्यो मन्यते । नामग्रहणेन मतान्तरत्वं बोध्यते । तेन सिद्धान्ते पञ्चाग्निविद्यायां फलशेषरूपानुशयाङ्गीकारात् कर्मशेषरूपानुशयाभाव इति नाशङ्का, न चोत्तरम् । पञ्चाग्निविद्यायां पुरुषभावस्य नियतत्वेनान्यभावस्य वक्तुमशक्यत्वात् । न चैवं सति योन्यन्तरेपि मास्तु कर्मानुशय इति शङ्क्यम् । एतस्याः श्रुतेः प्रकरणगृहीतत्वेनान्यत्र न्यायसंपादकत्वाभावात् । अतोऽन्यार्थं कर्मानुशयस्यावश्यकत्वात् प्रसङ्गेनेदं मतान्तरलिखनं बोध्यम् ॥ ९ ॥

**आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥ १० ॥**

ननु पूर्वजन्मीनसत्कर्मज्ञानेन नास्मिञ्जन्मनि कापि फलसिद्धिः । अतश्चरणश्रुतेरुपलक्षकत्वाङ्गीकारे **आनर्थक्यं** दुर्वारम् । तथा च तस्या जन्मविधायकत्वमवश्यमङ्गीकार्यम् । तथा सति निष्कामयज्ञकर्तुरपि चरणादेव देहोत्पत्तिर्भविष्यतीत्यनुशयसहभावो व्यर्थ इति

चेत्। न। कुतः। **तदपेक्षत्वात्**। अपेक्षत इत्यपेक्षः पचाद्यच्, तस्या अपेक्षस्तदपेक्षस्तस्मात्। धूममार्गमुपक्रम्य चरणश्रुतेः पठितत्वेन धूममार्गस्य चरणापेक्षत्वात्। द्विविधो हि धूममार्गो निष्कामसकामभेदेन। तत्र निष्कामस्य पञ्चाग्निविद्यायां प्रवेशान्न तत्र चरणापेक्षा। सकामे तु 'ज्ञानं कर्म च कर्ता च त्रिधैव गुणभेदतः' इति गीतोक्तरीत्या कर्मकर्तृवैचित्र्ये केषाञ्चिच्चरणादेव योनिरिति तस्या नानर्थक्यम्। तत्रापि रमणीयानां कपूयानां च नानायोनीनामुक्तत्वात्तन्नियामकतया कर्मानुशयस्त्वावश्यक एवेति तस्याः श्रुतेर्योनिद्वारा कर्मानुशयोपलक्षकत्वं तदाप्यक्षुण्णम्। तस्मात्सानुशय एव वृष्टिभावं प्राप्नोतीति सिद्धम्॥१०॥

**सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥**

अभुक्तफले विहितनिषिद्धे कर्मणी एवानुशय इति बादरिराचार्यो मन्यते। तथा चाभुक्तफले ते एवानुशय इति 'मोक्षपर्यन्तं सोऽनुवर्तिष्यते' इतिसूत्रेण बोध्यते। 'तु'शब्दो निरनुशयशङ्कानिवृत्त्यर्थः। अत्रायमाशयः। निष्कामकर्मणां पावनत्वात्तत्प्रकारबोधनाय पञ्चाग्निविद्यायाः प्रवृत्तत्वात्तानि द्युलोके यजमानमानीय तिरोदधति। तदनन्तरकार्यं तु तद्व्यापारभूता देवा एव कुर्वन्तीति न तत्र कर्मानुशयः, किन्तु फलानुशय एव, यः पुनः सकामकर्मात्मको धूममार्गस्तत्र तु कर्मानुशय एव। अत एवैकादशे 'आत्मा च कर्मानुशयं विधूय' इति भगवतोक्तम्। अतस्तन्मार्गीयानुशयं संग्रहीतुं मतान्तराणामुपन्यासः। तेन सोमाहुतिः फलानुशयवत एव वृष्टिभावजनिकेति विचारितमिति॥११॥ इति द्वितीयं कृतात्ययाधिकरणम् २

**अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥ ( ३-१-३. )**

ननु 'ये वैके चास्मात् लोकात्प्रयान्ति चन्द्रमसमेव ते गच्छन्ती'ति कौशीतकिनः समामनन्ति। तत्र 'ये वैके चे'ति सामान्यवचनात्सर्वपदाच्च सर्वेषां सोमभवनं श्रुतम्। तेनेष्टादिकारिव्यतिरिक्ता अपि संग्रहीतुं शक्यन्ते। अत्रापि धूममार्गीयस्य पुनरावृत्त्युपसंहारे कपूयचरणाः कपूयां योनिमापद्यन्त इति श्रावणादपि तथा। तेन सर्वे चन्द्रमसं गच्छन्तीति द्वितीयाहुतिधूममार्गौ सर्वसाधारणौ। किञ्च। कर्माकर्मविकर्माण्यपि सर्वसाधारणानीति विहितकर्तुरपि कालकर्मस्वभाववशात् त्रयं संभवति। तत्र ज्ञानाभावे फलभोगनैयत्यात्तद्भोगः सोमभावानन्तरं वृष्ट्यन्नरेतःक्रमेण यदा जन्म, तदा वक्तव्यः। अतः सोमभावानन्तरमेव सर्वेषां जन्मप्राप्तिरिति यत् पूर्वाधिकरण इष्टादिकारिणामेव सोमभावाधिकारित्वं पञ्चाग्निसिद्धदेहानां फलानुशय एवेति प्रतिपादितम्, तदयुक्तमिति पूर्वपक्षः ॥ १२ ॥

**संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात् ॥ १३ ॥**

अत्र समाधत्ते। **संयमने**त्यादि। **'तु'** उक्तपूर्वपक्षनिरासे। संयमने यमसन्निधाने **अनुभूय** पुण्यपापफलं भुक्त्वा **इतरेषा**मिष्टादिकारिव्यतिरिक्ताना**मारोहावरोहौ** लोकान्तरीयसुखभोगार्थमारोहः, ततस्तत्तदनुभूयावरोहश्च भवति, नतु सोमगतिः पूर्वम्। कुतः। **तद्गतिदर्श-**

**नात्**। तेषामिष्टादिकारिणां तद्व्यतिरिक्तानां च परस्परविलक्षणगतेः श्रुतावुक्तत्वात्। वेदे हि सकामनिष्कामभेदेन द्विधा गतिः। तत्र सकामा कामभेदेनानन्तविधा। निष्कामा ज्ञानरहिता तु वैदिकगृह्यस्मार्तभेदेन वा चित्तशुद्धितदभावाभ्यां वा द्विविधा। तत्र गृह्यस्मार्ते यमाधीना। 'वैवस्वते विविच्यन्ते यमे राजनि ते जनाः, ये चेह सत्येनेच्छन्ते य उ चानृतवादिन' इति तैत्तिरीयश्रुतेः। श्रौते तु सोमभाव इति तूक्तमेव। तथा चैवं विसदृशगतिदर्शनान्न सर्वेषां सोमगतिरिति पूर्वाधिकरणद्वयसाधितेऽर्थे कोऽपि न दोष इत्यर्थः ॥ १३ ॥

**स्मरन्ति च ॥ १४ ॥**

एतमर्थं व्यासादयः स्मरन्ति च। 'यमेन पृष्टस्तत्राहं देवदेव जगत्पते। पूर्वं त्वमशुभं भुंक्ष्व उताहो नृपते शुभम्' इत्यादि। चात् लोकप्रसिद्धिः ॥ १४ ॥

**अपि सप्त ॥ १५ ॥**

पापोपभोगार्थं यमालयगमनङ्गीकार्यम्, यतस्तत्र रौरवादयः सप्त नरकाः सन्ति ॥१५॥

**तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥**

ननु यमगतिरधिकारिभेदादङ्गीकृता, नरकेषु च चित्रगुप्तादयो भिन्ना एवाधिकारिणः सन्तीति सापि गतिरतिरिक्ता स्यात्। तथा सति श्रुतिविरोधः। तत्र धूमार्चिरादिभेदेन गतिद्वयस्यैवोक्तत्वादिति। अत आह **तत्रापी**त्यादि। नरकादिषु येऽधिकारिणस्ते यमाधीना इति। तत्रापि यमस्यैव व्यापारान्न श्रुतिविरोधः। नहि गतिद्वयमेव श्रौतम्, मन्त्रलिङ्गेन यमगतेरपि सिद्धत्वात्। यदि सा नाङ्गीक्रियेत, तदा धूमादिमार्गद्वयस्याप्यनङ्गीकारापत्तिः। अर्चिरादौ 'आदित्याच्चन्द्रमस'मिति, धूमादौ 'आकाशाच्चन्द्रमस'मिति, 'पञ्चाग्नौ सोमो राजा भवति' इति श्राविताया श्चन्द्रप्राप्तेर्'ये के चे'ति कौशीतकिश्रुत्यनुरोधेन सर्वपरतायां चन्द्रगतिरेकैव श्रौती स्यात्, तथा च मन्त्रलिङ्गविरोधः। अङ्गीकृते तु तत्र यमव्यापारे मन्त्रलिङ्गपोषाच्चन्द्रयमगती द्वे अपि स्याताम्, कौशीतकिवाक्यस्यार्चिरादिवाक्यैरुपसंहारेऽर्चिरादिधूमादिमार्गावपि सुखेन स्यातामिति सर्वाविरोधाद्यमगतिरस्तीति सिद्धम् ॥ १६ ॥ इति तृतीयमनिष्टादिकारिणामित्यधिकरणम् ॥ ३ ॥

**विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥** (३-१-४.)

ननूपसंहाराङ्गीकारे कौशीतकिस्थसर्वपदसंकोचस्तु स्यात्। किंच, यदि यमगतिरप्यभिप्रेता स्यात्, तदा पञ्चाग्निविद्याप्रस्तावे साप्युच्येत। अतः संकोचाभावायानुक्तिनिर्वाहाय च सा नाङ्गीकार्येति शङ्कायामाह **विद्ये**त्यादि। उक्ताशङ्कानिरासार्थं तुशब्दः। नहि तृतीयमार्गाभावार्थं पञ्चाग्निविद्याप्रस्तावे विद्याकर्मणोरुक्तिः, किन्तु देवयानपितृयाणयोः प्रकृतत्वात्प्रश्नस्य तावतैव पूर्तेस्तदुक्तिः। अतस्तदनुक्तावपि न यममार्गासिद्धिः। संकोचोपि यमगतिबोधकवाक्यान्तरमूलक इति न दुष्टः। तस्मान्न यमगतेर्बाध इत्यर्थः ॥ १७ ॥

**न तृतीयेऽनथोपलब्धेः ॥ १८ ॥**

ननु यदि यममार्गः पृथगङ्गीक्रियते, तदा पञ्चाग्निविद्याप्रस्तावे यस्तृतीयत्वेनाङ्गीकृतः, 'अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति, जायस्व म्रियस्वेति तृतीयं स्थानम्, तेनासौ लोको न पूर्यते, तस्माज्जुगुप्सेते'ति निन्दया द्वयोः स्तुत्यर्थः । स एव तृतीयोस्तु । तत्र यममार्गान्तर्भावस्य शक्यवचनत्वादित्यत आह **न तृतीय** इत्यादि । यममार्गस्य तस्मिन्निवेशो न । कुतः । **तृतीये** 'जायस्वे'तिमार्गे **अनथोपलब्धेः** यममार्गविलक्षणभोगोपलब्धेः । समानब्राह्मणे 'कीटाः पतङ्गा यदि दन्दशूकम्' इति छान्दोग्योक्तक्षुद्रभूतनिष्कर्षात्तेषां च रौरवाद्यभावादिति ॥ १८ ॥

**स्मर्यतेपि च लोके ॥ १९ ॥**

साधकान्तरमाह । **अपिचा**न्यदपि यमगतिसाधकमस्ति, यतो लोके मूर्च्छादिषु यमलोकगमनसंभाषणपुनरागमनानि स्मर्यन्ते, तस्मात्सास्तीति ॥ १९ ॥

**दर्शनाच्च ॥ २० ॥**

यमपुरुषा दृश्यन्ते कैश्चिदजामिलप्रभृतिभिः । चकारात्तद्वाक्यान्यपि श्रूयन्ते । तस्माद्यमगतिरस्तीति तस्यामेव 'जायस्वे'तिमार्गस्य निवेशः । तस्मिन्नपि योनिबाहुल्येन विवेचकस्यावश्यमपेक्षणादिति ॥ २० ॥ इति चतुर्थं विद्याकर्मणोरित्यधिकरणम् ॥ ४ ॥

**तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥** ( ३-१-५. )

एवमधिकरणद्वयेन प्रासङ्गिकं विचार्येदानीं 'वृष्टेरन्नं भवती'ति सफलां तृतीयाहुतिं विचारयति । श्रुतौ हि 'वृष्टेरन्नम्' इत्युक्तम्, तत्प्रत्यक्षविरुद्धम्, बीजादन्नोत्पत्तिदर्शनात् । अतः संदेहः, किं वृष्टेर्निमित्तत्वम्, उत समवायित्वमिति । तत्र बीजावापं विनान्नोत्पत्त्यदर्शनात् वृष्टेर्निमित्तत्वमेव । अतोऽन्नस्यासंस्कृतबीजादेव भवनाद्योग्यदेहोत्पत्त्यर्थं यद्वृष्टेरन्नमित्युच्यते, तदसंगतमिति प्राप्ते, अभिधीयते **तृतीये**त्यादि । **तृतीये** वृष्टिहोमे **शब्दाविरोधः,** अन्नफलजनकहोम्यद्रव्यवाचकस्य वर्षशब्दस्य जलमात्रसंग्राहकतया कारणभूते निमित्तभूते च जले साधारणत्वात्समानेन वर्षशब्देनावरोधः कारणभूतस्यैव ग्रहणम् । कुतः । **संशोकजस्य ।** 'सदेव सोम्येदमग्र आसी'दित्यादिके सन्दर्भे 'तत्तेज ऐक्षत, ता आप ऐक्षन्त' इतिकारणभूतं जलं प्रकृत्य, 'तस्माद्यत्र क्वचन शोचति स्वेदते वा पुरुषस्तेज एव तदध्यापो जायन्ते' इति भौतिकत्रिवृत्कृतदशायां कारणकार्यवैजात्यं बोधयित्वाग्रे 'तस्माद्यत्र क्व च वर्षति तदेव भूयिष्ठमन्नं भवति' इति कारणत्वेन श्रावणात् । अतः पञ्चाग्निविद्यायां देवहोमात्कारणभूतजलस्यैव वृष्टिरिति न तत्र बीजान्तरापेक्षा । तस्मात्सूपपन्नं वृष्टेरन्नमिति संस्कृतान्नमेव योग्यदेहोत्पादकम् । संशोकजपदोक्तिस्तु 'यदश्रवशीयत तद्रजतꣳहिरण्यमभव'दितिश्रुत्यन्तरसंमतिसूचनार्थम् ॥ २१ ॥

## साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

ननु कारणजलरूपवृष्टिरत्र न वक्तुं शक्यते, यतः समाने धूममार्गेऽस्य तदैक्ये वा वृष्टेरन्नभावोक्तौ, 'यावत्संपातमुषित्वा, अथैतमेवाध्वानं पुनर्निवर्तन्ते, यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति, धूमो भूत्वाभ्रं भवति, अभ्रं भूत्वा मेघो भवति, मेघो भूत्वा प्रवर्षति । त इह व्रीहियवा औषधिवनस्पतयस्तिलमाषा इति जायन्त' इति श्रूयते । अत्र च 'यथेत'-मित्यनेनाकाशमवरोहतीत्युच्यते । आरोहे 'आकाशाच्चन्द्रमस'मित्युक्तत्वात् । ततो वायुमागतस्याग्रे वायुर्भूत्वेत्यादिना क्रमेण वायुधूमाभ्रमेघव्रीह्यादिभाव उच्यते, ते च वाय्वादयस्तत्तदनन्तरभावित्वाज्जन्याः, अतस्तन्मध्यपतिता प्रवर्षतिशब्दोक्ता वृष्टिरपि कार्यजलात्मिकैव, न कारणजलात्मिका, ततश्च बीजान्तरस्यावश्यकत्वान्न वृष्टेर्ज्ञानयोग्यदेहकारणत्वमित्याशङ्कायामाह **सेत्यादि** । **सा** वाय्वादिरूपापत्तिः, **आभाव्यापत्तिः,** वाय्वादिवदाभानरूपा विपत्तिः, सोमतेजोभावापन्नस्य वाय्वादिक्रमेण जलभावापत्तौ कान्तिनाशात् । तत्र वृष्टिभावार्थमागच्छन्त्याहुतिर्मध्ये वायुसादृश्या'द्वायुर्भूत्वे'त्युच्यते, एवमग्रेपि । कुतः । **उपपत्तेः** । अन्यस्यान्यत्वेन कथने आकृतेरेव नियामकत्वस्य चित्रतुरगादौ दर्शनात् । 'आदित्यो यूपः' इत्यादौ च तथासिद्धत्वाच्च । न च भूत्वाश्रुतेर्विरोधः । भवनेन अन्यस्यान्यभावं वदन्त्याः श्रुतेर्गौणत्व एव तात्पर्यादिति । तस्मादाकृतिमात्रेण न स्वरूपान्यथाभाव इति सोमाहुतेरेव तत्तदाकृत्या वृष्टिरूपतायामपि कारणरूपत्वानपायात् तत एव ज्ञानयोग्यदेहनिष्पादकमन्नं भवतीति सिद्धम् ॥ २२ ॥

## नातिचिरेण विशेषात् ॥ २३ ॥

स्वरूपान्यथाभावाभावे उपपत्त्यन्तरमाह **नेत्यादि** । साभेति पूर्वस्मादनुवर्तते । तथा च तद्रूपता **नातिचिरेण,** न बहुकालम्, तृतीयाप्रतिरूपकमिदमव्ययम्, न तु तृतीयार्थकम् । कुतः । **विशेषात्** । 'अतो वै खलु दुर्निष्प्रपतर'मित्यनेनान्नाभावापन्नस्यैव बहुकालश्रवणात् । दुर्निष्प्रपतरमिति दुष्प्रापतरम्, वर्णलोपश्छान्दसः । अतस्तृतीयाहुतौ शीघ्रमायाति । न चावरोहक्लेशस्यात्र सिद्धौ धूममार्गात् को विशेष इति शङ्क्यम् । एतस्य क्लेशस्य धूममार्गप्रस्तुत्योक्तत्वात्पञ्चाग्निमार्गस्य ततो भिन्नत्वे अत्र वैराग्यादिमतो निरभिमानस्यैव ताद्रूप्यान्न क्लेशदोषः । ऐक्यपक्षे तु ज्ञानिनो गृहस्थस्य दुर्लभत्वाज्जघन्य एव क्लेशो न मध्यमाधिकार्यादाविति विशेषसत्त्वात् ॥ २३ ॥ इति पञ्चमं तृतीयशब्दावरोधाधिकरणम् ॥ ५ ॥

## अन्याधिष्ठितेऽपूर्ववदभिलापात् ॥ २४ ॥ (३-१-६.)

चतुर्थ्याहुतिर्विचार्यते । अन्नभूतस्य होम्यत्वमुपपद्यते, न वा, अन्नभूतस्य रेतोभावोऽप्युपपद्यते न वेति । तत्र 'संसर्गजैः कर्मदोषैर्याति स्थावरतां नर' इतिस्मृत्यान्नस्य पापजन्यत्वे सिद्धे, पूर्वाहुतिशुद्धस्य जीवस्यान्ने प्रवेशासंभवात् । अन्नस्य संस्कृताहुतिजन्यतया तद्भिन्न-

त्वाङ्गीकारेपि कण्डनपाकादिदुःखेन जीवापगमसंभवाच्च न रेतोभाव इति प्राप्ते, प्रथमं रेतोभावानुपपत्तिं परिहरति **अन्येत्यादि** । अत्रापि साभेति पूर्ववदनुवर्तते **अन्याधिष्ठिते,** वृष्टेरन्नभावसमय एवान्यैर्जीवैरधिष्ठिते व्रीह्यादौ । **अपूर्ववत्,** न पूर्वः, अपूर्वः अतिथिः तद्वत्, न पूर्ववत् अपूर्ववत् । पूर्ववैलक्षण्येन वा साभा, तद्भावापत्तिः । न पापजन्यान्नवदस्यान्नभावापत्तिः, किन्तु तद्विलक्षणतया, यथा ह्यन्यगृहेऽतीथिस्तिष्ठत्यनभिमानितया, तथास्थितिः । यथा वा पूर्वं वाय्वादिसारूप्यम्, तथा नान्नसारूप्यम्, किन्तु तद्वैलक्षण्येन । कुतः । **अभिलापात्** । अत्र हि पूर्ववत्तद्भावमात्रं न वदति, किन्तु 'व्रीहियवा ओषधिवनस्पतयस्तिलमाषा इति जायन्त' इति जगति स्थितव्रीह्यादिप्रकारेण जननमेवाभिलपति । तथा सति यथान्येषु व्रीह्यादिषु तदधिष्ठातृदेवतया नियुक्ता जीवास्तानात्मत्वेनाभिमन्यन्ते, एवमत्राप्यन्येऽभिमन्यन्ते । अयं त्वनभिमानस्तत्र तिष्ठति । तथा सति नास्य कण्डनादिक्लेशः, नापि जडभावः । न च कण्डनादिभिर्जीवापगमः । तादृशस्यापि बहुकालस्थितौ कृमिकीटादिभावदर्शनात् । अतोऽनभिमानस्याभिमानिनां च रेतोभावो नायुक्त इति सिद्धम् ॥ २५ ॥

## अशुद्धमिति चेन्न शब्दात् ॥ २५ ॥

नन्वन्याधिष्ठानेऽङ्गीक्रियमाणे यातनाजीवानामशुद्धत्वात्तदधिष्ठितमन्न**मशुद्धं** स्यात्, तथा च कथं योग्यदेहसंभव इति **चेत्, न** । कुतः । **शब्दात्** । 'देवा अन्नं जुह्वति तस्या आहुते रेतः संभवती'ति देवैराहुतिरूपेण होमवचनाच्छुद्धत्वम् । अन्यस्यापि होम्यस्यान्नस्य संस्कारेणैव शुद्धिरितीहापि होमाख्यसंस्कारशब्दाच्छुद्धमेवान्नमिति सिद्धम् ॥२५॥ इति षष्ठमन्याधिष्ठित इत्यधिकरणम् ॥ ६ ॥

## रेतः सिग्योगोथ ॥ २६ ॥ ( ३-१-७. )

पुरुषेऽन्नहोमेऽन्नस्य रेतोभावे सति रेतसो होम्यत्वम् । तदुपपद्यते नवेति संदेहे पञ्चमाहुतिं विचारयति । तत्र पुरुषेऽन्नहोमेऽपि बाल्यकौमारवार्धकेषु रेतोभावव्यभिचारात्तारुण्येऽपि सर्वस्य रेतोभावाभावात्, रेतोभावेऽपि नियमेन योनौ सेकाभावात्, पुरुषप्रयत्नस्य सत्त्वेन देवापेक्षाभावाच्च होम्यत्वं नोपपद्यत इति प्राप्ते । उच्यते । **रेत** इत्यादि । सूत्रे **रेतःसिक्**पदेन पुरुषपदस्य विवरणं क्रियते । तेन पौरुषधर्मवानुच्यते । पौरुषं च देशकालसंविधानेन मन्त्रवद्रेतःसेकसामर्थ्यम् । तादृग्धर्मवति योऽन्नहोमः, स प्राणाग्निहोत्रोपनिषदाद्युक्तप्रकारेणेति तत्र देवापेक्षा । न हीन्द्रियाधिष्ठातृदेवप्रसादं विना तथा भोक्तुं शक्यते । ईश्वरेच्छया भवनेऽपि तेषामेव द्वारत्वात् । अत एव तस्यान्नस्य रेतोभावो योनौ नियमेन सेकश्च पुत्रमन्थब्राह्मणोक्तरीत्या भवतीति सुखेन होम्यत्वं संगच्छत इति पूर्वोक्तदोषनिरासः । ननु कथमेतदवगम्यते, यत्पुरुषपदेनैतावल्लभ्यत इति । तत्राह **अथेति** । आनन्तर्यात्, शरीरार्थमेव देवानामुद्यम इति स कथं पञ्चमा-

हुतावेव व्यभिचरेत् । अतः पुरुषे आहुतिर्नान्नादनमात्रा रेतोमात्रफला, किन्तु रेतः-सिग्योगपर्यन्तेत्यर्थः । योगपदेनात्र नान्याधिष्ठानम्, किन्तु एकस्यैव संबन्ध एकस्यैवो त्पत्तेः प्रायोदर्शनादिति सूच्यते ॥ २६ ॥ इति सप्तमं रेतःसिग्योगाधिकरणम् ॥ ७ ॥

**योनेः शरीरम् ॥ २७ ॥ ( ३–१–८. )**

हूयमानं निरूप्य फलं निरूपयति । तत्र हि 'तस्या आहुतेर्गर्भः संभवती'त्युच्यते । तत्र संदेहः । योनावन्तःस्थितमेव फलम्, उत बहिर्निर्गतमिति । तत्र गर्भशब्देनान्तः स्थित एव, शरीरपरत्वे गर्भश्रुतिबाधप्रसङ्गात् । न च पञ्चम्यामाहुता'वापः पुरुषवचस' इत्युपसंहारविरोधः । अग्रे कर्तव्याभावेन तथोक्तिरित्यविरोधात् । तथा च षण्मासानन्तरं गर्भे ज्ञानसंभवात् तत एव पुरुषार्थसिद्धेर्गुरूपसत्त्यादिकं तेन न कर्तव्यमिति प्राप्ते, अभिधीयते । **योने**रित्यादि । योनेर्निर्गतं शरीरमेव गर्भशब्देनोच्यते । अरण्यादेरुत्थितस्याग्नेः फलरूपत्वदर्शनेन अत्रापि सिद्धस्यैव फलताया युक्तत्वात् । न च गार्भिकं फलोपधायकम्, बहिर्निर्गतस्य वैष्णव्या मायया तत्तिरोधानात् । न च गर्भपदविरोधः । मातृपरिपाल्यत्वाय तथा वचनात् । शरीरपदेन वैराग्यवत्ता सूच्यते । तस्माच्छरीरमेव फलमिति सिद्धम् । तस्माद्योग्यदेहसाधनसहितो ब्रह्मज्ञानार्थं निरूपितः ॥ २७ ॥ इत्यष्टमं योनेः शरीरमित्यधिकरणम् ॥ ८ ॥

**इति श्रीमद्वल्लभाचार्यचरणैकतानश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचितायां ब्रह्मसूत्रवृत्तौ तृतीयाध्यायस्य प्रथमः पादः ॥ श्रीः ॥**

श्रीकृष्णाय नमः ।

# तृतीयाध्यायस्य द्वितीयः पादः ।

## सन्ध्ये सृष्टिराह हि ॥ १ ॥ ( ३-२-१. )

पूर्वस्मिन् पादे जीवस्याधिकारिणो ज्ञानोपदेशयोग्यदेहप्राप्तिर्निरूपिता । सा तदार्थवती स्यात्, यदि जीवस्य मुक्तौ स्वरूपयोग्यता स्यात् । अत एककार्यकारित्वेन तन्निरूपणायायं पाद आरभ्यते । दैहिकी योग्यता बाह्या, जैवी त्वान्तरी, इत्यन्तरङ्गत्वात् ततः पश्चात्साधन-निरूपणाच्च पूर्वं निरूप्यते । तत्र स्वप्नस्य सत्यत्वे तत्कृतगुणदोषसंबन्धः प्राप्तयोग्यदेहस्यापि जीवस्य भवेत्, ततश्च पूर्वनिरूपिता शुद्धिर्वृथा स्यादिति स्वप्नस्य मिथ्यात्वं दर्शयितुमधिकरण-मारभते । तत्र स्वप्नसृष्टिः सत्या मिथ्या वा इति संशये, सूत्रद्वयेन पूर्वपक्षमाह । **संध्ये** जाग्रत्सुषुप्त्योः सन्धौ भवे स्वप्नाख्ये स्थाने सृष्टिर्जायते । तत्र प्रमाणं वदति **आहे**ति । 'तस्य वा एतस्य पुरुषस्य द्वे एव स्थाने भवतः इदं च परलोकस्थानं च, सन्ध्यं तृतीयं स्वप्नस्थान'मि-त्युपक्रम्य, बृहदारण्यके श्रुतिराह 'न तत्र रथा न रथयोगा न पन्थानो भवन्ति अथ रथान् रथयोगान् पथः सृजते' इत्यादिना । **हि** युक्तोऽयमर्थः । दर्शनसंवादित्वात् । देवा-दिवाक्यानां प्रबोधोत्तरमपि बाधाभावाच्च । तस्मात् स्वप्ने सृष्ट्यन्तरमस्ति ॥ १ ॥

सा सृष्टिर्जीवकृता, परमेश्वरकृता वेति संदेहे पठति ।

## निर्मातारं चैके पुत्रादयश्च ॥ २ ॥

काठके चतुर्थवल्ल्यां 'य एष सुप्तेषु जागर्ति कामं कामं पुरुषो निर्मिमाणः, तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते' इत्येके शाखिनो **निर्मातार**माहुरिति पूर्वसूत्रोक्ता आहेतिक्रिया वचनविपरिणामेन संबध्यते । 'शतायुषः पुत्रपौत्रान् वृणीष्वे'त्यत्रोक्ताः पुत्रादयश्च तथाहुः । तेषां कामविषयाणां वक्तृत्वं तु 'तपांसि सर्वाणि च यद्वदन्ती'ति-वद्बोधकत्वाद्बोध्यम् । 'ये ये कामा दुर्लभा मर्त्यलोके' इति पूर्वश्रुतौ कामशब्दस्य काम-विषयेषु प्रयुक्तत्वात् 'कामं काम'मित्यत्रापि कामविषयाः पुत्रादयो निर्मिता ग्राह्या इति बोधनाय तद्ग्रहणम् । तथा च 'स्वयं निर्माये'ति श्रुतावनन्तरं 'प्रस्वपिती'तिकथनात् स्वापेन लिङ्गेन प्रकरणं ब्राह्मं बाधित्वा, जीवकर्तृकत्वमपि संदिह्येतेति तदभावायैतत्सूत्रप्रण-यनम् । एतद्विषयवाक्ये 'सुप्तेषु जागर्ती'ति जागरणलिङ्गात्प्रकरणात् 'तदेव शुक्र'मितिवाक्य-शेषाच्च भगवानेव कर्तेत्यवसीयते । ब्रह्मकर्तृका च सृष्टिः सत्यैवेति प्राप्तज्ञानयोग्यदेहस्यापि जीवस्य स्वाप्नगुणदोषसंबन्धस्यावर्जनीयत्वात् व्यर्थो योग्यदेहारम्भ इति प्राप्तेऽभिधीयते २

## मायामात्रं तु कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात् ॥ ३ ॥

स्वप्नसृष्टिर्मायामात्रम् । माया नाम परव्यामोहकः शक्तिविशेषः । 'नटवन्मूढ माया-भिर्मायेशान्नो जिगीषसी'ति बलिं प्रतीन्द्रवाक्ये तथा दर्शनात् । तन्मात्रं तदुपादायकं

मिथ्या चैन्द्रजालिकसृष्टिवन्मायिकी मिथ्या। कुतः। **कार्त्स्न्येनानभिव्यक्तस्वरूपत्वात्**। देशः कालो विषयसन्निधिरिन्द्रियव्यापारो बाधकाभावश्चेत्यपेक्षिता सामग्री कार्त्स्न्यम्। तेन अनभिव्यक्तं अप्रकटीकृतं स्वरूपं यस्याः । तादृशत्वात्। तथा च तद्विरुद्धतयोद्भूतत्वात्सा मिथ्येति जीवस्य तत्कृतगुणदोषसंबन्धाभावान्न साधनसंपादितयोग्यदेहवैयर्थ्यमित्यर्थः ॥ ३ ॥

**सूचकश्च हि श्रुतेराचक्षते च तद्विदः ॥ ४ ॥**

ननु यदि स्वक्रीडार्थं सृजति, तदा तत्तज्जीवसाक्षिकमेव कुतः सृजतीत्यत आह। स्वप्नः शुभाशुभफलसूचको भवति । तथा च प्रतिनियततच्छुभाशुभसूचनार्थं तथा सृजतीत्यर्थः । इदं च प्राप्तयोग्यदेहस्याप्यावश्यकम् । तेन अविरुद्धार्थनिवर्तकोपायस्य कर्तव्यत्वादिति। चकारात्क्वचिदाह्लादादानादेरप्यनुकूलः। प्रत्यक्ष आह्लादानादौ कलिकालादेर्बाधकत्वादिति । **हि** युक्तश्चायं सूचकत्वादिरूपोऽर्थः । प्रातर्जाग्रति सूचितफलस्यैव दर्शनादिति । सूचकत्वे प्रमाणमाह **श्रुतेरि**ति । सा च 'यदा कर्मसु काम्येषु स्त्रियं स्वप्नेषु पश्यति, समृद्धिं तत्र जानीयात्तस्मिन्स्वप्ननिदर्शन' इति । तथा 'पुरुषं कृष्णं कृष्णदन्तं पश्यति स एनं हन्ती'तिरूपा । किंच, **आचक्षते च तद्विदः** । स्वप्नाध्यायविद ऋषयश्च 'आरोहणं गोवृषकुञ्जराणा'मित्यादिकं शुभादिसूचकतयाचक्षत इत्यर्थः ॥ ४ ॥

ननु जीवार्थं भगवांस्तादृशीं सृष्टिं करोतु, प्रदर्शयतु च, परन्तु जीवस्य ब्रह्मांशत्वाद्दुःखित्वमेव कुत इत्याशङ्कायामाह ।

**पराभिध्यानात्तु तिरोहितं ततो ह्यस्य बन्धविपर्ययौ ॥ ५ ॥**

उक्ताशङ्कां वारयितुं तुशब्दः । जीवस्यैश्वर्यादिकं तिरोहितम्। तत्र हेतुः **पराभिध्यानात्**। परस्य भगवतोऽभितो ध्यानं परकर्तृकं जीवकर्मकं सर्वप्रकारेण भोगस्यालोचनं तस्मात्। ततो भगवद्धर्मतिरोधानात् **अस्य** जीवस्य **बन्धविपर्ययौ** संसारासक्तिरूपो बन्धो भगवद्धर्मविपरीतधर्मवत्त्वं च । तत्रायं विभागः। ऐश्वर्यतिरोभावाद्दीनत्वं पराधीनत्वम्। वीर्यतिरोभावात्सर्वदुःखसोढृत्वम् । यशस्तिरोभावात्सर्वहीनत्वम्। श्रीतिरोभावाज्जन्मादिसर्वापद्विषयत्वम्। ज्ञानतिरोभावाद्देहाद्यहंबुद्धिः सर्वविपरीतज्ञानम्। वैराग्यतिरोभावाद्विषयासक्तिः। भगवद्धर्मतिरोधानकार्यं च बन्धादीति । तथा च ब्रह्मांशत्वेपि ब्रह्मधर्मतिरोधानात् दुःखित्वमित्यर्थः ॥ ६ ॥

एवं स्वमतेनेश्वरेच्छयैश्वर्यादितिरोभावं निरूप्य मतान्तरेण तन्निरूपयति ।

**देहयोगात्सोऽपि ॥ ६ ॥**

**वा**शब्दोऽनादरे। **सः** सर्वतिरोभावो विपर्ययो वा । **अपि**शब्दादहन्ताममतारूपो बन्धश्च **देहयोगात्** सूक्ष्मदेहसंबन्धात् । तथा च देहसंबन्धात् दुःखित्वं तद्वियोगे पुनरै-

श्वर्यादिप्राप्तिरित्यर्थः । पूर्वमते तु विद्यमानेऽपि देहे तदाप्तिरिति विशेषः । तेन कदाचिदीश्वरेच्छया, कदाचित् देहयोगेन विकल्प इति बोधितम् ॥६॥ इति प्रथमं सन्ध्याधिकरणम् ॥१॥

एवं स्वप्नस्य मिथ्यात्वप्रसङ्गेन जीवस्य विपरीतज्ञानजनकमज्ञानं निरूप्य केवलमज्ञानं निरूपयितुं अज्ञानस्थानं स्वप्नाभावं च निरूपयति ।

**तदभावो नाडीषु तच्छ्रुतेरात्मनि च ॥ ७ ॥**

कौशीतकिब्राह्मणे श्रूयते, नाडीरनुक्रम्य 'तासु तदा भवति यदा सुप्तः स्वप्नं न कंचन पश्यति अथास्मिन्प्राण एवैकधा भवतीति' । तथा बृहदारण्यके 'प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तर'मिति । तत्र स्वप्नवन्मायिकप्रपञ्चसृष्टिं भगवान्करोति, न वेति संशयः । काठके सुप्तौ सृष्टिनिर्माणश्रावणात् विषयवाक्ये च दर्शनाभावमात्रश्रावणात् संदेहः । तत्र 'य एष सुप्तेषु जागर्ती'ति काठके जीवस्वापमात्रे भगवत्कृतसृष्टेरुक्तत्वात् कौशीतकिवाक्ये च स्वप्नदर्शनमात्रनिषेधात् बृहदारण्यके जाग्रत्स्वप्नप्रपञ्चयोरविशेषेणादर्शनस्यैव कथनात् सृष्टेरनिषेधे सुषुप्तावपि प्रपञ्चसृष्टिरस्तीति प्राप्तम् । तत्रोच्यते । **तदभाव** इत्यादि । तस्य स्वप्नसृष्टिनिर्माणस्याभावो **नाडीषु**,तथा**त्मन्यपि तदभावः**। कुतः।**तच्छ्रुतेः**। सुषुप्तावस्थायां प्रपञ्चाभावहेतुबोधकाकामरूपत्वश्रुतेः । काठके हि 'कामं कामं पुरुषो निर्मिमाण' इति कामविषयाणां निर्माणश्रावणात् पुरुषकामनया स्वाप्नः प्रपञ्चो बोधितः । बृहदारण्यके तु 'तद्वा अस्यैतदात्मकाममाप्तकाममकामं रूप'मिति सुषुप्तावस्थायामकामं रूपं जीवस्य श्राव्यते । अतः सुषुप्तावस्थाया अकामरूपत्वबोधिकाया श्रुतिः, सैव हेत्वभावद्वारा स्वाप्नप्रपञ्चाभावबोधिका । तत इत्यर्थः । अत्र नाडीष्वात्मनि चेति द्वयोः स्थानयोर्ग्रहणात्सुषुप्तिर्द्विधेति सूच्यते । हिताख्या हि स्वप्ननाड्यः पुरीतत्यन्ताः हृदयदेशाद्बाह्यदेशवर्तिन्यः । पुरीतत्तु हृदयवेष्टनम् । हृदये तु जीवस्येन्द्रियाणां च स्थितिः । तत आभ्यन्तरः परमात्मा । तत्र निद्रया यदा हितासु पात्यते, तदा स्वप्नं पश्यति । यदा ततः प्रत्यवसृप्य पुरीततो निकटे नाडीप्रान्तभागे गाढसुषुप्तिः । यदा पुरीतदन्तर्हृदयाकाशे सत्संपत्तिरिति । तत्र कामनाभावः स्थानद्वयेऽपि तुल्यः । ज्योतिर्ब्राह्मणे 'यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति ता वा अस्यैता हिता नाम नाड्य' इति । 'अथ यत्र सुप्तो न कंचन कामं कामयते न कंचन स्वप्नं पश्यति तद्वा अस्यैतदात्मकाममाप्तकाममकामं रूपम्, तद्यथा प्रियया स्त्रिया परिष्वक्त' इति नाडीपरमात्मभेदेन अथशब्दात्प्रकृतच्छेदेन च श्रुतस्य 'यत्र सुप्त'वाक्यस्याभ्यासतस्तथा निश्चयादिति । तस्मात् द्विविधायामपि सुषुप्तौ न प्रपञ्चसृष्टिरिति सिद्धम् ॥ ७ ॥ इति द्वितीयं तदभावो नाडीष्वित्यधिकरणम् ॥ २ ॥

**अतः प्रबोधोस्मात्** ॥ ८ ॥ (३-२-३.)

एवं स्वप्नसुषुप्ती सहेतुके विचारिते । अथ जाग्रदवस्थाहेतुं विचारयति **अतः प्रबोधोस्मात्** ।

बृहदारण्यके ज्योतिर्ब्राह्मणे श्रूयते। 'स वा एष एतस्मिन् सम्प्रसादे रत्वा चरित्वा दृष्ट्वैव पुण्यं च पापं च प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैवे'ति। अर्थस्तु स वा एषः प्रकृतः स्वयंज्योतिर्जीवात्मैतस्मिन्संप्रसादे सुषुप्तिस्थाने रत्वा प्राज्ञेन सह संपरिष्वज्य चरित्वा तदानन्दमनुभूय स्वप्ने पुण्यं पापं तत्तत्फलं च दृष्ट्वैव प्रतिन्यायं गमनप्रातिकूल्यं यथा स्यात्तथा प्रतियोनि स्वस्थितिस्थानं योनिः तल्लक्षीकृत्य आद्रवत्यागच्छति बुद्धान्ताय जागरणायेति। तत्र प्रबोधे संशयः। नाडीभ्यो भगवतो वा सकाशात्पुनर्हृदयदेशं समागत्य जागर्ति, उत यत्र सुप्तः तत एव जागर्तीति। तत्र श्रुतौ 'चरित्वे'ति गत्यर्थकधातूत्थक्त्वाप्रत्ययेनाद्रवणात् पूर्वमपि गमनस्य श्रावितत्वात् स्वस्थानं हृदयदेशं गत्वैव जागर्तीति प्राप्ते, उच्यते। अतो नाडीभ्य एव प्रबोधः। न हि गर्तपतितस्य प्रबोधं विनान्यत्र गमनं संभवति। न च चरित्वेत्यस्य विरोधः। तत्र भक्षणार्थस्यापि ग्रहीतुं शक्यत्वात्। 'आनन्दभु'गिति श्रुत्या तत्रानन्दभोगस्योक्तत्वादिति। किंच। प्रबोधोऽस्मादात्मन एव सकाशात्। प्रिययेव प्राज्ञेन संपरिष्वक्तस्य बोधाभावे आगमनासंभवात्। अतो यत्र स्वपिति, तत एव प्रबुध्यते, नतु हृदयदेशमागत्येति सिद्धम्॥ ८॥

**स एव तु कर्मानुस्मृतिशब्दविधिभ्यः॥ ९॥**

ननु प्रिययेव प्राज्ञेन परिष्वक्तस्य ब्रह्मलोकं गतस्य तत्र प्रबोधेन ज्ञानसंभवे मुक्त एव भवेत्, न तु पुनरागच्छेत्, अतस्तत्र प्रबोधो न युक्त इत्याशङ्कायामाह **स एवे**त्यादि। उक्ताशङ्कां परिहरति तुशब्दः। अस्मादपि प्रबोधे **स एव** जीवः। कुतः। कर्मानुस्मृतिशब्दविधिभ्यः। लौकिके कर्मणि स्वापात्पूर्वं सामिकृते पुनरुत्थाय तत्समापनात्, पूर्वदृष्टस्योत्थानोत्तरं स्मरणात्। तथा 'क्वैष तदाभूत्, कुत एतदागादि'त्यत्रैष इत्यनेन स्वापोत्थानकालवर्ती एक एव परामृश्यत इत्येतदादिशब्दात्। 'श्वोभूते ब्रह्माणं वृणीते' इत्यत्र पूर्वापरदिनवर्ती एक एव वरणकर्तृत्वेन परामृश्यत इत्येतदादिविधेश्चेत्यर्थः। न च मुक्त्यापत्तिः। बोधसमये भगवता मर्यादारक्षार्थं ज्ञाननिवारणात्। 'सति संपद्य न विदुः, सति संपद्यामह' इत्यनेन तथा निश्चयात्। तस्य ज्ञानस्य परावरत्वादिप्रकारकदर्शनरूपत्वाभावाच्चेति॥ ९॥

**मुग्धेऽर्धसंपत्तिः परिशेषात्॥ १०॥**

ननु यत्र कर्मानुस्मृतयो न सन्ति, तत्रान्यो भविष्यति, क्वचिन्मूर्च्छादिविशेषे सर्वस्मृतिनाशेन मुग्धभावदर्शनात्, यथामरुनामके राजनि, तादृशस्थले यथान्येनैव लौकिकवैदिकव्यवहाराः, तथान्यत्रापि भविष्यन्ति, किंच, अनुस्मरणादयो बुद्धिवृत्तयः, बुद्धिश्चोपाधिः, तत्र यो जीवः प्रवेक्ष्यति, स एव जीवो गङ्गाप्रवाहस्य जलान्तरवदन्योपि तद्व्यपदेशं लब्ध्वा तत्कार्यं करिष्यतीति किं स एवेति निर्बन्धेनेत्याशङ्कायामाह **मुग्ध**

इत्यादि । **मुग्धे** मुग्धभावे सति, **अर्धसंपत्तिरेव** तत्तदितरानिश्चायिका साधारण्येव बुद्धिः । अतः सा अर्धज्ञानरूपैव । तस्या अर्धत्वं तु मुग्धस्य यज्ञाधिकाराभावेन तत्र विध्यप्रवृत्त्या कर्मानुस्मृत्योश्च प्रत्यक्षत एव बाधेन, पूर्वप्रवृत्तानां च जीवनाधिकारेण क्रियमाणतया लौकिकव्यवहारस्यापि अपूर्वस्याभावेन तत्र स एवायमिति निश्चयस्य विलक्षण-व्यवहाराभावेन चान्योऽयमिति निश्चयस्य चाभावात् । न चामरुन्यायेनान्यत्वं निश्चेतुं शक्यम् । ब्रह्मवैवर्तब्रह्मखण्डे मूर्च्छितोपवर्हणजीवने पूर्वजीवसत्तायाः स्मरणात् । नन्वेवम-निश्चये सार्धापि कुत इत्याशङ्कायां तत्र हेतुमाह **परिशेषात्** । प्रसक्तप्रतिषेधे यस्तद्-प्रतियोगी स परिशेषः । प्रकृते च स एव वा, न वेति संदेहे, एकतरानिश्चायकप्रमाणा-भावान्निषेधाप्रतियोगित्वेन संदेह एवावशिष्यत इति संदेहादेवार्धा, न तु निश्चयात् । अतो मुग्धदृष्टान्तेन सौषुप्तिकसिद्धान्तभङ्गाभावात् सुप्तप्रबुद्धः स एवेति निश्चयः । एतदेवै-कादशस्कन्धेऽप्युक्तम् । 'यो जागरे बहिरनुक्षणधर्मिणोऽर्थान्भुङ्क्ते समस्तकरणैर्हृदि तत्सदृ-क्षान्, स्वप्ने सुषुप्त उपसंहरते स एकः स्मृत्यन्वयात् त्रिगुणवृत्तिदृगिन्द्रियेश' इति । तस्मा-त्सर्वावस्थास्वेक एव जीवः स्वप्नादिदोषसंबन्धरहित उत्तमदेहयुक्तो भगवज्ज्ञानरहितो ज्ञानाधिकारीति सिद्धम् ॥ १० ॥ इति तृतीयमतःप्रबोध इत्यधिकरणम् ॥ ३ ॥

**न स्थानतोपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥ (३-२-४.)**

ज्ञानाधिकारिविचारोत्तरं ज्ञानविषयनिर्धारो युक्त इत्यवसरसंगत्या विवक्षित-ज्ञानविषयस्य ब्रह्मणः स्वरूपं विचारणीयम् । तदर्थं प्रथमं विरुद्धवाक्यानां निर्णयः क्रियते । यद्यपि प्रथमाध्याये ब्रह्मैकमेव सर्वेषु वेदान्तेषु कारणत्वेन प्रतिपाद्यत इति सिद्धम्, द्वितीये च कारणवाक्यगतविरोधपरिहारेण तदेव दृढीकृतम्, परन्तु कारणभूतब्रह्मस्वरूपं किं सधर्मकं निर्धर्मकं वा, जीववत्सदोषं वा यावद्दोषरहितं वेति न निर्णीतम् । अतस्तादृशवाक्या-न्यत्र चिन्त्यन्ते । एतदविचारे स्वरूपसंदेहानपायात् वाक्यानामबोधकताप्रसक्तौ सर्वमपा-र्थमेव स्यात् । तत्र स्वरूपाविरोधेऽपीतरेतरविरुद्धानां स्वगतधर्माणां विचारोऽग्रिमे पादे कार्यः । जडजीवधर्मत्वेन प्रतीतानां धर्माणामत्र विचारः क्रियते । 'मनोमयः प्राणशरीरो भारूपः सत्यसङ्कल्पः आकाशात्मा सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' इत्यादि छान्दोग्ये शाण्डिल्यविद्यायां श्रूयते । अन्यत्र तु 'अप्राणो ह्यमनाः शुभ्रः' इति, 'अशरीरं शरीरेष्वनवस्थेष्ववस्थितम्' इति, 'निष्कलं निष्क्रियं शान्तम्' इति, 'अशब्दमस्पर्श-मरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यदस्थूलमनणु' इत्यादि च । तत्र संदेहः । किमुभयलिङ्गं ब्रह्म, आहोस्विदन्यतरलिङ्गमिति । न च मनोमयादिवाक्योक्ता धर्मा जैवा एवेति युक्तम् । ब्रह्मप्रकरणपठितत्वात्, लोकप्रतीतेः श्रुत्यपेक्षया दुर्बलत्वात्, अस्थूलादि-वाक्ये च निषिध्यन्त इत्युभयविधवाक्यदर्शनं संदेहबीजम् । तत्र धर्मश्रुतेरुपासनार्थतयो-

पचारादपि नेतुं शक्यत्वात्, निषेधश्रुतेस्तु प्रयोजनान्तरशून्यतया स्वरूपबोधनमात्रैकफलत्वात् निर्विशेषलिङ्गमेव प्रतिपत्तव्यमिति पूर्वः पक्षः । अथवा । सूत्रे निषेध्यमेव पक्षद्वयमत्र पूर्वपक्षत्वेन ग्राह्यम्, तेनैवाधिकरणावयवपूर्तिरिति । तत्राग्रे नानाप्रकारैर्विरोधं परिहरिष्यन् अत्र मतान्तरनिषेधपूर्वकं प्रथमतो विरोधं स्थापयति **न स्थानत** इत्यादि । अत्र केचिद्ब्रह्मवादैकदेशिन ऋषय एवं श्रुत्यविरोधमाहुः । 'यतो वा इमानि' 'सदेव सौम्य' इत्यादिभिर्भगवत उपादानकारणत्वस्य सिद्धत्वात् कारणं भगवान् सर्वत्रैवोपादेये कार्येऽस्तीत्यविवादम् । ततश्च यथा कारणभूता पृथिवी घटपटस्तम्भादिषु वर्तमाना तत्तद्रूपतां धत्ते, एवं भगवानप्यस्थूलादिषु द्रव्येषु, रसादिषु गुणेषु, तत्तद्रूपतां दधानस्तत्तद्व्यवहारभाग् भवतीति स्थानत उभयलिङ्गमुपपद्यत इत्येकं मतम् । अथवा । कारण एव तत्तत्प्रदेशावच्छेदेन रूपतदभावौ वर्तेते, अचिन्त्यसामर्थ्यवत्त्वात्, स्वतस्तस्याभावे सति स्थानतस्तदङ्गीकारोपि न युज्यते, स्थाने तथात्वं कुत इति विमर्शे असतः सत्ताप्रसङ्गादित्यपरं मतम् । तदुभयं स्थानतोऽपीति पदद्वयेनानूद्य निषेधति **न स्थानतोपीति** । **स्थान**मुपाधिः, तस्मा**दपीति** प्रदेशभेदाच्च परस्योभयलिङ्गं न संभवति । कुतः । **सर्वत्र,** सर्वेषु वाक्येषूभयलिङ्गस्य रूपस्योपदिश्यमानत्वात् । एवं चात्रैवं प्रयोगोऽपि सिध्यति । परस्योभयलिङ्गमुपाधिभेदात्प्रदेशभेदाच्च न, सर्वत्रोपदिश्यमानत्वात् । यदेवम्, तदेवम् । यन्नैवम्, तन्नैवम्, लोकवदिति । सर्वत्रोभयलिङ्गमेव रूपमुपदिश्यत इत्यत्र किं मानमित्याकाङ्क्षायामाह **हीति** । सर्वत्रैतादृशरूपस्योपदिश्यमानत्वं युक्तम् । सर्वकामादिवाक्यानामशब्दादिवाक्यवत् ब्रह्मस्वरूपप्रतिपादकत्वात् ब्रह्मणश्चैकत्वात् । यथा दीर्घदन्तो गज इत्युक्ते शुण्डादण्डाकमनुक्तमपि अविनाभूतत्वाल्लभ्यते, तद्वदत्रानुक्तानामपि लाभात् । स्थानप्रयुक्ततत्तद्धर्मवाचकतायां तु तस्य धर्मस्याब्राह्मत्वे तेषामनुवादकत्वात् वैयर्थ्यापत्तेः । न चाचिन्त्यसामर्थ्यात् तत्तत्प्रादेशिकत्वं युक्तम् । सामर्थ्यस्याचिन्त्यत्वे तद्वतो ब्रह्मणोऽप्यचिन्त्यतायां तज्ज्ञानानुदयेन 'तमेव विदित्वा अतिमृत्युमेति' इत्यादिश्रुत्युक्तमुक्तेरपि बाधापत्तेः । अतो मतान्तरानुसारेण ब्रह्मणि जडजीवधर्माणां सत्त्वासत्त्वयोर्वक्तुमशक्यत्वात् सिद्धः श्रुतिविरोधः ॥ ११ ॥

**न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥**

प्रकारान्तरेणोभयलिङ्गविरोधसमाधिमाशङ्क्य परिहरति **न भेदा**दित्यादि । नोभयलिङ्गोक्त्या विरोधः संभवति । कुतः । **भेदात्,** लोके तत्तत्कार्यकारणेषु सर्वत्र भेदाङ्गीकारात् । तथा च प्रपञ्चविलक्षणं ब्रह्म भिन्नम्, प्रपञ्चसलक्षणं च भिन्नम् । तथा ज्ञातं ब्रह्म भिन्नम्, अज्ञातं च भिन्नमित्येकस्य भेदस्याङ्गीकारे सर्वमुपपद्यत इति चेत् । न । कुतः । **प्रत्येकमतद्वचनात्** । मधुब्राह्मणे 'इयं पृथिवी सर्वेषां मध्वि'त्यादिषु पृथिव्यबग्न्याकाशवाय्वादित्यचन्द्रदिग्विद्युत्स्तनयित्नुधर्मसत्यमानुषात्मवाक्येषु 'यश्चायं तेजोमयोऽमृतमयः

पुरुषः, यश्चायमध्यात्मं शारीरस्तेजोमयोऽमृतमयः पुरुषः, अयमेव स योऽयमात्मा, इदममृतम्, इदं ब्रह्म, इदं सर्व'मित्येवं प्रत्येकमभेदवचनात्, कार्यकारणरूपप्रकाराणां भेदनिषेधनात्। तथा च तत्तद्वाक्येषु तत्तद्धर्मश्रावणेऽपि प्रतिपाद्यस्य ब्रह्मणः सर्वत्रैकत्वात् सर्वत्र सर्वं कार्यं सर्वं कारणं सर्वाणि रूपाणि सर्वे प्रकाराश्च सन्तीति विरोधतादवस्थ्यान्न भेदाङ्गीकारेण श्रुतयो योजयितुं शक्या इत्यर्थः॥ १२॥

**अपि चैवमेके॥ १३॥**

एवं प्रत्यक्षश्रुत्या भेदं निराकृत्य कदाचित्स्मार्ततया भेदस्य नित्यानुमेयवेदमूलत्वं शङ्केत कश्चिदिति, तन्निवारणार्थमाह **अपी**त्यादि। अपिच भेदाभावे प्रमाणान्तरं च। तदाह **एवमेके**। एवं भेदनिषेधेनाभेदम्, एके कण्वमध्यंदिनशाखिनो वदन्ति। 'मनसैवेदमाप्तव्यम्' 'नेह नानास्ति किञ्चन' 'मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' इति। अत्र पूर्वं 'प्राणस्य प्राणम्' इत्यादिना प्राणाद्याधिदैविकं तन्नियामकं ये विदुः, ते ब्रह्म विदुरित्युक्त्वा तस्यैव प्राप्यत्वं वदंस्तस्य स्वरूपमाह 'नेह नानास्ति किञ्चने'ति। अर्थस्तु, इह मनसैवाप्तव्ये ब्रह्मणि न नानास्ति, यत्किञ्चन नियम्यत्वेनावयत्वेन वातिरिक्ततया वेदनविषयं भवति, तत्सर्वं ब्रह्मैव, न तु तदतिरिक्तम्। ननु विलक्षणप्रतीतिविषयस्य कथमपृथक्त्वमित्याशङ्कायां भेदाङ्गीकारे बाधकमाह 'मृत्योः स' इत्यादि। अत्रेवशब्दं विनापि भेददर्शनसिद्धेरिवपदेन 'बहु स्या'मिति इच्छाप्राप्तं नैमित्तिकनानात्वं व्यावर्त्यते, तेनेच्छया विलक्षणप्रतीतिः, अपृथक्त्वं तु स्वाभाविकम्। अतो वास्तविकं सजातीयविजातीयस्वगतभेदं यः पश्यति, तस्यैव दोष इति बोध्यते। तेन स्मार्तो भेदः प्रमाणशून्य इति सिध्यति। तथा च श्रुतौ ब्रह्मण उभयलिङ्गस्य सिद्धत्वात् तेन विरोधे श्रुतीनामबोधकत्वमेवेति सिद्धम्। एवमाक्षेपसङ्गत्यानेनाधिकरणेन विरोधः साधितः॥ १३॥

इति चतुर्थमुभयलिङ्गाधिकरणम्॥ ४॥

**अरूपवदेव हि तत्प्रधानत्वात्॥ १४॥** (३-२-९.)

एवमुभयलिङ्गश्रुत्योर्विरोधे सिद्धे, सर्वकर्मत्वादयो धर्मा ब्रह्मणि सन्ति वा, न वेतिसंदेहः। उक्तविधवाक्यश्रवणं संदेहबीजम्। तत्र तुल्यबलविरोधसमाधानायोगाद्वाक्यद्वयमप्यबोधकमिति पूर्वपक्षः। तत्रैकदेशिमतस्याप्यग्रे किञ्चिदंशेनादरणीयत्वात् प्रथमं तन्मतेन समाधानमाह **अरूपे**त्यादि। एवं विरोध आपतितेे, **अरूपवदेव**, रूप्यते व्यवह्रियत इति रूपं सर्वव्यवहारविषयत्वम्, तद्युक्तं रूपवद्विश्वम्, तद्विलक्षणमरूपवत्तादृशमेव ब्रह्म प्रतिपत्तव्यम्। कुतः। हिर्हेतौ। कार्यकारणयोरंशांशिनोश्च वैलक्षण्यस्य युक्तत्वाद्धेतोः। ननु कारणस्यांशिनः कार्यादंशाच्चावैलक्षण्यस्यापि सत्त्वात् कथं वैलक्षण्यस्यैव युक्तत्वम्, अत आह **तत्प्रधानत्वात्**। तस्य ब्रह्मणः प्रधानत्वात् मुख्यत्वात्। यत्र हि यत्प्रतिपाद्यते, तदेव

मुख्यमिति, ब्रह्मप्रतिपादने तद्धर्माणां मुख्यत्वम्, नान्यधर्माणाम्, तस्मात्। तथा च यथा अस्थूलादिवाक्ये 'एतद्वैतदक्षरम्' इति केवलं ब्रह्म प्रकृत्य प्रमाणान्तरानधिगताः प्रशासनादय उच्यन्ते, तथा चेदुच्येरन्, तदा सर्वकर्मत्वादीनां मुख्यत्वं भवेत्, उच्यन्ते तु (लौकिकधर्मतुल्या लोकप्रसिद्धाश्च)। 'मनोमयः प्राणशरीर' इति शरीरविशिष्टं ब्रह्म प्रकृत्य, धर्मांश्च प्रसिद्धत्वेनानूद्य, सर्वेषां कर्मैव कर्म यस्येति समासात्, सर्वं कर्म यस्येत्यादिसमासान्तरेऽपि, किं सर्वमित्याकाङ्क्षायां सर्वपदेन लोकप्रसिद्धस्यैवानुवादात्। अतः शरीरधर्मा एव सर्वकर्मत्वादयः, अमुख्यत्वात्, ते भगवत्युपचर्यन्त इत्येव युक्तमित्यर्थः। तेन कार्यधर्माणां कार्यवदेव ब्रह्मत्वम्, न तु ब्रह्मधर्मत्वमिति सिद्धम् ॥ १४ ॥

**प्रकाशवच्चावैयर्थ्यात् ॥ १५ ॥**

नन्वेवं सर्वकर्मत्वादीनामौपचारिकत्वे केवलस्य ब्रह्मणः सर्वव्यवहारातीतत्वापत्तिः, न च प्रशासितृत्वादिभिर्व्यवहारसिद्धिः, तेषामलौकिकत्वेन सम्यग् बुद्धावनारोहात्, अतः शास्त्रवैफल्यम्, तादृशस्य मनोगोचरत्वाभावात् 'मनसैवैतदाप्तव्यम्' इति श्रुतिविरोधः, 'तं त्वौपनिषदं पुरुषम्' 'यतो वाचो निवर्तन्त' इति श्रुतिविरोधश्चेत्याशङ्क्य परिहरति **प्रकाशे**त्यादि। यथा सौरः प्रकाशः, अव्यवहार्यो व्यवहार्यश्च न स्वयं कर्तुं शक्यते, न वा निरुध्य स्थापयितुम्। आगते तु सूर्ये मेघाद्यभावे सांनिध्यमात्रेण व्यवहर्तुं शक्यते, तथा लौकिकवाङ्मनोभिर्न व्यवहर्तुं शक्यते, ईश्वरसन्निधाने तु शक्यते इति न श्रुतिद्वयविरोधः। ननु कुत एतदवधारितम्, तत्राह **अवैयर्थ्या**दिति। अन्यथान्यतरश्रुतिवैयर्थ्यमेव स्यात्। तथाच श्रुतार्थापत्त्यैतदवधारितमित्यर्थः। चकारात् 'आसीनो दूरं व्रजति' इत्यादिबलाद्भगवद्धर्माणां लोकविरोधः परिह्रियते। तस्मात् ते धर्मा अकारणकार्यत्वान्नित्या अलौकिकाश्चेति न कश्चिद्दोषः ॥ १५ ॥

**आह च तन्मात्रम् ॥ १६**

ननु धर्माणामेतादृशत्वकल्पनापेक्षया अलौकिकेन्द्रियकल्पनैव लघीयसीत्याशङ्कायाम्, तथा कल्पने बाधकमाह **आहे**त्यादि। **चो**ऽवधारणे, श्रुतिः स्वयमेव तन्मात्रं कृत्स्नं ज्ञानैकस्वरूपं ब्रह्माह। 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघनः, एवं वा अरे अयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञान एव' इति। तथा च स्वरूपातिरिक्तानामिन्द्रियाणामभावात् तथा कल्पना न युक्तेत्यर्थः। न चेन्द्रियाभावात्क्रियाभावः शङ्क्यः। 'एतस्यैव महतो भूतस्य निःश्वसितं यदृग्वेदः,' 'स यथा सर्वासामपां समुद्र एकायनम्, एवमेतेभ्यो भूतेभ्यः समुत्थाये'त्यादिभिस्तत्रैव क्रियाणामुक्तत्वात्। अतो नेन्द्रियाणि, किन्तु सर्वाकारस्वरूपं वस्त्वेव तादृशमिति मन्तव्यम्। श्रुतौ कृत्स्नपदेन विशेषणात्, तस्य चाकृत्स्नत्व-

बुद्ध्युत्पादकप्रकारसत्त्वे एव तन्निवारकतया सार्थक्यात्। चकारेण 'सर्वेन्द्रियगुणाभासं सर्वेन्द्रियविवर्जितम्' इति श्रुतिसमुच्चयः । तस्मान्नेन्द्रियकल्पनया अविरोध इत्यर्थः ॥ १६ ॥

**दर्शयति चाथोऽपि स्मर्यते ॥ १७ ॥**

ननु ब्रह्म जगत उपादानं निमित्तं चेति पूर्वं सिद्धम्, कारणधर्मा एव च कार्ये भवन्तीति लोके सिद्धम्, अतो लौकिकाः कार्यगताः कामादयोऽपि ब्रह्मणि स्वसमानधर्मानुमापकाः, अत्र श्रुतौ च विहिता इति प्रमाणद्वयप्रमितत्वात् ते तत्र मन्तव्याः, अकामाप्तकामादिश्रुतिभिस्ते निषिध्यन्तेऽपि, वेदवादिनां त्वणुमात्रमप्यन्यथाकल्पनं नोचितम्, अतो विरोधो दुर्वार इत्याशङ्क्य परिहरति **दर्शयती**त्यादि । न हि वयं किमपि कल्पयामः, अपि तु श्रुतिरेव जडजीवधर्माणां भगवत्यभावं मूर्तामूर्तब्राह्मणे दर्शयति । 'द्वे वाव ब्रह्मणो रूपे मूर्तं चामूर्तं चे'त्यादिना, अधिदैवताध्यात्मिकभेदेन द्वेधा पञ्चभूतान्युक्त्वा, 'अथात आदेशो नेति नेती'ति निषेधमाह । तत्र किं द्वौ नञौ प्रकृतमर्थं गमयत इति द्वयोः स्थापनं क्रियते, किं वा पूर्वोक्तं सर्वं वीप्सया निषेधति, उत रूपद्वयं निषेधति, ब्रह्म परिशिनष्टि, अथवा पूर्वो नञ् भूतराशिं निषेधति, द्वितीयो वासनाराशिम्, इत्यादि संदेहे, श्रुतिः स्वयमेव निषेधवाक्यं विवृणोति, 'न ह्येतस्मादिति, नेत्यन्यत् परमस्ती'ति । अत्र व्याख्येये वाक्येऽथशब्दः प्रक्रमभेदकः, अत इति च हेतौ, उक्ताभ्यां रूपाभ्यां कार्याभ्यां हेतुभ्यां ज्ञाप्यस्य ब्रह्मण आदेश उपदेशः 'नेति नेतीति' । अत्र पूर्व इतिशब्दः प्रकारं द्वितीयश्चैतावत्त्वं वक्ति, तत्र पूर्वं नेतीति वाक्यं व्याचष्टे 'नह्येतस्मादिती'ति । हि यतो हेतोः पञ्चभूतान्येतस्मादुपादानभूताद्ब्रह्मणो जातानि, अतः कार्यकारणयोः प्रकारैक्याभावादित्येवं कार्यप्रकारकं ब्रह्म नेति । द्वितीयं व्याचष्टे 'अन्यत्परमस्ती'ति । तथा च इति एतावद्भिन्नप्रकारकत्वेऽपि समवायिमात्रं न, अपि त्वन्यदितोऽतिरिक्तं परमस्तीति, अतोऽत्र न सर्वनिषेधः, नापि रूपद्वयनिषेधः, नापि भूतवासनाराश्योर्निषेधः, न वा तत्स्थापनमात्रमित्यर्थः । तेन माहारजनादितुल्यरूपनिरूपणमरूपत्ववारणायेति बोधयन्ती अनामत्ववारणाय नाम निरूपयति 'सत्यस्य सत्य'मिति । नाम निरूप्य पूर्वोक्तव्याख्यानवाक्यस्याप्यर्थान्तरवारणाय तन्निर्वक्ति 'प्राणा वै सत्यं तेषामेष सत्यमिति' । प्राणन्तीति प्राणाः, पूर्वोक्ताः, ब्रह्मकार्यभूताः, वै निश्चयेन सत्यम्, नाविद्यका ब्रह्मविवर्तरूपाः । तत्र हेतुः । तेषां प्राणानां एष परमात्मैव सत्यं स्वरूपभूत इति । यद्वा, सद्रूपत्वात्स्वरूपत्वाच्च सत्यं प्राणास्तेषामेष स्वरूपभूत इति । तथा च न ह्यस्मादिति व्याख्यानवाक्यमपि निषेधस्य न प्रपञ्चे पर्यवसानं गमयति, न वा ब्रह्मणः सर्वविशेषशून्यत्वे, किन्तु ब्रह्मणः प्रपञ्चप्रकारकत्वे उपादानमात्रत्वे च पर्यवसानं गमयतीति, एतदर्थं नामरूपवत्त्वार्थं च नामनिर्वचनमित्यर्थः । अतः प्रपञ्चातिरिक्तस्य ब्रह्मणो विद्यमानत्वात् तस्मिन्प्रपञ्चधर्मवचनमौपचारिकमेव युक्तम् ।

श्रुत्यैव तथा प्रतिपादनादिति । चकारः सर्वयुक्त्यनुसंधानार्थः । किं च, **अथोपि** । अथेति पदोक्तः प्रक्रमभेदोऽपि ब्रह्मणो भिन्नप्रकारतां ज्ञापयति । तेनापि तेषामौपचारिकत्वमेव युक्तम् । श्रुतेरन्यार्थतानिराकरणायाह **अपि स्मर्यत** इति । गीतायाम् 'अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते' इति । 'ज्ञेयं यत्तत्प्रवक्ष्यामि' इति ज्ञेयं ब्रह्म प्रस्तुत्य, तन्निरूपणे क्षेत्रभूतं सदसच्च निषेधतीत्ययं निषेधोऽपि प्रापञ्चिकधर्माणां ब्रह्मण्यौपचारिकत्वं ज्ञापयति । अतः श्रुतिस्मृतिभ्यामेव तथा निर्णय इत्यर्थः ॥ १७ ॥

**अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥**

प्रपञ्चधर्मा भगवत्युपचारादुच्यन्त इत्यत्र गमकान्तरमाह **अत एवे**त्यादि । अत इति ल्यब्लोपे पञ्चमी । अत एव प्रपञ्चधर्माणां भगवत्यौपचारिकत्वमाश्रित्यैवोपमा 'समः प्लुषिणा, समो मशकेन, समो नागेन, सम एभिस्त्रिभिर्लोकैः, समोऽनेन सर्वेण' इति वाक्य उच्यते, अन्यथा 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुतिर्विरुध्येत । अतस्तत्तद्धर्मसंबन्धेनोपचारादेवोपमेत्यर्थः । ननु 'समो न' 'तत्सम' इति वाक्यद्वयं परस्परविरुद्धम्, अतो नोपमावाक्येनौपिचारिकत्वनिर्णय इत्याशङ्क्य, उपमाया निर्णायकत्वे दृष्टान्तमाह **सूर्यकादिव**दिति । सूर्येण सहितं कं सूर्यकम्, आदिपदेन चन्द्रकम्, तद्वत् । 'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन्' 'एकधा बहुधा चैव दृश्यते जलचन्द्रव'दिति वाक्ये जलसंश्लिष्टस्य सूर्यादेर्यथा ब्रह्मोपमानत्वम्, एवं प्लुष्यादिसंश्लिष्टस्य तत्समत्वमपीत्युपमाप्यौपचारिकत्वगमिकेत्यर्थः । चकारस्तु अग्रे वक्तव्यस्य विरोधाभावस्य समुच्चायकः । एकदेशिमतीयाधिकरणपूर्तिद्योतकश्च । तस्माज्जडजीवधर्माणां भगवत्युपचारः, निषेधस्तु मुख्य इति स्थानत औपचारिकं सर्वकामादिजडजीवधर्मवत्त्वम्, स्वतस्तु तद्रहितत्वमित्येकदेशिमतेन सिद्धम् ॥ १८ ॥ इति पञ्चममरूपवदेव हीत्यधिकरणम् ॥ ५ ॥

**अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥** ( ३-२-६. )

मुख्यमविरोधप्रकारं वक्तुमेकदेशिनं दूषयति **अम्बुव**दित्यादि । एवञ्चात्र पूर्वोक्तान्येव विषयसंशयतद्बीजानि । एकदेशिसिद्धान्त एव पूर्वः पक्षः । तुशब्दस्तं पक्षं वारयति । **तथात्व**मुक्तरीत्या जलयुक्तसूर्यकम्पादिदृष्टान्तेनौपचारिकं सर्वकामादिधर्मवत्त्वं ब्रह्मणो **न**, उपाधिसंबन्धेनौपचारिकं न संभवति । कुतः । **अम्बुवदग्रहणात्** । स्वच्छमम्बु दूरस्थितं सूर्यमंशैः किरणैः संबद्धं गृह्णाति, नतु त्रिवृत्करणे समवायितया प्रविष्टं ज्योतिर्गृह्णाति, इह तूपाधिभूतं मनःप्राणादिकमस्वच्छम्, ब्रह्म च समवायिव्यतिरिक्तं व्यापकतया संबद्धम्, अतो गृहीतुं न शक्नोतीत्यम्बुवदग्रहणादित्यर्थः ॥ १९ ॥

**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम् ॥ २० ॥**

ननु यद्येकदेशिमतीयोऽविरोधप्रकारो न संभवी, तदा विरोध एव स्थिर इत्याकाङ्क्षायामुपाधिसंबन्धोपगमेपि सिद्धान्तरीत्या समाधत्ते **वृद्धी**त्यादि। यथा व्यापकस्याप्याकाशस्य करकाद्यन्तर्भावाद्वृद्धिह्रासभाक्त्वम्, एवं ब्रह्मणोपि व्यापकस्यैव मनःप्राणाद्युपाध्यन्तर्भावात् सर्वकामादिधर्मवत्त्वम्। न चैवं सति सर्वकामत्वादीनामौपचारिकत्वानपायात् किमेकदेशिदूषणेनेति शङ्क्यम्। करकाद्यन्तःप्रविष्टाकाशवृद्धिह्रासयोः करकादिप्रवेशव्यङ्ग्याकाशधर्मत्वेनैव लोके भूयानवकाशः, अल्पोऽवकाश इति प्रत्ययात्, वेदेऽपि यथावकाशं ग्रहान् यथावकाशं प्रतिग्रहानिति चयने ग्रहप्रतिग्रहसंज्ञाकानामिष्टकानाम्, पूर्वोपहितेष्टकामध्ये योऽवकाशः, तत्रोपधानविधान आकाशस्यैव यावन्मितत्वबोधनाच्च तत्तदुपाधिव्यङ्ग्याकाशधर्मत्वमेव निश्चीयते, एवं श्रुत्युक्तानां सर्वकामत्वादीनां तत्तदुपाधिव्यङ्ग्यब्रह्मधर्मतयैव निश्चयेनैकदेशिदूषणस्य सार्थक्यात्। नन्वेवं निर्बन्धेन सर्वकामत्वादीनां ब्रह्मधर्मसाधने कावश्यकतेत्यत आह **उभयसामञ्जस्या**दिति। निर्धर्मकसधर्मकबोधकवाक्यद्वयसामञ्जस्यात् एवं निर्बन्धेन साध्यते, अन्यथा एकतरवाक्यमबोधकत्वादसमञ्जसमेव स्यात्, अतस्तथेत्यर्थः ॥ २० ॥

**दर्शनाच्च ॥ २१ ॥**

एवं सर्वकामादीनामुपाधिसंबन्धेनाभिव्यज्यमानत्वे तेषां नैमित्तिकत्वेनागन्तुकत्वमेव, न तु नैसर्गिकत्वम्, तथा सति सृष्टिप्राक्काले तद्धर्मरहितमेव सेत्स्यतीत्याशङ्कायां तन्निवर्तनाय हेत्वन्तरमाह **दर्शना**दिति। **चो**ऽनुक्तसमुच्चायकः। 'उभयसामञ्जस्यादेव'मिति पदद्वयं पूर्वसूत्रादनुवर्तते। तथा च वैश्वानरविद्यायां प्रादेशमात्रस्याभिविमानत्वपुरुषत्वपुरुषविधत्वपुरुषान्तःप्रतिष्ठितत्वानाम्, काठके च 'अणोरणीयान् महतो महीयान्' 'आसीनो दूरं व्रजति' इत्यादिविरुद्धधर्माणां केवलं ब्रह्मैव प्रकृत्य दर्शनात्। अग्रे च 'अशरीरं शरीरेष्वनवस्थेष्ववस्थित'मिति निगमनदर्शनात्। अवतारदशायामुलूखलबन्धनादिषु तत्कालीनानां तथा प्रत्यक्षात्। इदानीं पौराणेन वाक्येन तत्र तथा निश्चयाच्च। एवं यादृक् श्रुतौ प्रत्यक्षादिना च प्रतीयते, तादृशमेव ब्रह्म। तत्र हेतुः **उभयसामञ्जस्या**दिति। अन्यथा एकस्मिन्नेव वाक्य उपदिष्टानां धर्माणां मध्य एकतरबाध एव स्यात्। अत एवं श्रौतात् प्रत्यक्षाच्च दर्शनात् वस्तुस्वभावत एवाविरोधसिद्धौ तेषां धर्माणां नैसर्गिकत्वमेवेति विरुद्धधर्माश्रयत्वेन ब्रह्मप्रतीतौ न कश्चिद्विरोध इत्यर्थः ॥ २१ ॥

**प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥**

एवं सर्वप्रकारैः परिहृतेपि विरोधे यः शंकाढ्यमानी वस्तुनस्तादृक्स्वभावमन्वानोऽस्थूलादिवाक्यैः सर्वविशेषनिषेधादविरोधं न मन्यते, तदर्थं युक्त्या विरोधं परिहरति **प्रकृते**•

त्यादि । **प्रकृते** गार्ग्युपक्रान्ते प्रपञ्चे गार्गीप्रश्ने वा य एतावन्तः परिदृश्यमाना यावन्तो लौकिकाः पदार्थास्तेषां धर्म **एतावत्त्वम्**, तद्धि यतः प्रतिषेधति, ब्रह्मण्यस्थूलादिवाक्येन निषेधति, अतो ब्रह्मणि जगद्वैलक्षण्यमेवास्थूलादिवाक्यैः प्रतिपाद्यते, अतो वेदोक्ता धर्मा न तेन निवारयितुं शक्यन्ते । ननु कुत एतदवगम्यते, तत्राह **ततो ब्रवीति च भूयः ।** ततो निषेधानन्तरं तस्मिन्नेव वाक्ये तमेव धर्मं भूयो बाहुल्येन पुनर्वा ब्रवीति, यथा अस्थूलादिवाक्ये 'अवागमनः अमुख'मित्यनेन प्रशासनकारणं निषिध्य, तदनन्तरं 'एतस्यैवाक्षरस्य प्रशासने द्यावापृथिवी विधृते तिष्ठत' इति वक्ति, तथा सर्वधर्मनिषेधमुखेन वेदनं निषिध्य, 'एतद्विदित्वा' इत्यादिना तद्वक्ति, एवं 'न तदश्नोति किञ्चन' इति व्याप्तिं निषिध्य, 'आकाश ओतश्च प्रोतश्चे'त्यनेन तां वदति । एवमेव तैत्तिरीयेपि 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' इति पूर्वार्धे निषिध्य, 'आनन्दं ब्रह्मणो विद्वान्' इति तदुत्तरार्धे वदति । चकारात् क्वचिदेकोपाख्याने वक्ति, क्वचिद्विभागे साकाङ्क्ष एकवाक्ये वक्तीति संगृह्यते । अतः साध्ये कर्मणि षोडशिग्रहणाग्रहणवत् नित्ये ब्रह्मणि प्रशासितृत्वाप्रशासितृत्वयोर्ज्ञेयत्वाज्ञेयत्वयोर्विकल्पस्य वक्तुमशक्यतया वाक्यस्याबोधकताप्रसक्तौ तन्निवृत्त्यर्थं लौकिकं निषेधति, अलौकिकं ब्रूत इति व्यवस्था मन्तव्या । स्थूलत्वादीनां लौकिकानामेव निषेधदर्शनात् । ईदृशप्रशासितृत्वादीनामलौकिकानामेव विधानदर्शनात् । अतो ये वस्तुस्वभावतो विरुद्धधर्माश्रयत्वं न मन्वते, त एवं श्रुत्यक्षराण्यनुसन्धाय लौकिकालौकिकविभागरूपया युक्त्या विरोधपरिहारमवगच्छन्त्वित्यर्थः ॥२२॥ इति षष्ठमम्बुवदग्रहणादित्यधिकरणम् ॥६॥

**तदव्यक्तमाह हि ॥ २३ ॥** ( ३-२-७. )

अत्र यद्यपि शब्दबलेन विरोधः परिहृतः, तथापि शब्दस्यार्थाधीनत्वादर्थबलेन विचारो ज्यायान्, अर्थस्तु ब्रह्म न केनापि दृष्टम्, शब्दस्तूभयथापि वक्ति, 'न चक्षुषा गृह्यते' 'कश्चिद्धीरः प्रत्यगात्मानमैक्षत्', 'नापि वाचा' 'सर्वे वेदा यत्पदमामनन्ति', 'अप्राप्य मनसा सह' 'मनसैव तदाप्तव्यम्', 'अरूपमव्ययम्' 'तस्य हैतस्य पुरुषस्य रूपं यथा माहारजनं वासः', 'अकाममाप्तकामम्' 'सर्वकामः', 'अगन्धमरसम्' 'सर्वगन्धः सर्वरसः', 'अपाणिपादः' 'विश्वतश्चक्षु'रित्यादि । 'निर्गुणश्च' 'यः सर्वज्ञः' इत्यादि । अतः शब्देन न कश्चिन्निश्चय इति तानि सर्वाण्येवात्र विषयः । तद्दर्शनादर्थस्य द्वैरूप्यं प्राप्तम्, तद्युज्यते न वेति संशयः । तत्र पूर्वपक्षमाह **तदि**त्यादि । **तत्** ब्रह्म **अव्यक्त**मेव भवितुमर्हति । कुतः । **आह हि** । 'स एष नेति नेत्यात्मा' 'अगृह्यो नहि गृह्यते' इति । 'न हि गृह्यते' इत्यनुभवसाक्षिकं प्रमाणं श्रुतिराह । न हि केनचिच्चक्षुषा मनसा वा ब्रह्म दृष्टमस्ति । सर्वरूपत्वे तु सर्वैरेव द्रष्टुं शक्येत । अतो धर्ममुखेन निरूपकाणामनुभवविरुद्धत्वादुपचरितार्थत्वमेव युक्तम्, श्रुत्यनुभवाभ्यामव्यक्तत्वेनैव ब्रह्मणः सिद्धत्वादिति प्राप्ते ॥२४॥

**अपि संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥**

समादधानः सिद्धान्तमाह **अपी**त्यादि । **अपिः** पूर्वपक्षिगर्हायाम्, मूर्खः पूर्वपक्षी, अबुद्ध्वा लौकिकप्रत्यक्षेण श्रुत्यर्थव्यवस्थापनात् । **संराधने** सम्यक् सेवायां तोषे जाते ब्रह्म दृश्यते । कुतः । **प्रत्यक्षानुमानाभ्याम्** । कैवल्योपनिषदि 'श्रद्धाभक्तिज्ञानयोगादवैही'ति शिवाकारस्य भगवतो मनसा ज्ञानं संपादयेति आश्वलायनं प्रति ब्रह्मणोक्तम् । तथा काठके मुण्डके च ' यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम् ' इत्यङ्गीकारहेतुकं तनुविवरणमुक्तम् । तच्च तद्विषयं चाक्षुषं गमयति । तथा मुण्डक एव ' यदा पश्यः पश्यते रुक्मवर्णम् ' इति, ' ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ' इति च श्रुतिः प्रत्यक्षा । गीतायां ' भक्त्या त्वनन्यया शक्य अहमेवं विधोऽर्जुन, ज्ञातु द्रष्टुं च तत्त्वेन प्रवेष्टुं च परंतप' इति स्मृतिरनुमानम्, ताभ्याम् । यद्वा । 'अनेकबाहूदरवक्त्रनेत्रं पश्यामि ' इति संराधकस्य प्रत्यक्षम्, ध्रुवादिभ्यश्चानुमानम्, ताभ्यां वार्थः । तथा च श्रुतिस्मृतिभ्यां स्मृत्युक्तप्रत्यक्षानुमानाभ्यां वा साधनसंपादितसम्यक्प्रत्यक्षादर्थस्वभावेऽवधारिते तद्बलादेव द्विविधवाक्याविरोधनिर्णय इत्यर्थः ॥ २४ ॥ इति सप्तमं तदव्यक्तमाह हीत्यधिकरणम् ॥ ७ ॥

**प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥** ( ३-२-८. )

अत्र संराधकप्रत्यक्षानुरोधेन ब्रह्मस्वभावो निर्धारयितुं शक्यो न वेति संशये, पूर्वपक्षमाह **प्रकाशादी**त्यादि । श्रुत्या संराधकप्रत्यक्षेण च ब्रह्मस्वभावो न निर्णेतुं शक्यः । उभयोरपि नानाविधत्वबोधकत्वात्, एकस्य च वस्तुनोऽनेकविधत्वासंभवात् । अतो वस्तुशक्त्यैव निर्णयो युक्तः, **प्रकाशादिवत्**, प्रकाशजलसुवर्णवत् । यथा प्रकाशः सूर्यचन्द्रमणिषूष्णशीतानुष्णाशीतस्पर्शभाक्, जलं च हिमतप्तकुण्डादिषु, सुवर्णं च नानावर्णं तत्तदाकारेषु, तथापि न तत्र नानाविधाः स्पर्शा नानाविधं रूपं वाङ्गीक्रियते, तेजस्त्वादिस्वभावहानिप्रसङ्गात्, किन्तु एकं वास्तवम्, अन्यदौपाधिकम्, तद्वत्, **अवैशेष्यम्**, ब्रह्मणोऽपि निर्विशेषत्वमङ्गीकार्यम् । उष्णं तेजः, शीतं जलमितिवत्, निर्विशेषं ब्रह्मेति लोकप्रसिद्धेः । चकारात् ' अगृह्यो नहि गृह्यते' इति श्रुतेः । ननु संराधकप्रत्यक्षस्य तादृशश्रुतेश्च तर्हि का गतिरित्यत आह **प्रकाशश्च कर्मण्यभ्यासात्** । तपःप्रणिधानादिकर्मणि प्रकाशः प्रत्यक्षम्, चकारादप्रत्यक्षमन्यथाप्रत्यक्षं च, **अभ्यासा**दनेकवारम् । तथा च, यद्येकवारमेकधैव च प्रकटः स्यात्, तदा तद्रूपं तथेत्यङ्गीक्रियेतापि, नतु प्रतिभक्तं प्रतिकर्म चान्यान्यरीत्या प्राकट्ये । अतः प्रकाशोपि कृत्रिम एव, दीपप्रकाशवत् । यदि नित्यः स्यात्, सर्वदा स्यात् । अतो न भक्तप्रत्यक्षेण निर्णय इत्यर्थः ॥ २५ ॥

**अतोऽनन्तेन तथाहि लिङ्गम् ॥ २६ ॥**

तत्र श्रुत्यापि न निर्णय इति वक्तुं फलितमाह **अत इत्यादि । अतोऽनन्तेन तथा,** अभ्यासादनेकरूपेणाविर्भावः । स च निमित्तव्यतिरेकेण नोपपद्यते, अतो 'यद्धिया त उरगाय विभावयन्ति तत्तद्वपुः प्रणयसे सदनुग्रहाये'ति तृतीयेस्कन्धे स्मरणात् भक्तभावनैव तत्र निमित्तम् । **हि** नैमित्तिकत्वाद्धेतोर्न तद्ब्रह्म, किन्तु **लिङ्गं** विग्रह एव भवितुमर्हतीति न भक्तप्रत्यक्षेण निर्णयः । सविशेषश्रुतिश्च तदनुवादिकेति न तयापि निर्णय इत्यर्थः । तस्मात् सर्वागोचरमेव ब्रह्मेति प्राप्तम् ॥ २६ ॥

**उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥**

तत्राह **उभयेत्यादि । तु**शब्दः पूर्वोक्तं लौकिकयुक्त्यनुसारेण श्रुत्यर्थनिर्णयपक्षं व्यावर्तयति । ब्रह्म उभयरूपं नानाकारमनाकारं सविशेषं निर्विशेषं चेत्यादि । कुतः । **उभयव्यपदेशात् ।** निर्गुणत्वेनानन्तगुणत्वेन चेत्याद्युभयरूपेण व्यपदेश उभयव्यपदेशस्तस्मात् । तथा च जन्माद्यधिकरणे 'शास्त्रयोनित्वा'दित्यनेन शास्त्रगम्यत्वमेव निर्णीतम् , अविरोधे च शास्त्राविरुद्धा एव युक्तय आदर्तव्या इति , एवं च निर्विशेषस्वभावत्वं यथा 'अगृह्या'दिश्रुतिमूलकम्, एवमनन्तरूपत्वं 'यदेकमव्यक्तमनन्तरूपं विश्वं पुराणं तमसः परस्ता'दित्यादिश्रुतिमूलकम् । किञ्च, अस्थूलादिवाक्ये धर्मान्निषिध्य, अग्रे 'आकाश ओतश्च प्रोतश्चे'ति कार्यगुणजनकानन्तगुणवत्तां बोधयति । 'अगृह्यो न हि गृह्यते' इत्यत्रापि 'स वायमात्मा सर्वस्य वशी सर्वस्येशान' इति प्रागुच्यते, 'स वा एष महानज आत्मा अन्नादो वसुदान ' इति चानन्तरम्, एवमन्यत्रापि यत्र यत्र निषेधति, तत्र तत्र तद्भूत इति प्रागेव दर्शितम् । अतः श्रुत्यैव ब्रह्मणस्तादृशस्वभावनिश्चयादुभयरूपमेव ब्रह्म प्रतिपत्तव्यमित्यर्थः । ननु यद्युभयलिङ्गं ब्रह्म, तदा सर्वेषां संराधकानां तथैव प्रकाशेत, न तु कस्यचित्कथञ्चिदन्यस्यान्यथेत्यत आह **अहिकुण्डलव**दिति । यथा सर्प ऋजुरनेकाकारः कुण्डलश्च स्वेच्छया भवति, तथा ब्रह्मापि तं तं प्रति तत्तत्फलदित्सया तथाविर्भवतीति न दोष इत्यर्थः । तस्मात् श्रुत्या तादृक्स्वभावं विरुद्धधर्माश्रयं ब्रह्मेति न कापि श्रुतिरुपचरितार्थेति सिद्धम्॥२७॥ इत्यष्टमं प्रकाशवच्चेत्यधिकरणम् ॥ ८ ॥

**प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥** ( ३-२-९. )

ननु ब्रह्मस्वरूपविचारेणोपचाराभावाद्विरुद्धधर्माश्रयत्वाद्विरोधाभावः साधितः, तथापि धर्मस्वरूपविचारेण न सिध्यति, धर्माः किं ब्रह्मणो भिन्नास्तत्कार्यरूपाः, आहोस्वित् ब्रह्मैवेति संशयस्यानपेतत्वात् , तत्र लोके पटीयानां रूपादीनां धर्माणां पटसमवेततया तत्कार्यत्वदर्शनेन धर्मनित्यतायां प्रमाणाभावात् स्वाभाविकत्वमात्रेणाकाशत्वादिवन्नित्यत्वकल्पने गौरवापत्तेरद्वितीयश्रुतिविरोधापत्तेश्च ब्रह्मधर्माः प्रपञ्चवत् कार्याः, ततश्च कारणभूतं ब्रह्म सर्वकल्पनारहितमेव सेत्स्यतीति प्राप्ते । उच्यते । **प्रकाशाश्रयेत्यादि ।**

कम् । अन्यथा तद्वैयर्थ्यापत्तेरिति । इयमपि युक्तिः शिथिलैव । 'एके मुख्यान्यकेवला' इत्येकपदस्य नानार्थतया मुख्यार्थग्रहणे एवकारस्य मुख्यान्तरव्यावर्तकत्वशङ्का स्यादिति तन्निवर्तकतयाप्यद्वितीयपदवैयर्थ्यपरिहारादिति । तस्मादिदमेकदेशिमतमेवेति निश्चयः । चकारः सर्वविज्ञानप्रतिज्ञासमुच्चायकः । तस्मान्न ब्रह्मणि कश्चिद्विरोध इति सिद्धम् ॥ ३० ॥ इति नवमं प्रकाशाश्रयवद्वेत्यधिकरणम् ॥ ९ ॥

**परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥ ( ३–२–१०. )**

पूर्वाधिकरणेषु धर्मविरोधं परिहृत्येदानीं धर्म्यन्तरविरोधः प्रसङ्गादाशङ्क्य परिहर्तव्यः । तत्र यथा ज्ञेयाद्ब्रह्मणः फलरूपमुत्कृष्टम्, एवं पूर्वप्रतिपादितात्फलरूपादप्यन्यदुत्कृष्टमस्ति न वेति सेत्वादिवाक्यैस्तद्विरुद्धैः 'पुरुषान्न परं किञ्चित् सा काष्ठा सा परा गतिः' इत्यादिवाक्यैश्च संदेहे, पूर्वपक्षमाह **पर**मित्यादि । **अ**तोपि ब्रह्मणः परमुत्कृष्टमन्यत्फलमस्ति । कुतः । **सेतून्मानसंबन्धभेदव्यपदेशेभ्यः** । 'अथ य आत्मा स सेतुर्विधृति'रिति दहराधिकरणे ब्रह्मत्वेन साधितस्याप्यात्मनः सेतुत्वव्यपदेशात्, सेतुर्हि फलप्राप्तौ साधनम्, न तु फलम् । एतेन देशपरिच्छेदसिद्ध्या अपरिच्छिन्नता निवर्तते । तथा 'यावान् वा अयमाकाशस्तावानेषोऽन्तर्हृदय आकाश' इत्युन्मानव्यपदेशात्, कालपरिच्छेदसिद्ध्या । तथा, दहरविद्यायामेव 'उभेऽस्मिन् द्यावापृथिवी अन्तरेव समाहिते' इत्यनेनाधाराधेयभावसंबन्धव्यपदेशात् वस्तुपरिच्छेदसिद्ध्या । तथा, 'य एषोन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' 'य एषोऽन्तरक्षिणि पुरुषो दृश्यते' इतिस्थानभेदेन स्थितयोः 'तस्यैतस्य तदेव रूपं यदमुष्य रूप'मित्यादिना धर्मातिदेशमुखेन भेदव्यपदेशात् स्वरूपपरिच्छेदसिद्ध्या । अतो देशकालवस्तुपरिच्छेदरहितमन्यत् किञ्चिदस्तीति प्राप्तम् ॥ ३१ ॥

**सामान्यात्तु ॥ ३२ ॥**

तत्रोत्तरमाह । तुशब्दः सेत्वादिहेतुभिः परत्वनिराकरणपक्षं व्यावर्तयति । समानस्य भावः सामान्यं तस्मात् । संसारसागरोत्तारणाय सेतुत्वम्, निर्लेपत्वायाकाशत्वम्, कामाभिदोहाय च चतुष्पात्त्वम्, अमृतत्वाय षोडशकलत्वम्, अदुर्लभत्वाय संबन्धः, दिव्यत्वायातिदेशः । गुणार्थमेव एवं वचनम्, न दोषार्थम् । अतो न 'ततोऽन्यत्पर'मिति शङ्कोत्पादनीया । तस्मान्न पूर्वोक्ता दोषाः ॥ ३२ ॥

**बुद्ध्यर्थः पादवत् ॥ ३३ ॥**

नन्वन्यसामान्येन कथनस्य किं प्रयोजनम्, अत आह **बुद्ध्यर्थ** इत्यादि । तथा व्यपदेशो बुद्ध्यर्थः, बुद्धिरुपासना, सैवार्थः प्रयोजनं यस्य तादृशः । यथा भूतादीनां पादत्वज्ञानमुपासनार्थम्, एवं तत्तद्गुणवत्त्वज्ञानार्थमेवं कथनमित्यर्थः ॥ ३३ ॥

**स्थानविशेषात् प्रकाशादिवत् ॥ ३४ ॥**

ननु यदि स्वरूपभेदो नास्ति, तदा स एवायमित्यतिदेशेपि हिरण्मयत्वादिबुद्धिः संपत्स्यत इति धर्मातिदेशस्य किं प्रयोजनं अतः स्वरूपभेदार्थमेव धर्मातिदेश इति शङ्कायां स एवेत्युक्तसमानधर्मवत्त्वज्ञानं न भवतीति बोधनाय हेतुं दृष्टान्तं चाह **स्थाने**त्यादि । धर्म्यैक्येपि स्थानविशेषप्राप्त्या न समानधर्मवत्वं दृश्यतेऽन्यत्रेत्यत्रापि तथात्वं भविष्यतीति शङ्कावारणाय धर्मातिदेशः कृत इत्यर्थः । अस्मिन्नर्थे दृष्टान्तमाह **प्रकाशादिव**दिति । 'यदादित्यगतं तेज' इति वाक्यात् यथैकमेव तेजः सूर्यचन्द्राग्निषु न समानप्रकाशम्, यथा चैकोपि काल उत्तरायणदक्षिणायनयोर्न समानधर्मेति, तथात्र न ज्ञेयमित्येतदर्थमतिदेशः । अतो नानेन स्वरूपभेदापादनं कर्तुं शक्यमित्यर्थः ॥ ३४ ॥

इत आरभ्य प्रभूणां लेख इति प्रतिभाति ।

**उपपत्तेश्च ॥ ३५ ॥**

इतोऽन्यस्य परत्वाभावे हेत्वन्तरं सूत्राभ्यामाह । सत्यज्ञानादिधर्मवैशिष्ट्येनाद्वैतश्रुत्या चैतस्यैव सर्वोत्कृष्टत्वमुपपद्यते । ततोऽयमेव परः, नेतोऽन्यः पर इत्यर्थः ॥ ३५ ॥

**तथान्यप्रतिषेधात् ॥ ३६ ॥**

यथा सेत्वादयः श्रुत्योच्यन्ते, तथा 'न तत्समश्चाभ्यधिकश्च दृश्यत' इति समाभ्यधिकौ प्रतिषिध्येते । तस्मादपि तथेति सेत्वादीनां नेतरपरत्वबोधकतेत्यर्थः ॥ ३६ ॥

**अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥**

अविरोधप्रकरणमुपसंहरन् फलितमर्थमाह **अनेने**त्यादि । **अनेन** ब्रह्मणोऽन्यस्य परत्वनिरासेन । **आयामशब्दादिभ्यः। आयामो** दैर्घ्यं व्यापकत्वमितियावत्, तद्बोधकाः शब्दा आयामशब्दाः, व्यापकत्वबोधकानि श्रुतिवाक्यानि, तान्यादीनि येषां तद्गुणसंविज्ञानः । तेभ्यः । 'आकाशवत् सर्वगतश्च नित्यः' 'ज्यायान् दिवो ज्यानाकाशात्', 'सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम्, सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति' इत्यादिश्रुतिस्मृतिभ्यो ब्रह्मणः सर्वगतत्वं सिध्यति, अन्यस्य परत्वानिरासे तु न सिध्येदित्यर्थः ॥ ३३ ॥ इति दशमं परमतः सेतून्मानेत्यधिकरणम् ॥ १० ॥

**फलमत उपपत्तेः ॥ ३८ ॥** ( ३-२-११. )

एवमविरोधात् सर्वोत्तमत्वनिरूपणेनोत्तमाधिकारिणां भजनीयत्वप्रयोजकं रूपमुक्त्वा अधुना तदितराधिकारिणां तदाह **फल**मित्यादि । अत्र ऐहिकामुष्मिकं फलं कर्मसचिवदेवेभ्यो वा भगवतो वेति संशयः । तत्रैतेषां कर्मण्युद्देश्यत्वात्तेभ्य इति पूर्वपक्षः । तत्रेदमाह । **फल**मैहिकमामुष्मिकं वा यत्, तत्सर्व**मतः** परमेश्वरादेव । कुतः । **उपपत्तेः** । 'सर्वस्य वशी सर्वस्येशान'इतिश्रुतिर्हि निरङ्कुशं सर्वेशितृत्वं ब्रह्मण्याह । अतः सर्वं भगवत एवेति भगवानेव सर्वफलदाता, न ह्यन्यस्य वस्त्वन्यो दातुं समर्थ इति ॥ ३८ ॥

**श्रुतत्वाच्च ॥ ३९ ॥**

किञ्च, 'स वा एष महानज आत्मा अन्नादो वसुदान' इति साक्षादपि फलदातृत्वस्य श्रुतत्वादपि तथेत्यर्थः । पूर्वसूत्रे ईशितृत्वं फलदान उपपत्तित्वेन गृहीतः, इह तु श्रुतत्वं साक्षादेव हेतुरुक्त इति विशेषः ॥ ३९ ॥

**धर्मं जैमिनिरत एव ॥ ४० ॥**

अत्र फलदाने मतान्तरमाह **धर्म**मित्यादि । कामनावतो 'ज्योतिष्टोमेन स्वर्गकामो यजेत' इत्यादिभिः फलं श्रूयते । किञ्च, ईश्वरो न स्वतन्त्रः फलदाने । यदि स्वतन्त्रः स्यात्, तर्हि विधिनिषेधानर्थक्यमेव स्यादिति कर्मणः फलभवन उपपत्तिः । अतः श्रुत्युपपत्तिभ्यां हेतुभ्यां धर्मं फलकारणं जैमिनिराचार्यो मन्यत इत्यर्थः ॥ ४० ॥

**पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥**

अत्र सिद्धान्तमाह **पूर्व**मित्यादि । तुशब्दोऽस्वातन्त्र्यवैषम्यनैघृण्यशङ्काव्युदासार्थः । **पूर्वम्** ईश्वरं फलहेतुं बादरायण आचार्यो मन्यते । कुतः । **हेतुव्यपदेशात्** । 'एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषति' 'एष उ एवासाधु कारयति तं यमधो निनीषति' इति श्रुतौ तत्तत्फलदित्सया तत्तत्कर्मकारयितृत्वश्रावणेन कर्म प्रत्यपीश्वरस्यैव हेतुत्वकथनात् । तथा च विधिनिषेधकामनादीनां व्यापारत्वमेवेति न विध्याद्यानर्थक्यम्, आत्मसृष्टेश्च न वैषम्यादिति स एव फलदातेत्यर्थः ॥ ४१ ॥ इत्येकादशं फलमत इत्यधिकरणम् ॥ ११ ॥

**इति श्रीमद्वल्लभाचार्यचरणैकतानश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचितायां ब्रह्मसूत्रवृत्तौ तृतीयाध्यायस्य द्वितीयः पादः ॥ २ ॥**

श्रीकृष्णाय नमः ।

# तृतीयाध्यायस्य तृतीयः पादः ।

**सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात्** ॥ १ ॥ ( ३-३-१. )

पूर्वपादे जडजीवधर्मतुल्यतया प्रतीयमानानां सर्वकामत्वादीनां धर्माणां जडजीवधर्मत्वनिराकरणेन ब्रह्मणो विरुद्धधर्माश्रयत्वस्थापनेन प्रपञ्चविलक्षणशुद्धसच्चिदानन्दविग्रहाभिन्नत्वं ब्रह्मणो निरूप्य, अस्मिन् पादे उपासनार्थं तत्तदुपासनाप्रकरणे पठिताः परस्परविरुद्धा ब्रह्मगता एव धर्मा उपसंहारार्थं विचार्यन्ते । तदर्थं विद्यैक्यं विचार्यम् । तच्च वेद्यैकाधीनमिति प्रथमं वेद्यैक्यं विचार्यते । तत्र अथर्वणोपनिषत्सु कचिद्गोपालस्वरूपम्, कचिद्रामस्वरूपम्, कचिन्नृसिंहस्वरूपं च, ब्रह्मोच्यते । तदत्र ब्रह्म विषयः । रूपभेदेन भिद्यते न वा, उपासनाविषयाणामब्रह्मत्वमेव वेति संशयः । तत्र यद्युपासनाविषयाणामौपाधिकत्वादविद्याकल्पितत्वं चेदङ्गीक्रियते, तदा 'सर्वे वेदा यत्पदमामनन्ती'ति प्रकृत्य, 'अणोरणीयान्महतो महीया'नित्यादिमन्त्रैर्विरुद्धधर्माश्रयेऽशरीरेऽप्राकृततनौ ब्रह्मणि प्रतिपादितस्य सर्वश्रुतिसमन्वयस्य विरोधप्रसङ्गात् तदन्यथाज्ञाने 'योऽन्यथा सन्तमात्मनमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणा' इति श्रुत्युक्तापराधप्रसङ्गाच्चोपासनाविषयाणामब्रह्मत्वं तु न शङ्क्यवचनम् । अतो यथा आमिक्षाधिकरण आमिक्षा वाजिनात्मकघनविरलद्रव्ययोर्विश्वेदेववाजिनोर्देवतयोश्च भेदेन द्रव्यदेवतात्मकयागरूपभेदाद्यागभेदः पूर्वतन्त्रे सिद्धः, तथात्रोपासनासु वेद्यस्यैकरूपत्वाद्विद्यानां च धर्माकारादिभेदात् तत्र तत्र 'तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयते' इति रामपदेन 'असौ परं ब्रह्माभिधीयत' इत्यादिश्रावणाद्ब्रह्मभेद एव युक्तः । यदि चैवमभ्युपगमे ब्रह्मानेकत्वप्रसङ्गात् 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतिविरोधो विभाव्यते, तदा तु धर्मविरोधेन ब्रह्मैक्यस्योपगन्तुमशक्यत्वादुक्तपक्षद्वयेपि दोषाच्चोभयतः पाशारज्जुरिति प्राप्तम् । तत्राभिधीयते । **सर्ववेदान्तप्रत्यय**मित्यादि । सर्वैरनेकरूपनिरूपकैः वेदान्तैः प्रत्ययः ज्ञानं यस्य, तादृशमेकमेव ब्रह्म, न तु प्रतिवाक्यं भिन्नम् । कुतः । **चोदनाद्यविशेषात्** । चोद्यतेऽनेन इति चोदना विधिवाक्यम् । आदिपदेन फलसंयोगरूपाख्याः । तथा च चोदना च आदी च तत्समाहारश्च चोदनादि । चोदना आदिः यस्य तदपि चोदनादि । चोदनादि च चोदनादि च चोदनादी, तयोरविशेषश्चोदनाद्यविशेषः तस्मात् । पूर्वतन्त्रे शाखान्तराधिकरणे केवलानां रूपादीनां व्यभिचारित्वं हृदिकृत्य, 'एकं वा संयोगरूपचोदनाख्याऽविशेषा'दिति सिद्धान्तसूत्रे फलसंयोगरूपचोदनाख्यात्महेतुचतुष्टयसाधारण्येन सर्वशाखोक्तकर्मण एक्यं साधितम्, तथात्रापि तद्दृष्टान्तेन ब्रह्म तद्विद्ययोरैक्यं साध्यते । यथैकस्मिन्नग्निष्टोमे शाखाभेदेपि 'सर्वत्र अग्निष्टोमेन

यजेत' इत्येव चोदना, फलमपि तदेव द्रव्यदेवतात्मकम्, रूपमपि तदेव, सैवाग्निष्टोम इत्याख्यापीति सर्वशाखासूक्तोऽप्यग्निष्टोमो न भिद्यते, एवमत्रापि सर्वेषु वेदान्तेषु ब्रह्मत्वेनैव उपासना विधीयते, साक्षात् परंपरया च मोक्ष एव फलमुच्यत इति रूपचोदनाख्यानां फलसंयोगस्य च साधारण्यात्, ब्रह्म तदुपासना च न भिद्यते इत्यर्थः । यद्यपि ब्रह्मणस्तत्साक्षात्कारस्य च न साक्षात्पुरुषव्यापारविषयत्वम्, तथापि साक्षात्कारसाधनभूतप्रमाणसंपादनद्वारा तादृशवृत्तिसंपादनद्वारा च चोदनासंबन्धसत्त्वात्, तथा पुरुषव्यापारस्यापि संभवात् न हेतोः स्वरूपासिद्धत्वमितिज्ञेयम् । न च विज्ञानद्वारा ब्रह्मणि हेतुसंसर्गसाधनापेक्षया साक्षाद्धेतुसंसर्गवतो विज्ञानादिशब्दवाच्यस्योपासनस्यैव पक्षत्वमङ्गीकृत्य सूत्रव्याख्यानमुचितमिति वाच्यम् । पक्षवाचकविज्ञानादिपदाध्याहारापेक्षया पूर्वपादान्तिमसूत्रे 'पूर्वं तु बादरायण' इति पूर्वपदेन परामृष्टस्य ब्रह्मणः सन्निहिततया तत्परामर्शस्य लघुत्वेन ज्यायस्त्वात् । विद्याविचारस्य वेद्यविचारायत्तत्वाच्चेति ॥ १ ॥

**भेदान्नेतिचेदेकस्यामपि ॥ २ ॥**

ननु घनविरलत्वधर्मभेदेन द्रव्यस्य भेदः, आकारादिभेदेन देवतायाश्च भेदे यागभेदवदुपास्यानां तत्तद्धर्मभेदेन मिथोभेदात्, **न**, हेतुतावच्छेदकाभावे चोदनाद्यविशेषरूपो हेतुः पक्षे ब्रह्मणि, तदुपासने च न, तथा च हेतोः स्वरूपासिद्धत्वात् न तेन विद्यैक्यस्य वेद्याभेदस्य वा सिद्धिरितिचेदित्याशङ्क्य समाधत्ते **एकस्यामपी**ति सूत्रावयवेन । एकस्यामतिरात्रव्यक्तौ गृहीतषोडशिकायामगृहीतषोडशिकायाः सकाशाद्गुणाधिक्येन भेदेपि यथा नातिरात्रभिन्नयागत्वम्, ग्रहणाग्रहणयोरुभयोरपि तदेव कर्माधिकृत्य विधानात्, तथेहापि ब्रह्मैवाधिकृत्य तत्तद्धर्मवैशिष्ट्यवैशिष्ट्ययोरुक्तत्वान्न ब्रह्मणो भिन्नत्वम् । अतो ब्रह्मोपासनाभिन्नत्वं तत्तदुपासनासु । तथा च षोडशिग्रहणाग्रहणयोरतिरात्रधर्मत्ववदत्र तत्तद्धर्मवैशिष्ट्यावैशिष्ट्ययोरपि ब्रह्मधर्मत्वेन वेद्याभेदस्य विवक्षितत्वात् त्वदुक्तस्य भेदरूपस्य हेतोरेव व्याप्यत्वासिद्धत्वम्, रूपभेदो धर्मभेदात्, आमिक्षादियागवदिति साधने, न तद्भेदो धर्मभेदादतिरात्रवदिति दृष्टान्तेन हेतोः साधारणत्वात् । अतः सिद्धान्तहेतुर्निर्दुष्ट इत्यर्थः । एवं सूत्रद्वयेन वेद्यैक्यात् विद्यैक्यसाधन इदं सिद्धम् । यद्वेद्यैक्ये सत्येकस्यां विद्यायामनुक्तानामपि गुणानामुपसंहारः कर्तुं युक्त इति । तत्रोपसंहारो नाम सामान्यतः प्राप्तस्य विषयविशेषे नियमनम्, तदत्र तत्तद्वाक्येऽनुक्तानां गुणानां तेन तेन हेतुना तत्तद्वाक्योक्ते विषये सत्तामनुसंधाय विशिष्टबुद्धौ विषयीकरणमिति बोध्यम् ॥ २ ॥

**स्वाध्यायस्य तथात्वेन समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥**

ननु यागदृष्टान्तेन रूपाद्यभेदाद्विद्यैक्ये विद्यान्तरोक्तगुणोपसंहारो युक्त इति यदुक्तम्, तन्न युक्तम्, सर्वासु शाखासु ज्योतिष्टोमैक्येपि वाजसनेयक उक्ते तस्मिन्नेव यागे तैत्ति-

रीयोक्तधर्मोपसंहारस्य शिष्टैरकरणात्, एवमत्राप्यथर्वणोपनिषदुक्तोपासनासु वेद्यैक्येपि रूपान्तरे रूपान्तरधर्मोपसंहारो न कार्य इत्येव प्राप्यत इति व्यर्थं तदैक्यसाधनमित्याकाङ्क्षायां तदभावायात्र बाधकाभावविशिष्टस्यैव पूर्वोक्तहेतोरुपसंहारसाधकत्वमिति बोधयितुमुपसंहारबाधकान्याह **स्वाध्यायस्ये**त्यादि । **स्वाध्यायो** वेदः तस्य **तथात्वेन** एकस्मिन्नेव कर्मणि शाखाभेदेषु भिन्नभिन्नप्रकारताबोधकत्वेन **समाचारे तन्नियमः**, सम्यग्भूते ज्योतिष्टोमादिलक्षण आचारे तत्तदङ्गाचारनियमः, तावद्भिरेवाङ्गैर्यागसंपत्तावधिककरणस्य निष्प्रयोजनकत्वात् तावतामेवाङ्गानां करणम् । हेत्वन्तरमाह **अधिकाराच्चे**ति । सर्वेषां शाखिनां स्वस्वशाखोक्तप्रकारक एव कर्मण्यधिकारः, न परशाखोक्तप्रकारके । चकारेण 'यदस्य कर्मणोऽत्यरीरिच'मित्याद्युक्तप्रायश्चित्तश्रवणं समुच्चीयते । अतोऽधिकारभेदात्प्रायश्चित्तश्रवणाच्च तत्तदङ्गाचारनियमः । अथवा शाखाभेदो न प्रसिद्धः, तदापि नियामकमाह **सववच्चे**ति । यथा सवा होमाः सप्तसूर्यादयः शतौदनपर्यन्ताः वेदान्तरोदितत्रेताग्न्यनभिसंबन्धात् आथर्वणोक्तैकाग्निसंबन्धाच्च आथर्वणिकानामेव कार्यत्वेन नियम्यन्ते, तथा विभागाभावदशायामपि तत्तद्भेदे विद्यमानायास्तस्यास्तस्याः शाखाया एव नियामकत्वात् तत्तच्छाखोक्तादन्यूनानतिरिक्तकरणनियमः । तथा च निरूपणप्रकारभेदाधिकारभेदप्रायश्चित्तश्रवणानि यथा कर्मणि तत्तदङ्गाचरणनियामकानि, तथा विद्यायामपि तानि नियामकानि । प्रायश्चित्तश्रवणस्थाने त्वत्र 'योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणा'इति वाक्यम् । अतो बाधकाभावविशिष्टमेव वेद्यैक्यमुपसंहारप्रयोजकमिति पूर्वोक्तं नायुक्तमित्यर्थः ॥ ३ ॥

**दर्शयति च ॥ ३ ॥**

उक्तोष्टम्भार्थं प्रत्यक्षां श्रुतिं प्रमाणत्वेनाह **दर्शयती**ति । वेद्यैकत्वेन विद्यानामेकत्वं श्रुतिरेव दर्शयति, 'सर्वे वेदा यत् पदमामनन्ती'ति । उपासनाप्रकारभेदेनोपास्यभेददर्शने दोषं च दर्शयति । 'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते । अथ तस्य भयं भवती'ति । उदित्यव्ययमप्यर्थकम् । अरमित्यल्पार्थकम् । तथा च यदा ब्रह्मण्यल्पमपि भेदं कुरुते, तदनन्तरं तस्य भेदकर्तुर्भयं भवतीत्यर्थः । अतो गुणभेदस्य स्वरूपभेदाप्रयोजकत्वादतीतपादे ब्रह्मणो विरुद्धधर्माश्रयत्वस्य सिद्धत्वेन 'यदेकमव्यक्तमनन्तरूप'मितिश्रुत्यानन्तरूपत्वस्य सिद्धत्वेन, 'अजायमानो बहुधा विजायते'इतिश्रुत्या बहुधा प्राकट्यस्य च सिद्धत्वेन यत्राधिष्ठानमनपेक्ष्य विरुद्धधर्माश्रयं ब्रह्म भक्तार्थमाविर्भवति, तत्र पूर्णो भगवान्, यत्र पुनः 'सत्त्वं रजस्तम इति निर्गुणस्य गुणास्त्रय'इत्यत्र भगवद्गुणत्वेनोक्तं 'सत्त्वं यस्य प्रिया मूर्ति'रित्यादौ प्रियमूर्तित्वेनोक्तं यत्सत्त्वं तस्य स्वचिकीर्षितकार्योपयोगिनीं मत्स्यकूर्मादिरूपां मूर्तिं विधाय अत्रायःपिण्डे वह्निवदव्यक्तरूपेणाविर्भवति, सोऽशावतारः, यत्र पुनः प्राकृत एव शरीरे जीवे वाविशत्यव्यक्तरूपेण, स तु विभूतिरित्युच्यते । यद्यपि 'तन्मायाफलरूपेणे'त्येकादशस्क-

न्धोक्तरीत्या ब्रह्मकार्यरूपत्वात् प्रकृतेरपि ब्रह्मात्मकत्वम्, तथापि तत्र तत्कार्ये वा यत्र नालौकिकरूपेणावेशः, तत्र केवललौकिकरूपत्वमित्येवं भेदेपि ब्रह्मणः सर्ववेदान्तप्रत्ययत्वमप्रत्यूहम् । एवं विद्यासु । मुण्डके ब्रह्मविद्यां प्रक्रम्य ततस्तस्यामेव परापरविभागमुक्त्वा, ऋग्वेदादिरूपा अपरा, 'अथ परा यया तदक्षरमधिगम्यत' इति कथनात्परापरविभागे सत्यपि सर्वासां ब्रह्मविद्यात्वमप्रत्यूहम् ॥ ३ ॥

**उपसंहारोऽर्थाभेदाद्विधिशेषवत् समाने च ॥ ४ ॥**

ननु वेद्यैक्यात्प्राप्ते सर्वत्र गुणोपसंहारे, समाचारसूत्रोक्तैर्निरूपणप्रकारभेदादिभिस्तन्निवारणं कृतमिति तद्विचारे यस्यकस्याचिद्बाधकस्य सत्ता यत्र क्वाप्यायात्येवेति गुणोपसंहारो न क्वचिदपि प्राप्नोति, स चायुक्तः, श्रीरामोपनिषत्सु 'यो वै रामचन्द्रः स भगवान्, ये च मत्स्यकूर्माद्यवतारास्तस्मै वै नमो नमः' इत्यनेनोक्तावताररूपत्वस्य श्रीरामे, किञ्चाक्रूरस्तुतौ 'नमस्ते रघुवर्याय रावणान्तकराय च' इति रघुवर्यत्वादेः श्रीव्रजनाथे उपसंहारदर्शनात्, एतद्दृष्टान्तेन मत्स्ये शरचापादीनां पुरुषरूपे लक्षयोजनामशृङ्गादीनां विरुद्धधर्माणामप्युपसंहारस्यापत्तेरित्याशङ्कायां उपसंहारप्रयोजकं वदन् समाधत्ते **उपसंहार** इत्यादि । उक्तस्थलादिषु य उपसंहारः, स त्वर्थस्य भगवल्लक्षणस्य वस्तुनः **अभेदा**दैक्यात् । तथा च येन तदनुधीयते, तेन कार्य इत्येतदर्थं तदनुसंदधता स्वोपास्ये तदवतारवत्त्वे तेन रूपेण तत्कार्यकर्तृत्वमुपसंहार्यम्, न त्वनेन रूपेण तद्रूपस्तत्कार्यकर्ता वेति, अन्येन तु तदपि न कार्यम् । तत्र दृष्टान्तः । **विधिशेषवत्समाने** **चे**ति । विधिः शेषो येषामग्निहोत्रादीनाम्, ते विधिशेषाः, तद्वत् समाने तुल्ये, **चो**प्यर्थे । तथा च तेषामग्निहोत्रत्वादिलक्षणे धर्मे तुल्येपि यथा स्वस्वशाखोक्तस्यैव करणम्, नान्यधर्मोपसंहारः, तथात्रापि 'इति रामपदेनासौ परं ब्रह्माभिधीयते' 'तयोरैक्यं परं ब्रह्म कृष्ण इत्यभिधीयत' इति श्रावणाद्यो ब्रह्मस्वरूपप्राधान्येनोपास्ते, तेन कार्यः । यः पुनरवतारस्वरूपप्राधान्येनोपास्ते, तेन न कार्यः, यथा तत्तच्छाखिनाग्निहोत्रादिषु परशाखोक्तान्यङ्गानीत्यधिकारभेदादुभयसामञ्जस्यमित्यर्थः । यद्वा । पूर्वसूत्रेषु वेद्यैकेन विद्यैक्य उपसंहारबोधके चोक्ते, तदनुसंधानतो जातायामुक्ताशङ्कायाम्, 'उपसंहारोऽर्थाभेदा'दित्यनेन यथाधिकारमुपसंहारानुपसंहारौ कर्तव्यत्वेन बोधयित्वा, 'विधिशेषवत्समाने चे'त्यनेनोपसंहारप्रयोजनमाह । विधेः शेषो विधिशेषः, सोऽस्यास्तीति विधिशेषवत्, मतुबन्तम्, तादृशं सत् यत्समानमेकं तस्मिंश्चोपसंहारः । अस्मिन्पक्ष इदं भिन्नं वाक्यम् । तथा च यथा तैत्तिरीयब्राह्मणप्रथमकाण्डे चातुर्मास्यप्रथमपर्वणो वैश्वदेवयागस्य 'यद्वैश्वदेवेन यजते प्रजा एव तद्यजमानः सृजते' इत्येकं फलमुक्त्वा, पुनरपि 'यद्वैश्वदेवेन यजते अग्निमेव तत्संवत्सरमाप्नोति, तस्माद्वैश्वदेवेन यजमानः संवत्सरीणां स्वस्तिमाशास्त' इत्याशासीते द्वितीयं फलमाह । तत्र यथैकस्य कर्मणोऽर्थवादे फलद्वयश्रावणात् फलद्वयसाधकत्वोपसंहारः,

तथा यत्र फलद्वयमुपासनायां श्रूयते 'यो मां स्मृत्वा निष्कामः सकामो भवति, 'अगाधा गाधा भवती'त्यादि, 'यो ध्यायति सोऽमृतो भवती'तिगोपालतापनीयादौ, तत्र 'तं यथा यथोपासते तदेव भवति तद्धैतान् भूत्वावति' इति वाजसनेयिश्रुतेः तत्तत्फलसाधकत्वस्योपसंहार इत्युपसंहारबीजमनेन सूत्रभागेनोक्तम् । तस्मान्न कोपि दोष इत्यर्थः ॥ ४ ॥

**अन्यथात्वं शब्दादितिचेन्नाविशेषात् ॥ ५ ॥**

गुणोपसंहार एव बाधकान्तरमाशङ्क्य परिहरति **अन्यथात्व**मित्यादि । ननूपसंहारो गुणानां तदा भवति, यदोपास्यानां ब्रह्मत्वेनैक्यं भवति । ब्रह्म तु **शब्दात्** 'कृत्स्नः प्रज्ञानघनः' इत्यादिश्रुतेः प्रज्ञानमात्रमेकरसम् । तत्र चेन्मिथो विरुद्धाः शान्तत्वक्रूरत्वतपोभोगादय उपसंह्रियन्ते, तदैकरसत्वहान्या तेषामुपास्यानां रूपाणा**मन्यथात्व**मब्रह्मत्वं स्यादितिचेत्, एवं सूत्रांशेनाशङ्क्य, अंशान्तरेण समाधत्ते **नाविशेषा**दिति । एकरसत्वं यथा श्रुतिबलान्निर्णीयते, तथा विरुद्धधर्माश्रयत्वमपि तत एव निर्णीयते । अत उभयोरपि श्रौतत्वाविशेषात् तद्वस्त्वेव तादृशम् । अतो न विरुद्धगुणोपसंहारेण ब्रह्मत्वहानिरित्यर्थः ॥ ६ ॥

**न वा प्रकरणभेदात्परोवरीयस्त्वादिवत् ॥ ७ ॥**

पूर्वसूत्रे 'अन्यथात्वं शब्दात्' इत्यनेन यदाशङ्कितम्, तस्यैव परिहारं प्रकारान्तरेणास्मिन् सूत्र आह **नवे**त्यादि । अन्यथात्वं **प्रकरणभेदाद्वा** न, तत्र दृष्टान्तः **परोवरीयस्त्वा**दिति । अयमर्थः । श्रुतिप्रामाण्यात् यावदुक्तधर्मवद्ब्रह्मेति सिद्धावपि यत्प्रकरणभेदेन तद्धर्मनिरूपणम्, तत् तस्य तस्याधिकारिणस्तत्तद्धर्मवत्त्वेनोपासने तत्तदभीष्टफलसिद्ध्यर्थम् । अतो ये ज्ञानाधिकारिणस्तेषामक्षरप्राप्त्यर्थं 'अदृश्यमग्राह्य'मित्यादिश्रुतिरदृश्यादिगुणकं निरूपयति, ये पुनर्भक्त्यधिकारिणस्तेषां भक्तेर्बहुविधत्वात्तदुक्तफलसिद्ध्यर्थं तादृशतादृशभक्तानुभवयोग्यमाथर्वणश्रुतिर्निरूपयति । यथा तैत्तिरीयसंहिताषष्ठकाण्डद्वितीयाध्याये अहीनाख्यसोमयागे अहीनसत्रे च उपसद्दिनसंख्यां पूर्वं विधाय तेषु दिनेषु आराग्रावान्तरदीक्षां 'अस्मिन्मे लोकेर्धुकं स्यात्' इति कामवत उक्त्वा, तदग्रे 'परोवरीयसीमवान्तरदीक्षामुपेयाद्यः कामयेतामुष्मिन्मे लोकेर्धुकं स्यादिति चतुरोऽग्रेऽथ त्रीनथ द्वावथैकमेष वै परोवरीयस्यवान्तरदीक्षा' इति पठितं यत् परोवरीयस्त्वं तद्वत् । अर्थस्तु, सोमक्रयदिने सायमेकं स्तनं पिबेत्, अपरेद्युः प्रातर्द्वौ स्तनौ, सायं त्रीन् स्तनान्, परेद्युः प्रातश्चतुरः स्तनानेवमाराग्रावान्तरदीक्षाङ्गव्रते स्तनपानसंख्या विहिता । आरं बलीवर्दप्रतोदनलोहम्, तद्वत्सूक्ष्ममग्रं मुखं यस्याः सा आराग्रा इति । द्वितीयस्यास्तु तद्विपरीता संख्या । 'सोमक्रयदिने सायं चतुरः स्तनात्, द्वितीयदिने प्रातस्त्रीन्, सायं द्वौ, तृतीयदिने प्रातरेकम्' इति । एतस्य व्रतस्य दीक्षाप्रकरणे पठितत्वात् दीक्षां विना तथा व्रतकरणे तु न परोवरी-

यस्त्वम्, एवं भक्तिप्रकरणीयानामथर्वणोपनिषदुक्तानां रूपाणां न भक्तिरहितोपास्यत्वम् । तथा च तत्तद्भक्तिमतां तथातथोपासनापरिपाके तत्र तत्र ब्रह्मत्वस्यानुभव इति नाब्रह्मत्वशङ्कोदयः । अभक्तशङ्कामात्रेण तु न तद्बाध इति तेषां ब्रह्मत्वं निर्विघ्नमित्यर्थः ।

यद्वा । पूर्वसूत्रेणान्यथात्वशङ्कामपाकृत्य यः सर्वेषु रूपेषूपसंहारसूत्रेण मिथः सर्वधर्माणामुपसंहारः प्राप्तः, सत्वैकान्तिभक्तानुभवविरुद्ध इति तदर्थमुपसंहारव्यस्थामस्मिन्सूत्र आह **नवे**त्यादि । सर्वेष्ववतारेषु यस्य भगवदवतारत्वेन साधारणी भक्तिः, तेन सर्वगुणोपसंहारः सर्वत्र कार्यः । यस्त्वेकान्ती तस्यान्तःकरणं स्नेहोत्कर्षेणैकत्रैव पर्यवसितमिति तस्य रूपान्तरेऽन्तःकरणाभावात्तेन तद्गुणोपसंहारो न कार्यः । तत्र हेतुः **प्रकरणभेदा**दिति । श्रुत्यादौ तत्तदधिकारिणमुद्दिश्य तत्तत्प्रकरणमुक्तमिति प्रकरणपदेनात्राधिकारो बोध्यते । तथा चोपासकादिभ्य उत्कृष्टाधिकारादित्यर्थः संपद्यते । तदेतदधिकारोत्कर्षादिकं दृष्टान्ते प्रकटयति **परोवरीयस्त्वादिव**दिति । छान्दोग्ये प्रथमप्रपाठके उद्गीथविद्यासमाप्तावुक्तं 'आकाशो ह्येवैभ्यो लोकेभ्यो ज्यायानाकाशः परायणं स एष परोवरीयानुद्गीथः, स एषोऽनन्त' इति । तस्यामेव विद्यायामक्ष्यादित्यादिप्रतीकोपासने हिरण्यश्मश्रुत्वादयोपि गुणा उक्ताः । तथापि सामगतिपरंपराविश्रान्तिस्थानभूतः परस्मात्परो वराच्च वरीयानेतादृग्गुणविशिष्टो य उद्गीथः, तदुपासकस्य स एवोद्गीथ उत्कृष्टो भासत इति । तत्र यथा न हिरण्यश्मश्रुत्वादिगुणोपसंहारः, एवमत्रापि साधारणाधिकारादेकान्त्यधिकार उत्कृष्ट इति, तस्मात्तथेत्यर्थः ७

**संज्ञातश्चेत्तदुक्तमस्ति तदपि ॥ ८ ॥**

नन्वेकान्तिनो भवतूत्कृष्टोऽधिकारः, तथापि 'रामोपासक' इति संज्ञा त्वविशिष्टेत्युपसंहारे किं बाधकमित्येवं सूत्रांशेनाशङ्क्य, अंशान्तरेण परिहरति **संज्ञात** इत्यादि । एवं **संज्ञातो** या शङ्का, तदुत्तरं तु पूर्वसूत्रे एव अधिकारप्राबल्यादुक्तम् । संज्ञाया व्यवहर्तृभिः कृतत्वेन लौकिकत्वात्, अधिकारस्यान्तरत्वात्, शास्त्रीयत्वाच्च । नन्वधिकारस्यान्तरत्वेपि न प्रमाणेषु गणना, संज्ञा तु प्रमाणान्तर्गणितेति कथं न तस्या बलवत्त्वमित्याशङ्क्य, संज्ञैकत्वस्य हेतोरन्वयव्यभिचारमाह **अस्ति तु तदपी**ति । **तुः** शंकानिरासे, संज्ञैक्यमात्रेण गुणोपसंहारो न शङ्क्यः । यतः छान्दोग्ये 'ॐमित्येतदक्षरमुद्गीथमुपासीत' इत्युद्गीथावयवस्य प्रणवस्योपासनमुक्तम्, तथा आदित्याक्षिपुरुषप्रतीककं चोक्तम्, तथा आकाशमुपक्रम्य परोवरीयस्त्वगुणकम् । वाजसनेयके च कृत्स्नोद्गीथविषयमासन्योपासनम् । एतेषु प्रकरणभेदविषयभेदाभ्यां प्रमितभेदेष्वपि उद्गीथोपासनेति संज्ञैकत्वमस्ति । तथा च व्यभिचरितत्वेन तस्याभेदसाधने सामर्थ्याभावात् फलभेदरूपभेदाभ्यां सिद्धे भेदे, उपसंहारप्रयोजकस्यैक्यस्याभाव एव तद्बाधक इत्यर्थः ॥ ८ ॥

**व्याप्तेश्च समञ्जसम् ॥ ९ ॥**

ननूपास्येषु रूपेषु बाल्यपौगण्डाद्यवस्थादर्शनादवस्थाभिश्च विग्रहे न्यूनाधिकपरिमाणादिदर्शनात्तेषूक्तं सच्चिदानन्दरूपत्वमनुपपन्नम्, सच्चिदानन्दरूपस्य ब्रह्मणः सदैकरू-

पत्वात्, अतस्तेषु प्राकृतत्वमेवाभ्युपेयम्, तथा सति पूर्वसाधितं तेषां ब्रह्मत्वं विरुद्धधर्माश्रयत्वं गुणोपसंहारादिकं च सर्वमसमञ्जसं स्यादित्याशङ्क्याह **व्याप्ते**रित्यादि । 'सर्वतः पाणिपादान्तं सर्वतोऽक्षिशिरोमुखम् । सर्वतः श्रुतिमल्लोके सर्वमावृत्य तिष्ठति' इत्यादिश्रुत्या तादृशस्यैव सर्वत्र व्याप्तेः । **च**काराात्तादृशस्यैव 'सर्वरसः' इति श्रुत्या रसरूपत्वेन, **समञ्जसम्** । यादृशेन रूपेण भक्तानां लीलारसानुभवो भवति, तादृशं रूपं क्रमेण योगमायापसारणात्प्रकटयति, पूर्वं च स्वस्मिन्नेवान्तर्भावयतीति बाल्यादिभावोपपत्तेः पूर्वोक्तं सर्वमुपपन्नम् । तथा च न्यूनाधिकपरिमाणादिदर्शनस्य मायापसारणहेतुकत्वाद्विग्रहस्य सदैकरूपताया अबाधे पूर्वसाधितं ब्रह्मत्वादिकं युक्तमेव यावदुक्तधर्मवद्ब्रह्मेत्यदोष इत्यर्थः ॥९॥

**सर्वाभेदादन्यत्रेमे ॥ १० ॥**

ननु 'अनुच्छित्तिधर्मे'ति श्रुत्या ब्रह्मधर्माणामनुच्छेदश्रावणात् ब्रह्मधर्मत्वेन बाल्यादयः सर्वेपि नित्या वाच्याः, ते च तत्तद्भक्तानां स्वलीलानुभावनार्थं प्रकटाः क्रियन्त इति तत्तद्भक्तविशिष्टास्तथा भक्तानामपि नित्यत्वं प्रापयन्ति, कृष्णोपनिषदि त्वेकस्यैव भक्तस्य पौर्वापर्येणानेकलीलासंबन्धित्वं बोध्यते । 'यो नन्दः परमानन्दो यशोदा मुक्तिगेहिनी' इत्यादिना, 'सोवतीर्णो महीतले, वने वृन्दावने क्रीडन् गोपगोपीसुरैः सहे'त्यन्तेन । तत्रैकस्यैव तत्तल्लीलासंबन्धित्वे विरुद्धकालीनानां लीलानां युगपदनुभवासंभवात्क्रमेऽङ्गीकार्ये लीलानामनित्यत्वापत्तिः । नित्यत्वे च तत्तल्लीलासंबन्धिनो भक्तस्य भिन्नत्वापत्तिरनुभवविरोध उक्तश्रुतिविरोधश्चेत्युभयतः पाशारज्जुरित्याशङ्कायामाह **सर्वे**त्यादि । सर्वेषां लीलामध्यपातिनां पदार्थानां ब्रह्मणा **सहाभेदात्** । 'तस्मान्न भिन्ना एतास्तु आभिर्भिन्नो न वै प्रभुः । भूमावुत्तारितं सर्वं वैकुण्ठं स्वर्गवासिनम्' इति कृष्णोपनिषन्मन्त्रे तेषां ब्रह्माभेदश्रावणेन तदविनाभावात्, भेदविलक्षणाभेदाद्वा, **अन्यत्र** उत्तरोत्तरलीलायामपि **इमे** पूर्वलीलासंबन्धिन एव ते भक्ता इत्यर्थः । न चैवं सति लीलानुभवस्य क्रमिकत्वाल्लीलानामनित्यत्वं शङ्क्यम् । अनुभवापेक्षया श्रुतेर्बलिष्ठत्वात् । 'अङ्गसङ्गं करिष्यामि'इति श्रुतावङ्गसङ्गलीलाया भावित्वस्योक्तत्वाच्च । तथा च 'यतो वाचः' इति 'अनिरुक्तः' इति श्रुत्या च ब्रह्मणो वाङ्मनसागोचरत्वस्योक्तत्वात् तदिच्छातत्सामर्थ्ययोर्महिम्ना अघटितघटनापटीयस्त्वं युक्त्यगोचरत्वं चानुसन्धाय सर्वाः शङ्का वारणीया इति भावः । एतत्सूत्रे **अन्यत्रे**ति पदेन लीलान्तरवद्देशान्तरस्यापि संग्रहाद्विरुद्धदिक्कयोर्भक्तयोर्भक्त्यतिशयेन यत्र युगपदुभयदेशे भगवद्दर्शनम्, यथा श्रुतदेवजनकयोर्गेहे, तत्र तत्तद्दृषिवत् तत्तद्भक्तानामपि साहित्यात् तेषामपि व्यापकत्वं जातिन्यायेन बोधितं ज्ञेयम् ॥ १० ॥

**आनन्दादयः प्रधानस्य ॥ ११ ॥**

ननु तेषां ब्रह्मणा सहाभेदे व्यापकत्ववत् पूर्णानन्दैश्वर्यादयोपि धर्मास्तेषु प्रतीयेरन्, न चैतदस्ति, दुःखसंभावनायां प्रभुप्रार्थनाकरणदर्शनात्, तया पूर्णानन्दत्वाद्यभावे निश्चिते

तेषां व्यापकत्वमपि न वक्तुं शक्यम्, तुल्यत्वादित्याशङ्कायामाह **आनन्देत्यादि**। आनन्दैश्वर्यवीर्यादयो धर्माः **प्रधानस्य** धर्मिणो ब्रह्मण एव, न तु गुणभूतानां लीलापदार्थानां ते संभवन्ति । सर्वथा तौल्ये ब्रह्मणः प्राधान्यव्याहतेरित्यर्थः । न चैवं सति व्यापकस्याप्यभावः शङ्क्यः । आकाशपरिमाणवत् साहजिकधर्मत्वात् तदुपपत्तेरिति ॥ ११ ॥

**प्रियशिरस्त्वाद्यप्राप्तिरुपचयापचयौ हि भेदे ॥ १२ ॥**

पूर्वसूत्रे पूर्णानन्दत्वादयो ब्रह्मासाधारणाधर्मा इति ते विभूतिषु नोपसंहर्तव्या इति विचारिते, प्रियशिरस्त्वादिस्मरणाद्विचार्यन्ते, तेषामुपसंहारः पुरुषरूपोपासने प्राप्नोति, स च विरुद्ध इति कथं कार्यः । किञ्च, मोदप्रमोदावुपचितानुपचितानन्दरूपौ प्रदेशभेदेनोक्तौ, ब्रह्म तु नित्यानन्दैकरसम्, अतस्तत्र तत्कथनमनुपपन्नमिति द्वयमाशङ्क्य तत्तदधिकारिणं प्रत्यनुपसंहारोपसंहारौ श्लेषेण वदन् तां शङ्कां परिहरति **प्रियेत्यादि**। पूर्वसूत्रादत्र 'प्रधानस्ये'तिपदमनुवर्तते । **हि**र्हेतौ । प्रधानस्य **प्रियशिरस्त्वाद्यप्राप्तिः** प्रियशिरस्त्वाद्यसंभवः । **हि** यतो हेतोः **उपचयापचयौ** मोदप्रमोदरूपौ, **भेदे**, चित्तशुद्धितारतम्येन भाते भेदे, भासेते । यदा भेद एव न भातः, तस्य तयोरप्यभानात् प्रियशिरस्त्वादेरनुपसंहार इत्यर्थः । यद्वा । **हि** यतो हेतोर्भेदे भाते चित्तशुद्धितारतम्येन तौ तदप्राप्तिश्च । यदा भेद एव न भातः, तदा नोपचयापचयौ, नापि प्रियशिरस्त्वाद्यप्राप्तिः, किन्तु उपचयापचयाभावः प्रियशिरस्त्वाद्युपसंहारश्च भवतीत्यर्थः ॥ १२ ॥

**इतरे त्वर्थसामान्यात् ॥ १३ ॥**

पूर्वसूत्र उभयविधाधिकार्यर्थं श्लेषेण पक्षद्वयमुक्तमिति द्वयोर्हेतुर्व्यक्तव्यः । तत्र पूर्वमुपसंहारे हेतुमाह **इतरेत्यादि**। **इतरे** पुरुषरूपविरुद्धत्वेन भासमाना अक्षपुच्छादयोपि धर्माः पुरुषरूप उपसंहार्याः । तत्र हेतुः । **अर्थसामान्यात्** । **अर्थः** पदार्थ आनन्दमयत्वलक्षणः । तस्य समानत्वादेकत्वात् । तुर्विरोधव्यवच्छेदाय । तथा च यथा संकर्षणस्वरूपोपवर्णने 'किरीटसाहस्रमणिप्रवेकप्रोद्योतितोद्दामफणासहस्र'मित्युक्तम्, तथात्रानानन्दमयमेकमेव रूपं प्रकृत्योभयथाप्युक्तत्वाद्भेदमपाकृत्यानन्दमयोपासकेनोभयथाप्युपास्य इत्यर्थः ॥ १३ ॥

**आध्यानाय प्रयोजनाभावात् ॥ १४ ॥**

अनुपसंहारे हेतुमाह **आध्यानेत्यादि**। आनन्दस्वरूपस्यासमन्तात् ध्यानं तदर्थं यावन्त उपयुज्यन्ते प्रियत्वप्राधान्यादयः, त एवोपसंहर्तव्याः, नेतरे शिरस्त्वादयः । तत्र हेतुः **प्रयोजनाभावात्** । ध्यानपदार्थस्य तावतैव सिद्धेरधिकोपसंहारे प्रयोजनाभावादित्यर्थः ॥ १४ ॥

**आत्मशब्दाच्च ॥ १५ ॥**

अत्रैव हेत्वन्तरमाह । 'आनन्द आत्मे'त्यनेन पूर्वोक्तानां प्रियप्राधान्यादीनामात्मा स्वरूपमानन्द एवेत्य**ात्मशब्दा**दपि नेतरे उपसंहार्याः । आनन्दमयविवरणे 'तदात्मानं

स्वयमकुरुत ' इत्यादिना आत्मरूपप्राकट्ये ' रसो वै स' इति रसरूपताया वक्ष्यमाणत्वात्, रसस्य च निरुपाधिप्रियात्मरूपस्थायिभावात्मकत्वात्, तस्यैव परस्यात्मनो विवरणाय प्रपाठकस्य प्रवृत्त्या, तस्यैवानन्दमयत्वाच्चोपक्रमादिभिस्तात्पर्यलिङ्गैरवयवप्रायपाठपठितस्याप्यात्मशब्दस्यावयवे तात्पर्यराहित्यात्, तत्समभिव्याहृतस्याप्यानन्दपदस्य स्वरूप एव तात्पर्यात्तथेत्यर्थः ॥ १५ ॥ इति प्रथमं सर्ववेदान्तप्रत्ययाधिकरणम् ॥ १ ॥

**आत्मगृहीतिरितरवदुत्तरात्** ॥ १६ ॥ (३-३-२)

तैत्तिरीयेऽन्नमयादिनिरूपणे तेषां पुरुषविधत्वं निरूप्य, ' तस्यैष एव शारीर आत्मा ' इति सर्वत्रोच्यते । तत्रानन्दमयपर्यन्तं शरीरात्मत्वकथनात्संशयः । किं सर्वत्र शरीराभिमानी जीव एव, उत ब्रह्मेति । पूर्वपक्षस्तु, सर्वत्र शारीरपदाज्जीवस्य प्राप्तेः, भार्गव्यां विद्यायामन्नमारभ्यानन्दपर्यन्तं ब्रह्मत्वकथनात् ब्रह्मणोपि प्राप्तेः, उभयत्रापि श्रौतत्वाविशेषादनिर्णय एव पर्यवस्यतीति प्राप्तः । एवं प्राप्त आह **आत्मगृहीति**रित्यादि । **इतरव**ज्जीववत् या आत्मगृहीतिः 'शारीर आत्मा' इत्यनेनात्मग्रहणम्, तत्, **उत्तरात्** सर्वेभ्य उत्तरो य आनन्दमयस्तस्मात् । अन्नमयातिरिक्तेषु सर्वेषु वाक्येषु ' यः पूर्वस्ये'तिकथनात् सर्वेभ्यः पूर्वो योऽन्नमयस्तस्य पूर्वमाकाशादिजनकस्य परस्यैव ब्रह्मण उक्तत्वात्, तत्स्वरूपबोधनार्थमेवानन्दमयस्योक्तत्वादुपक्रमादिलिङ्गैः तत्रैवात्मत्वस्य पर्यवसानाद्ब्रह्मैवात्रोच्यत इति सुखेन निर्णय इत्यर्थः ॥ १६ ॥

**अन्वयादिति चेत्स्यादवधारणात्** ॥ १७ ॥

नन्वेतदग्रे सर्वत्र ' अन्योऽन्तर आत्मे'ति पठ्यते, तत्रान्य इति श्रुत्या अन्नमयाद्यात्मनां भिन्नत्वनिरूपणाच्छारीरपदाच्च सर्वत्र भिन्नो जीव उच्यत इत्येव युक्तम्, आनन्दमये या शारीरत्वोक्तिः, सा तु तस्य ब्रह्मत्वेन सर्वत्रा**न्वया**दिति न तद्विरोध इत्याशङ्क्य परिहरति **स्यादवधारणा**दिति । आनन्दमय एव सर्वशरीराभिमानी स्यात् । तत्र हेतुः । **अवधारणात्** । ' एष एव ' इत्येवकारेणेतरनिषेधपूर्वकमानन्दमयस्यैवात्मत्वनिर्धारणात् । तथा च पुरुषविधब्राह्मणे उपक्रान्तस्यात्मनो 'ब्रह्म वा इदमग्र आसीत्' इति ब्रह्मत्वं निगमयित्वा 'तदात्मानमेवावेदहं ब्रह्मास्मी'तिवत् स्वस्य सर्वात्मकत्वे 'सर्वत्राहम्' इति ज्ञानं न दोषः, तथात्र सर्वशरीराभिमानित्वेन ज्ञानमप्यदुष्टम् । अत आनन्दमय एव सर्वशरीराभिमानीत्यर्थः ॥ १७ ॥ इति द्वितीयमात्मगृहीत्यधिकरणम् ॥ २ ॥

**कार्याख्यानादपूर्वम्** ॥ १८ ॥ (३-३-३)

अन्नमयादीनां कोशातिरिक्तत्वं निरूपयितुमनुप्रसङ्गेनेदमाह **कार्ये**त्यादि । तैत्तिरीयाणां ब्रह्मवित्प्रपाठके, 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इत्युपक्रम्य महाभूतसृष्टिमुक्त्वा, आम्नायते, 'पृथिव्या ओषधयः, ओषधिभ्योऽन्नम्, अन्नात्पुरुष स वा एष पुरुषोन्नर-

समयः' इति, एतदग्रे चान्नस्योत्पत्तिलयहेतुत्वमुक्त्वा 'येऽन्नं ब्रह्मोपासत' इत्युच्यते, भृगुप्रपाठके च 'अन्नं ब्रह्मेति व्यजाना'दित्युच्यते । तत्र संशयः । 'स वा एष पुरुषः' इत्यनेन किं पूर्वोक्त एव पुरुषः परामृश्यते, उत तद्भिन्न इति । तत्र 'स वा' इति तच्छब्दस्य पूर्वपरामर्शित्वात्पूर्वं च 'अन्नात्पुरुष' इत्यन्नजन्यस्यैव पुरुषस्योक्तत्वात् 'स एव' इत्युक्तम् । न च ब्रह्मत्वेन कथनस्यासङ्गतिः । तस्य तथोपासनार्थत्वेन स्तुतिरूपतया सङ्गतेरिति प्राप्ते, आह । **कार्याख्यानादपूर्वम्** । **कार्यस्य,** 'अन्नं हि भूतानां ज्येष्ठ'मित्यादिना भूतजनकत्वतद्वर्धकत्वादिरूपस्य, **आख्यानात्** अन्नस्य ब्रह्मत्वेनोपासनार्थं 'अन्नाद्वै प्रजाः प्रजायन्ते' इत्यादिना पूर्वं तस्मिन् ब्रह्मधर्मेषूक्तेषु तावतैवोपासनायां सिद्धायां पुनः कथनप्रयोजनाभावेऽप्यासमन्तात्कथनात्, तत्रोच्यमानमन्नम्, अपूर्वम्, पूर्वजन्यत्वेनोक्तादन्नादतिरिक्तम् । तथा चैवमन्नयोर्भेदे सिद्धे, 'अन्नात्पुरुषः' इत्युक्ताद्भौतिकात्पुरुषाद्भिन्न एव 'स वा एषः' इत्यनेनोक्तोऽन्नसारमय आध्यात्मिकः । न च प्रत्यभिज्ञाबोधकयोः 'स एष' इत्यनयोर्विरोधः शङ्क्यः । स इत्यस्य 'स राजा तोयनीव्या भूमेः,' कला च 'सा कान्तिमती कलावत' इत्यादाविव प्रसिद्धार्थकतया 'एष' इत्यस्य वक्ष्यमाणार्थकतया चोपपत्तावनयोः प्रत्यभिज्ञापकत्वस्य निश्चेतुमशक्यत्वात् । अतः कार्याख्यानादन्य एवायमित्यर्थः । एतस्मादन्यो यः स तु सर्वत्र विद्यमान आनन्दमय इति न काप्यनुपपत्तिः । तेनानन्दमयविद्यायामन्नमयादयो विभूतित्वेनोपास्याः, आनन्दमयस्तु विभूतिमत्त्वेन पुरुषोत्तमतयेति बोधितम् ।

यद्वा । वाजिनां बृहदारण्यके पुरुषविधब्राह्मणे 'आत्मेत्येवोपासीत' इत्युपक्रम्य, 'तदेतत्प्रेयः पुत्रात्प्रेयो वित्तात्प्रेयोऽन्यस्मात्सर्वस्मादन्तरतरं यदयमात्मा' इत्युक्त्वा, तदग्रेऽन्यस्य प्रियत्वं निराकृत्य, 'ईश्वरो हि तथा स्यादात्मानमेव प्रियमुपासीत' इति पठ्यते । तत्र सर्वेषु प्रियत्वस्यात्मोपाधिकत्वादात्मपदेन जीवात्मन एव प्रियत्वेनोपासना विधीयते, उतेश्वरपदात्परमात्मन इति भवति संशयः । तत्र यथा पत्यादेरात्मोपाधिकप्रियत्वोक्त्या जीवात्मन एव प्रियत्वं मैत्रेयीब्राह्मण उच्यते, एवमत्रापि 'प्रेयः पुत्रा'दित्यादिकथनाज्जीवात्मन एवेति युक्तम् । 'ईश्वरो हि तथा स्या'दिति तूपासनाफलकथनमिति न तद्विरोध इति प्राप्ते, आह **कार्ये**त्यादि । कार्यैराख्यानं कार्याख्यानं कर्मनामकथनं तस्मात्, प्रेयस्त्वकथनतः पूर्वं 'प्राणन्नेव प्राणो भवति, वदन् वाक्, पश्यंश्चक्षुः, शृण्वन् श्रोत्रं, मन्वानो मनः, तान्येतान्यस्य कर्मनामान्येव' इतिवाक्ये प्राणादिभिः कर्मनामभिरात्मन एकस्यैव कथनात्, **अपूर्वम्**, पतिपुत्रवित्ताद्यभिमानदशायामन्यापेक्षया यत्पूर्वं निरुपधिप्रीतिविषयत्वेन भातं तस्मादतिरिक्तमत्रात्मशब्दवाच्यम् । लोके हि प्राणादिशब्दैः कौष्ठ्यवाय्विन्द्रियाण्येवोच्यन्ते, न तु आत्मा । अतो न जीवस्यैतानि नामानि । ईश्वरे तु सर्वरूपत्वात्सर्वकर्तृत्वात्संभवतीति वाचनयैव 'ईश्वरो हि तथा स्या'दित्युक्तम् । तथा 'प्रेयोऽन्यस्माच्च सर्वस्मा-

दन्तरतरं यदयमात्मा' इत्यनेनान्यस्मादन्तराज्जीवादप्यतिशयेनान्तरत्वं बोधितम्, तेन पुरुषोत्तमस्वरूपमेव तथा भवितुमर्हतीत्यर्थः । अतो विग्रहस्यैवात्मस्वरूपत्वात्तत्राविकृतत्व-परमानन्दत्वादयो धर्मा उपसंहर्तव्या इति बोधितम् ॥ १८ ॥

**समान एवं चाभेदात्** ॥ १९ ॥

ननु विग्रहे चक्षुःश्रोत्रादीनां नानाकारत्वेन वैलक्षण्यप्रतीतेरात्मनश्चैकरसत्वादुक्त-कर्मनामवत्त्वं ब्रह्मण्यनुपपन्नमित्याशङ्क्याह **समान** इत्यादि । **चो**ऽप्यर्थे, एवं चैवमपि चक्षुःश्रोत्रादीनां नामकर्मणोर्वैलक्षण्येपि, **समानः** एकरूप एव, न तु विषमः । कुतः । **अभेदात्** । न हि कटककुण्डलाद्याकारभेदे तत्तत्कार्यभेदे वा सुवर्णमन्यद्भवति । ग्राहकैः सुवर्णत्वेन ग्रहणात् । किंच, ब्रह्म ह्युपनिषद्वेद्यम्, ताश्च 'प्राणन्नेव प्राणो भवती'त्यादिरूपाः प्रतिनियतेन्द्रियग्राह्यानर्थान् स्वरूपेणैव गृह्णद्ब्रह्म तत्तच्छब्दवाच्यं भवतीतिवदन्ति, तद्वाच्यता च व्यवहार्यत्वे, व्यवहारश्च 'तदेतत्प्रेयः पुत्रा'दित्यादिवाक्यैकवाक्यतया निरुपधिप्रेमव-तामाविर्भूतेऽवताररूप एव संभवतीति तादृशैर्भगवद्विग्रहे तत्तदवयवेषु यथा यथा व्यव-ह्रियते, तथा तथा व्यवह्रियमाणं तदेकमखण्डसच्चिदानन्दरूपं ब्रह्मैवेति न काचिदनुपपत्ति-रित्यर्थः । तेनानाविर्भूतरूप इवाविर्भूतरूपेऽपि ब्रह्मणि व्यापकत्वैकरसत्वाखण्डसच्चिदा-नन्दत्वादयः स्वरूपधर्मा उपसंहार्याः । ब्रह्मणो विरुद्धधर्माश्रयत्वस्य प्रागेव साधितत्वादिति स्थितम् ॥ १९ ॥

**संबन्धादेवमन्यत्रापि** ॥ २० ॥

साक्षादाविर्भूते पूर्णधर्माणामुपसंहारमुक्त्वा, किञ्चित्कार्यचिकीर्षया यथेन्द्र आविष्टः, तथा क्वचिज्जीवे स्वयमाविशति, तत्र केषांचिद्धर्माणां भाने, तत्रोपासकेनाखिलब्रह्मधर्मोप-संहारः कार्यो न वेतिशङ्कायां विकल्पेन समाधानं सूत्राभ्यां वदन्नादौ विधिपक्षमाह **संबन्धादि**त्यादि । **अन्यत्रापि,** भगवदाविष्टे जीवेपि, **एवम्,** भगवतीव सर्वधर्मानु-पसंहार्योपासना कार्या । तत्र हेतुः **संबन्धा**दिति, अयोगोलके वह्नेरिव तस्मिन्ब्रह्मण आवे-शलक्षणात्संबन्धात् । तथा च यो जीवोऽत्राविष्टं भगवन्तमहमुपास इति जानाति, यश्च तं ब्रह्मत्वेनोपास्ते, तस्योपासना न जीवगामिनीति तत्रोपसंहारः कार्यः । 'तद्धैतान् भूत्वावती'ति श्रुतेर्गुर्वादौ जीवबुद्धिनिषेधाच्च तत्फलदानार्थं तत्र तेन रूपेण भगवत आवेशादिति । अय-मेव न्यायः प्रतिमायामपि वाच्यः ॥ २० ॥

**न वाविशेषात्** ॥ २१ ॥

यस्त्वन्तरङ्गं हृद्याविर्भूतभगवत्कं ज्ञात्वा, एतद्भजनेनाहं भगवन्तं प्राप्स्यामीति ज्ञात्वा तमेव भजते, स प्रेमविश्वासयोरुत्कर्षात् भक्तिमार्गीय इति भक्तहृद्याविर्भूतेऽपि रूपे तेनोपसं-हारो धर्माणां न कार्य इति निषेधपक्षमाह **नवे**त्यादि । न कार्यस्तेनोपसंहारः । तत्र हेतुः

**अविशेषा**दिति, भक्तभक्तस्य तद्भजने रसास्वादनेन विस्मृततदाविष्टभगवत्कतया तदाविष्टे भगवद्रूपे गुणानामुपसंहारेऽनुपसंहारे वा विशेषाभावादित्यर्थः । विशेषादिति पदच्छेदे तु, नीरसोपासनापेक्षया भक्तिमार्गीयोपासनायां रसास्वादविशेषादित्यर्थः ॥ २१ ॥

**दर्शयति च ॥ २२ ॥**

अनुपसंहार एव हेत्वन्तरमाह **दर्शयती**ति । दृढविश्वासवते भक्तभक्ताय तु तद्भजनीये भक्त एवालौकिकाननुभावान् भगवान् दर्शयतीति तत्र सन्निधाननिश्चये जाते तत्साधनभूतोपसंहारापेक्षैव नास्तीत्यर्थः ॥ २२ ॥

**संभृतिद्युव्याप्त्यपि चातः ॥ २३ ॥**

ननु भक्तभक्तः स्वसेव्येऽत्यलौकिकं वीर्यं दृष्ट्वा तदाविष्टे भगवति वीर्यसंभारकत्वादेरुपसंहारं करिष्यतीत्याह **संभृती**त्यादि । राणायनीयानां खिलेषु पठ्यते । 'ब्रह्मज्येष्ठा वीर्या संभृतानि ब्रह्माग्रे ज्येष्ठं दिवमाततान, ब्रह्म भूतानां प्रथमं तु जज्ञे तेनार्हति ब्रह्मणा स्पर्द्धितुं क' इति । ज्येष्ठा वीर्या इत्यत्र बहुवचनस्य डादेशः । तथा च, ब्रह्म ज्येष्ठं मुख्यं येषां तादृशानि वीर्याणि ब्रह्मणा संभृतानि, सम्यगन्यनैरपेक्ष्येण स्वत एव धृतानि । किंच, ज्येष्ठं ब्रह्माग्रे देवादिजननात्पूर्वमेव, दिवमाततान, द्युलोकं व्याप्तवत् । किंच, भूतानामाकाशादीनामुत्पत्तेः प्रथममेव तु ब्रह्म जज्ञे आविर्बभूव । तेनैतादृशमहिमवत्त्वेन, ब्रह्मणा साकं स्पर्द्धितुं कोऽर्हतीत्यर्थः । अनेन पादेनाविर्भूतस्वरूपमेवात्रोच्यत इति ज्ञाप्यते । सूत्रार्थस्तु, संभृतिश्च द्युव्याप्तिश्च तयोः समाहारः संभृतिद्युव्याप्ति, एतदपि, अतः पूर्वसूत्रोक्ताद्विशेषाद्धेतोः नोपसंहार इत्यनुवर्तते । चकारेण दर्शनस्य समुच्चयः । तथा चोक्तविधाय भक्तभक्तायानुभावान् दर्शयति, भजनरसं चानुभावयतीति, तस्यैहिकपारलौकिकापेक्षाभावान्नैतदुपसंहारोपि तस्यावश्यक इत्यर्थः ॥ २३ ॥ इति तृतीयं कार्याख्यानादित्यधिकरणम् ॥ ३ ॥

**पुरुषविद्यायामिव चेतरेषामनाम्नानात् ॥ २४ ॥ ( ३-३-४. )**

तैत्तिरीयारण्यके पुरुषसूक्ते, सहस्रशीर्षपुरुषविद्योच्यते । तत्रैव ब्रह्मवित्प्रपाठके 'स वा एष पुरुषोऽन्नमय' इत्यारभ्य, प्राणमयमनोमयविज्ञानमयानन्दमयात्मकं ब्रह्मस्वरूपं निरूप्यते, 'स वा एष पुरुषविध एवे'ति च पठ्यते । तत्र पुरुषसूक्तेऽन्नमयादिषु च पुरुषपदश्रवणाद्भवति संशयः । किमन्नमयादिषु सहस्रशीर्षत्वाद्युपसंहारो भवति नवेति । तत्र सर्वत्र ब्रह्मण एवोपास्यत्वादत्राप्युपासनोक्तेर्ब्रह्मत्वपुरुषत्वयोरविशेषेण वेद्यैक्ये विद्यैक्यात्कर्तव्य उपसंहार इति प्राप्ते, आह **पुरुषविद्याया**मित्यादि । अन्नमयादिषु चतुर्षु सहस्रशीर्षत्वादिकं नोपसंहार्यम्, कुतः । पुरुषविद्यायां पुरुषस्वरूपं निरूप्यते तथा, इतरेषामन्नमयादीनां चतुर्णां स्वरूपस्यान्नमयादिप्रकरणेऽनाम्नानादकथनात् । पुरुषविद्यायां पुरुष इत्युच्यते, मुक्तिदातृत्वं

महामहिमत्वेन ज्यायस्त्वं च । तत्प्रकरणे तु न तथोच्यते, पुरुषविधमेवोच्यते । अतस्तेषां विभूतिस्वरूपत्वान्न सहस्रशीर्षत्वादीनां मूलगुणानामुपसंहार इत्यर्थः ॥ २४ ॥ इति चतुर्थं पुरुषविद्यायामित्यधिकरणम् ॥ ४ ॥

**वेधाद्यर्थभेदात्** ॥ २५ ॥ ( ३-३-५. )

निर्दोषत्वज्ञानपूर्वकं भजनं कर्तव्यमित्येतदर्थमधिकरणान्तरमाह **वेधे**त्यादि । बृहदारण्यके उद्गीथब्राह्मणे 'द्वया ह प्राजापत्या' इत्युपक्रम्य, देवासुराणां मिथः स्पर्द्धामुक्त्वा, 'ते ह देवा ऊचुर्हन्तसुरान्यज्ञ उद्गीथेनात्ययामे'त्यादिना वागादीनामुद्गातृत्वेन वरणे तेषामसुरकृतपाप्मवेधमुक्त्वोच्यते । अथैनमासन्यं प्राणमूचुस्त्वं न उद्गायेति, तथेति, तेभ्य एष प्राण उदगायत्, ते विदुरनेन वै न उद्गात्रात्येष्यन्तीति, तमभिद्रुत्य, पाप्मना अविध्यन्, स यथाश्मानमृत्वा लोष्ठो विध्वंसेतैवऽह वै विध्वंसमाना विष्वञ्चो विनेशु'रिति । छान्दोग्येऽप्येवम् । एतावान्परं विशेषो यद्वाजिनामासन्यस्योद्गातृत्वम्, छन्दोगानामुद्गीथत्वेनोपास्यत्वमिति । तत्र देहसंबन्धित्वोद्गातृत्वोपास्यत्वानां सर्वत्र तौल्येऽपि वागादिषु पाप्मवेधः, आसन्ये प्राणे कुतो नेति भवति संशयः । तत्रासन्योपासनाया अत्र विधेयत्वात् तदुत्कर्षबोधनाय वागादिषु पाप्मवेधोक्तिः, वस्तुतस्तु सर्वे तुल्याः, यथा 'गोऽश्वा एव पशवोऽन्ये त्वपशव' इत्यत्र, यदि चैवमसदर्थबोधने वेदस्य प्रतारकत्वापत्तिराशङ्क्यते, तदा तु पाप्मवेध हेतोरशक्यवचनत्वात्संशय एव पर्यवस्यतीति प्राप्ते, आह **वेधादी**त्यादि । वाक्प्राणादिषु यः पाप्मवेधो दुष्टविषयसंबधन्श्च, वेधादि, तत्, अर्थभेदात्, अर्थो वस्तु ब्रह्म, ततो भेदात् । सर्ववेदान्तप्रत्ययन्यायेन सर्वत्र ब्रह्मण एवोपास्यत्वादत्रासन्यस्तदभिन्नत्वादेव छान्दोग्य उपास्यत्वेनोच्यते, अत एवापहतपाप्मत्वं छन्दोगैरुच्यते । अपहतपाप्मत्वं च ब्रह्मण एवासाधारणो धर्मः अन्तस्तद्धर्माधिकरणे सिद्धः, स भगवद्त्तो मुख्यविभूतिरूपे तस्मिन्नपि तिष्ठतीति, न तस्य पाप्मवेधः, न वा दुष्टविषयसंबन्ध इति सुखेन तद्धेतुनिर्णय इत्यर्थः । एतेन यद्विभूतिरूपस्यासन्यस्य निर्दोषत्वज्ञाने ज्ञातुस्तथात्वं भवति, तत्र भगवतस्तथात्वज्ञाने निर्दोषो भवतीत्यत्र किं वाच्यम्, तथा, भगवति ये दोषत्वेन मोहव्रणपलायनाद्याः, तेपि गुणत्वेनैव ज्ञेयाः । 'अज्ञत्वं पारवश्यं च विधिभेदादिकं तथा । तथा प्राकृतदेहत्वं देहत्यागादिकं तथा । असुराणां विमोहार्थं दोषा विष्णोर्नहि क्वचि'दिति ब्रह्माण्डवाक्यादिति । तेन निर्दोषत्वं ज्ञात्वा भजनीयमिति सिद्धम् ॥ २५ ॥

**हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दःस्तुत्युपगानवत्तदुक्तम्** ॥ २६ ॥

एवं भगवत्संबन्धाभावे दोषसंबन्धमुक्त्वा, गुणहानिमपि वदन् भगवत्संबन्धे गुणप्राप्तिरूपं विशेषमाह **हाना**वित्यादि । 'यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिम्, तदा विद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैती'ति मुण्डके पठ्यते । अर्थस्तु, पश्यः

द्रष्टा जीवः एतादृशमीशं पश्यते, तदा विद्वान् ब्रह्मज्ञानवान् सन्, पुण्यपापेऽविद्याकार्ये विधूय, ज्ञानेन निवार्य निरञ्जनः अविद्यारहितः सन्, परमं ब्रह्म उपैति प्राप्नोति । तदनन्तरं साम्यं ब्रह्मतौल्यमुपैतीति । तत्र 'न तत्समश्चाभ्यधिकश्च दृश्यते' इति श्रुत्यन्तरे ब्रह्मसाम्यस्य निषेधात् परमं साम्यं तु न भवत्येवेति ज्ञापनाय सूत्रे तुरुक्तः । किन्तु 'समो मशकेन समो नागेने'ति यत्किञ्चित् साम्यं श्राव्यते, तदस्य द्रष्टुर्ब्रह्मप्राप्त्यनन्तरं कैर्धर्मैर्भवतीत्याकाङ्क्षायामाह **हाना**वित्यादि । **हानौ**, ओहाक्त्यागे, ब्रह्मणः सकाशाज्जीवस्य विभागो हानिर्विभागस्य पूर्वस्थितित्यागरूपत्वात्, तस्यां हानौ सत्याम्, ये धर्मा जीवनिष्ठा आनन्दैश्वर्यादयो भगवदिच्छया जीवात्तिरोहिताः, ते भगवत्संबन्धे सति पुनराविर्भवन्ति, तैरेव साम्यम्, न तु स्वारसिकम् । तत्र हेतुः । **उपायनशब्दशेषत्वा**दिति, श्रुतौ, उपैतीति य उपायनशब्दस्तच्छेषत्वात्साम्यस्य, कारकाणां क्रियाशेषत्वादिति । ननु आनन्दादीनां ब्रह्मधर्मत्वात्तैस्तत्साम्यकथनं तदभेदमेवावगमयिष्यतीत्याशङ्क्य तद्धर्ममात्रसाम्यस्य न तदभेदसाधकत्वमित्येतदाह दृष्टान्तमुखेन । **कुशाछन्दःस्तुत्युपगानव**दिति । कुशा औदुंबर्यः समिधः तत्संबन्धि यत् छन्दःस्तुत्युपगानम्, उपगीयतेऽनेनेत्युपगानं तत्साधनं तद्वत्, ज्योतिष्टोमादियागेषु कुशाः प्रस्तोत्रा स्थाप्यन्ते, त'त्राभि त्वा शूर नो नुमो दुग्धा इव धेनव' इत्यस्यामृचि ये वर्णास्तेषामच एवोपसंहृत्य भकारेण गानं क्रियत इति, तदार्चिकवर्णधर्माणामचामुपसंहारो भकारे कृत इति किं भकारस्य तदृगात्मकत्वं संभवति, अपि तु न भवति, तथा प्रकृतेऽपि न धर्ममात्रप्राकट्येन जीवस्य तदात्मकत्वं संभवति । ननु तत्त्वमस्यादिवाक्ये जीवे ब्रह्माभेदबोधनादस्त्वभेद इत्याशङ्कायामाह **तदुक्त**मिति । जीवे ब्रह्माभेदबोधनस्य तात्पर्यं तु तद्गुणसारसूत्रेणैवोक्तम् । तथा च भगवत्संबन्धाभावे गुणानामपि हानिरित्यर्थः । न चोपसंहारप्रकरण एतस्य कुतः स्मरणमिति शङ्क्यम् । यथा पञ्चाग्न्यादिविद्यासु शाखान्तरीया अग्न्यादय उपसंह्रियन्ते, एवं ब्रह्मधर्मा अनया श्रुत्या जीवे बोध्यन्त इत्यभेदोऽप्युपसंहार्य इत्याशङ्कानिरासाय स्मरणादिति ॥ २६ ॥ इति पञ्चमं वेधाद्यधिकरणम् ॥ ५ ॥

**संपराये तर्तव्याभावात्तथाह्यन्ये ॥ २७ ॥ ( ३-३-६. )**

पूर्वाधिकरणे जीवस्य भगवत्संबन्धे विशेषमुक्त्वा, भगवत्संबन्धसाधनयोर्ज्ञानभक्त्योर्मध्ये किं ज्याय इति विचारायाधिकरणं प्रणयति **संपराये**त्यादि । बृहदारण्यके शारीरब्राह्मणे 'मनसैवानुद्रष्टव्य'मिति दर्शनसाधनमुक्त्वा, 'विरजः पर आकाशा'दित्यादिना विरजत्वादीन् धर्मानुक्त्वा, 'स एष नेति नेती'त्युपक्रम्य 'न सज्जते न व्यथत' इत्यन्तेन ब्रह्मस्वरूपमुक्त्वा, यत एतादृग्ब्रह्म, अतस्तद्विदपि साध्वसाधुकर्मरहित इति तन्माहात्म्यमुक्त्वा, अन्ते पठ्यते 'सर्वपाप्मानं तरति नैनं पाप्मा तरति य एवं वेदे'ति । तेन ज्ञानस्य संसारमुक्तिहेतुत्वात्पापतारकत्वरूपं माहात्म्यमुक्तं भवति । गोपालतापनीये च 'परं ब्रह्मैतद्यो धारयती'त्युपक्रम्य 'भजति सोऽमृतो भवती'ति मुक्तिहेतुत्वमुच्यते । एवं ज्ञानभक्त्योर्मु-

क्तिहेतुत्वे समानेऽपि ज्ञाने 'पाप्मानं तरती'ति वचनात् ज्ञानदशायां पापसत्ता प्राप्यते, तथा भक्तिदशायामपि, अस्ति न वेति संशयः । तत्र पूर्वप्रारब्धस्य ज्ञानेन नाशे मुक्तिरिति शास्त्रार्थे सिद्धे, भक्त्यापि प्रारब्धनाशादेव मुक्तिरिति प्राप्तम्, तत्राह **संपराय** इत्यादि । **संपरायः** परलोकस्तस्मिन्प्राप्तव्ये सति, **तर्तव्याभावात्**, 'जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः, नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इत्यादिवाक्यैर्मुक्तोपसृप्यव्यपदेशादितिसूत्राच्च पापनाशानन्तरमेव भक्तिसंभवेन भक्तौ तर्तव्यस्य पापस्याभावात् तया पुरुषोत्तमज्ञानद्वारा साक्षादेव मुक्तिरिति ज्ञातव्यम् । ननु तर्तव्यलिङ्गकायां श्रुतौ 'य एवं वेद' इति सामान्यवचनात् तत्रापि पापं संभाव्यत इति चेत्, तत्राह **तथा ह्यन्ये** इति । **तथा** ज्ञानानन्तरमपि पापवन्तो**ऽन्ये,** भक्तिमार्गीयेभ्यो भिन्नाः । ननु अत्र किं गमकम्, अत आह **हीति,** यतो हेतोः उक्तवाक्यैर्भक्तेः प्रागेव पापनिवृत्तिर्बोध्यते । अतस्तथेत्यर्थः ॥२७॥

**छन्दत उभयाविरोधात् ॥ २८ ॥**

ननु भक्तिमार्गीयाणामपि गोपस्त्रीणां 'दुःसहप्रेष्ठविरहतीव्रतापधुताशुभाः, ध्यानाप्राप्ताच्युताश्लेषनिर्वृत्या क्षीणमङ्गलाः' इति वचनेन सुकृतदुष्कृतयोर्हानिरपि कथ्यते इति पूर्वोक्तवचनैर्विरोध इति नैकतरनिर्णय इति शङ्कायामाह **छन्दत** इत्यादि । छन्द इच्छा, भगवदिच्छातः उभयाविरोधात्, भक्तेः पूर्वं पापनाशनिरूपकं भक्त्यनन्तरं तन्निरूपकं च यद्वाक्यं तयोरविरोधात्, भगवता तद्विजातीयभाववतीनामन्यासामुत्कर्षज्ञापनाय तासु पापादेः स्थापनाददोष इत्यर्थः । तेन भक्तेः पूर्वं तन्नाश औत्सर्गिकः, स क्वचिद्विशेषेच्छयापनोद्यत इति ज्ञापितम् ॥ २८ ॥ इति षष्ठं सम्परायाधिकरणम् ॥ ६ ॥

**गतेरर्थवत्त्वमुभयथान्यथा हि विरोधः ॥ ॥ २९ ॥** ( ३-३-७. )

ननु 'ब्रह्मविदोप्नोति परम्' 'तमेवं विद्वानमृत इह भवति' 'नान्यः पन्था विद्यतेऽयनाय' इत्यादौ ब्रह्मज्ञाने सत्येव मोक्षः श्राव्यते, 'यमेवैष वृणुते तेन लभ्यः' इत्यत्र तु वरणे सति आत्मलाभरूपो मोक्षः श्राव्यते, वरणं च स्वीयत्वेनाङ्गीकारात्मकं भक्तिमार्गे भवतीति भक्तौ सत्यां तत्सिध्यतीति भक्तेः समुच्चयो विकल्पो वेतिसंशये, एकादशस्कन्धीये 'मत्कामा रमणं जारं मत्स्वरूपाविदोऽबलाः, ब्रह्म मां परमं प्रापुः संगाच्छतसहस्रश' इति भगवद्वाक्येऽविहितासक्त्या बोध्यत इति श्रुत्योः परस्य च विरोधात् भगवद्वाक्यस्य तदुभयविरुद्धत्वात् नैकतरनिर्णय इति प्राप्ते, आह **गते**रित्यादि । **गते**र्ज्ञानस्य, **अर्थवत्त्वं** प्रयोजनवत्त्व**मुभयथा,** मर्यादापुष्ट्याख्यमार्गद्वयेन । 'एष उ एव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषती'त्यादिश्रुतिभ्यो भगवान् सृष्टिपूर्वकाल एव, एतेनैतत् कारयित्वैतत्फलं दास्यामीति विचारितवान्, अतस्तथैव तेषां मुक्तिः, तत्र पूर्ववाक्योक्तरीत्या मुक्तिसाधनाननुगमेऽप्यनुगमहेतुरवश्यं वाच्यः । अन्यथा संदेहानपायान्मुमुक्षुप्रवृत्तिव्याघातापत्तेः । अतस्त-

दभावाय पुष्टिमर्यादारूपमार्गद्वयं हेतुत्वेन वक्तव्यम्, तत्र शास्त्रविहितज्ञानभक्तिसाधनेन मुक्तिर्मर्यादा, तद्रहितानामपि कृपया तद्दानं पुष्टिः । इदं च 'लोकवत्तु लीलाकैवल्य'मिति न्यायात् सिद्धम् । अतो यं जीवं यस्मिन्मार्गेऽङ्गीकरोति, तं तत्र प्रवर्तयित्वा तद्रीत्या तस्मै तत्फलं प्रयच्छतीनां नानुगमदोषः, न वा मुमुक्षुप्रवृत्तिव्याघातः । अधिकारभेदादेव व्यवस्थितिसौकर्यात् । अत्रार्थापत्तिं प्रमाणयति **अन्यथा हि विरोध** इति । हि यतो हेतोः अन्यथा मर्यादापुष्टिमार्गभेदेन व्यवस्थाया अकथने विरोधः पूर्वोक्तश्रुतिस्मृतीनामापतेत् । अतस्तदभावान्यथानुपपत्त्या एवमङ्गीकार्यमित्यर्थः ॥ २९ ॥ इति सप्तमं गतेरर्थवत्त्वमित्याधिकरणम् ॥ ७ ॥

**उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥** ( ३-३-८. )

ननु 'तमेवं विद्वानमृत इह भवति' 'भजति सोऽमृतो भवति' इति च सर्वत्र मुक्तेरेव फलत्वमुच्यते, तथा, 'भक्तिरहस्यभजनं तदिहामुत्रोपाधिनैराश्येनामुष्यात्मनः कल्पनमेतदेव च नैष्कर्म्य'मित्युच्यते तापनीये । अत्र भक्तिशब्दाच्छान्दसः सोर्लुक्, रहस्यभजनमित्यस्य विवरणं तदिहेत्यादि । अर्थस्तु, तत् भजनम्, **अमुष्य** एतदीयस्य जीवस्य, इहामुत्रोपाधिनैराश्येनैव, ऐहिकामुष्मिकयावत्फलेप्साराहित्येन कल्पनम्, तदीयत्वसमर्थनम्, अन्तर्बहिः सेवया तदीयत्वदृढीकरणमेव, एतदेव च नैष्कर्म्यं सन्यास इति । अन्ये तु 'भक्तिरस्य भजनम्, तदिहामुत्रोपाधिनैराश्येनामुष्मिन्मनःकल्पन'मिति पठन्ति । अमुष्मिन् कृष्णाख्ये ब्रह्मणि मनसः संकलनं प्रेरणा तन्मयत्वमिति चार्थं वदन्ति । एवं पाठद्वये यावत्फलनैराश्यस्य प्रविष्टत्वादामुत्रिकमध्ये मुक्तेरपि प्रवेशात्तदनपेक्षत्वं समानम् । एतदत्र विचार्यते । भजनमात्रस्य मुक्तिरेव फलं ज्ञानवत्, उत निरपेक्षभजने भजनीयत्वेन भगवत्स्वरूपलाभः फलम्, मुक्त्यपेक्षायां तु मुक्तिः फलमिति विभागः । यदि च विभागः, तदापि किं मुमुक्षुभक्तो ज्यायान्, अनपेक्षो वा, द्वावपि समौ वेति । एवं संशये, मुक्तेः सर्वोत्कृष्टत्वस्य प्रसिद्धत्वात्, अत्रापि भजनेन मोक्षस्यैव फलत्वेनोक्तत्वात्, निरपेक्षभजनेऽपि स एव फलमिति युक्तम् । यदि च भगवत्स्वरूपस्य स्वतंत्रपुरुषार्थत्वमनुभूय भजत'स्तं यथा यथोपासते तथैव भवति तद्धैतान् भूत्वावती'ति श्रुतेः 'ये यथा मां प्रपद्यन्ते तांस्तथैव भजाम्यहम्' इति भगवद्वाक्याच्च तदेव स्वरूपं भजनीयत्वेन फलमिति विभागो विभाव्यते, तदापि द्वयोर्भक्तयोः श्रौतत्वस्य भगवत्संबन्धित्वस्य चाविशिष्टत्वादुभयोः समत्वमेवायाति । अथानपेक्षया कश्चित् विशेषो विभाव्यते, तदा तु कतमो गरीयानिति निर्णयाभावात्संशय एव पर्यवस्यतीति प्राप्ते, अभिधीयते **उपपन्न** इत्यादि । मुमुक्षुभक्ताद्रहस्यभजनकर्ता अनपेक्ष एवोपपन्न आधिक्योपपत्तियुक्तः । तत्र हेतुः । **तल्लक्षणार्थो-**

**पलब्धेः**। भगवल्लक्षणो योऽर्थः स्वतंत्रपुरुषार्थरूपः, तस्योप समीपे लब्धेः स्वाधीनतया तस्य प्राप्तेरित्यर्थः। यद्यपि पुरुषोत्तमप्रवेशरूपायां मुक्तौ तदानन्दानुभवो भवति, तथापि भक्तौ यथा भवति, तथा न। इदं च 'भगवान्मुकुन्दो मुक्तिं ददाति कर्हिचित्स्म न भक्तियोग'मिति पञ्चमस्कन्धीयशुकवाक्यात्, 'दीयमानं न गृह्णन्ति विना मत्सेवनं जनाः' इति तृतीये कपिलवाक्यात्, 'नारायणपरा लोके न कुतश्चन बिभ्यति, स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन' इति षष्ठे शिववाक्याच्चावसीयते। अत्र दृष्टान्तमाह **लोकव**दिति। यथा स्वाधीनपतिका नायिका, तदवस्थाननुगुणं गृहवित्तादिकं दीयमानमपि नाङ्गीकरोति, तद्वदित्यर्थः। तस्मान्मुमुक्षुभक्तापेक्षया निरुपाधिभक्त एव गरीयानिति सिद्धम् ॥ ३० ॥ इत्यष्टममुपपन्नाधिकरणम् ॥ ८ ॥

**अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम्** ॥ ३१ ॥ ( ३-३-९. )

एवं पुष्टिभक्तेः स्वरूपं तादृशभक्तस्य स्वरूपं च निरूप्य मर्यादाभक्तिसाध्यायां मुक्तौ सर्वा भक्तयः संनिपतन्ति, किंवा प्रत्येकमेवेतरनिरपेक्षा मुक्तिं साधयन्तीति विचारयितुमाह **अनियम** इत्यादि। अथर्वणोपनिषत्सु गोपालतापनीये पठ्यते 'परं ब्रह्मैतद्यो धारयति रसति भजति ध्यायते प्रेमति शृणोति श्रावयत्युपदिशत्याचरति सोऽमृतो भवती'ति, प्रसिद्धपाठे तु 'ध्यायति रसति भजती'ति त्रयमुच्यते, तदाप्युपलक्षणविधया अन्या अन्यत्रोक्ता अपि समायान्ति। तत्र पूर्वोक्तरीतिके संशये, अत्र धारणादिध्यानादिसाधनकलापमुक्त्वा मुक्तिरूपफलकथनात्समुदितानामेव मुक्तिसाधकत्वम्, एवं पुराणोक्तासु नवधाभक्तिष्वपि द्रष्टव्यमिति प्राप्ते, आह **अनियम** इत्यादि। अनियमः सर्वासां समुदितानामेव फलसाधकत्वमिति नियमो नास्ति। अत्रोपपत्तिमाह **सर्वासामविरोध** इति। 'चिन्तयन् चेतसा कृष्णं मुक्तो भवति संसृते'रिति चिन्तनस्य तथात्वमुच्यते, 'पञ्चपदीं जपन्' इत्याद्युक्त्वा 'ब्रह्म संपद्यत' इत्यनेन च कीर्तनमात्रस्य तथात्वम्। अतः प्रत्येकपक्ष एव श्रुतीनां सर्वासामविरोधः स्यात्। अतः 'परं ब्रह्मैतद्यो धारयती'त्यादिके वाक्येऽपि 'सोऽमृतो भवती'ति प्रत्येकमभिसंबन्धं काङ्क्षतीति ज्ञेयम्। ननु यथा दण्डादीनां कारणत्वेऽपि समुदितानामेव कारणत्वं तथात्राङ्गीकार किं मानम्, अत आह **शब्दानुमानाभ्या**मिति। श्रुती तु प्रागेवोक्ते, 'केवलेन हि भावेने'त्युपक्रम्य 'सिद्धा मामीयुरंजसे'ति, 'एतावान् सांख्ययोगाभ्या'मित्युपक्रम्य 'अन्ते नारायणस्मृति'रिति स्मृती च, एताभ्यां श्रुतिस्मृतिभ्यां तथा, लौकिकप्रमाणापेक्षया अलौकिकस्य बलिष्ठत्वादित्यर्थः ॥ ३१ ॥ इति नवममनियमाधिकरणम् ॥ ९ ॥

**यावदधिकारमवस्थितिराधिकारिकाणाम्** ॥ ३२ ॥ ( ३-३-१०. )

पूर्वं मुमुक्षुभिः क्रियमाणानां भगवद्धर्माणां मुक्तिसाधनत्वप्रकारो विचारितः। इदानीं यान् धर्मानैश्वर्यादीन् स्वविचारितकार्यकरणार्थं दत्त्वा तत्कार्यं येन जीवेन कारयति, स

जीवस्तैरेव धर्मैर्मुक्तिमपि प्राप्नोति, न वेति संशये, जीवकृतभगवद्विषयकधर्माणां यत्र मुक्तिसाधकत्वम्, तत्र तेषां सुतरां तत्साधकत्वमिति कैमुतिकादायाति, मुक्तिसाधकत्वेनाविहितत्वान्न तथात्वमित्यप्यायातीति संदेह एव पर्यवसानमित्यत आह **याव**दित्यादि । यस्मिञ्जीवे यत्कार्यसाधनार्थं योऽधिकारो यथा भगवता दत्तः, तत्कार्यसाधनक्षमा ये भगवद्दत्ता धर्माः, यथा 'यदादित्यगतं तेज' इत्यादि, यथा च प्रतर्दनाख्यायिकायामिन्द्रे त्वाष्ट्रहन्तृत्वादयः, तेऽधिकारसंबन्धित्वादाधिकारिका इत्युच्यन्ते । तेषां तत्कार्यसंपत्तिरेव प्रयोजनमिति यावदधिकारं तेषां तस्मिन्नवस्थितिः । तथा च तत्कार्यसंपत्तावधिकारनिवृत्त्या तेषामपि निवृत्तेर्न तेषां मुक्तिपर्यन्तो व्यापारः । ये पुनः सप्तर्षिप्रभृतयः, तेषां कल्पान्तपर्यन्तोऽधिकार इति, 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे, परस्यान्ते कृतात्मानः प्रविशन्ति परं पद'मिति वाक्यं तद्विषयम्, तेषामपि 'कृतात्मान' इति विशेषणाद्भगवति कृतचित्तत्वादेव मुक्तिः, नत्वाधिकारिकगुणैरित्यर्थः ॥३२॥ इति दशममाधिकारिकाधिकरणम् ॥१०॥

**अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम् ॥ ३३ ॥**

( ३-३-११. )

अथर्वोपनिषत्सु 'भजति सोऽमृतो भवती'ति भक्तेर्मुक्तिसाधनत्वं श्राव्यते, श्रुत्यन्तरे तु 'तमेव विदित्वा अति मृत्युमेति, नान्यः पन्था विद्यतेऽयनाय' इत्यादौ तु ज्ञानस्य । तत्र कस्य गुणभावः, कस्य मुख्यतेति संशये, श्रुतित्वाविशेषादुभयोः कारणत्वे हेत्वनुबद्धस्य कार्यवैजात्यस्यापातान्मुक्तौ च तदसंभवा'द्भक्त्या मामभिजानाती'ति भगवद्वाक्ये भक्त्या ज्ञानसंभवकथनेन भक्तेर्ज्ञानं जनयित्वोपक्षयाज्ज्ञानेनैव मुक्तिरितिप्राप्तम् । तत्राह **अक्षरे**त्यादि । तुः पूर्वपक्षनिरासे, **अक्षरधियाम्**, 'एतद्वैतदक्षरं गार्गि अस्थूलमनणु', 'अथ परा यया तदक्षरमधिगम्यते यत्तदद्रश्यमग्राह्यम्' इत्याद्युक्तानामक्षरविषयकज्ञानानाम्, **अवरोधो** मुक्तिसाधने प्रवेशः गणनं सः **सामान्यतद्भावाभ्याम्**, पुरुषोत्तमसंबन्धिसंबन्धे मुक्तिरिति पुरुषोत्तमसंबन्धिसंबन्धित्वं सामान्यम्, तद्भावो ब्रह्मभावः, ताभ्यां हेतुभ्याम् । अयमर्थः । 'ब्रह्मविदाप्नोति पर'मित्यत्राक्षरविदः परप्राप्तिः फलत्वेनोच्यते । परश्च पुरुषोत्तम एव, 'अक्षरात्परतः पर' इत्यस्याः श्रुतेः 'अक्षरादपि चोत्तमः' इति गीतावाक्येनोपबृंहणात् भगवानेव पर इति तत्प्राप्तिरेव परममुक्तिः । 'अव्यक्तोऽक्षर इत्युक्तस्तमाहुः परमां गतिम्, यं प्राप्य न निवर्तन्ते तद्धाम परमं मम' इति गीतावाक्यादक्षरं तद्धामत्वात्तत्संबन्धि, तद्विषयकं ज्ञानं च पुरुषोत्तमसंबन्धिसंबन्धि । किंच, भक्तिस्तावद्ब्रह्मभावोत्तरं भवतीति गीतायामुक्तम् । 'ब्रह्मभूतः प्रसन्नात्मा न शोचति न कांक्षति, समः सर्वेषु भूतेषु मद्भक्तिं लभते पराम्' इति । ब्रह्मभावश्चाक्षरज्ञानेनाविद्यानाशे सति भवति । तथा च पुरुषोत्तमज्ञानव्यापारकभगवत्प्राप्तिरूपमुक्तिकरणभूतायां स्वरूपयोग्यतामक्षरज्ञानानि संपादयन्तीति मुक्तिपूर्व-

कक्षाविश्रान्तत्वान्मुक्तिसाधनेषु तदवरोधा'द्भक्त्या मामभिजानाती'ति पुरुषोत्तमज्ञानमादाय पूर्वपक्षोऽसंगत इति । नन्वक्षरस्याविशिष्टत्वात्तदुपासकानां मध्ये केषांचिदक्षर एव लयः, केषांचित् गीतोक्तरीत्या भक्तिलाभ इति फलवैजात्यं कथमुपपद्यत इत्याशङ्क्य तत्र हेतुं दृष्टान्तेनाह **औपसदवदिति** । उपसद इदमौपसदं तद्वत्, उपसदाख्ये कर्मणि ध्रौवाज्या-त्सुचिचतुरवत्तं चमसे वा पंचावत्तं यदाज्यं तत्तानूनप्त्रमित्युच्यते, 'अनाधृष्टमस्यनाधृष्य'मिति मन्त्रेण 'षोडशर्त्विजोऽनु मे दीक्षा'मिति मन्त्रेण यजमानश्च समवस्पृशन्ति तत् तानूनप्त्रस्प-र्शाख्यं कर्मौपसदम्, तत्र विशेषः श्रुतौ कल्पे चोच्यते । 'तत्समवमृशन् यमृत्विजं कामयेतायं यज्ञयशसमृच्छेदिति तं प्रथममवमर्शये'दिति । अत्र सर्वेषामृत्विजां तानूनप्त्रित्वे समानेऽपि यस्मिन् यजमानस्य स्नेहातिशयेन यज्ञयशोदानेच्छा, तत्रैव तथाकृतिः, न सर्वेषु, तद्वत् । तथा च तत्र यथर्त्विजामविशिष्टत्वेऽपि यजमानेच्छा फलवैजात्यनियामिका, तथात्र भगवदिच्छेति तया तथेत्यर्थः । ननु श्रवणादीनां यथा पुरुषोत्तमसंबन्धित्वे तत्प्राप्तिहेतुत्वम्, तथाक्षर-स्याप्यस्त्विति शङ्कायां सा न कार्येत्येतदर्थं संमतिमाह **तदुक्त**मिति । भगवद्गीतासू-क्तम् । तत्र हि 'यदक्षरं वेदविदो वदन्ति' इत्यादिना 'स याति परमां गतिम्' इत्यन्ते-नाक्षरप्राप्त्युपायमुक्त्वा, 'अनन्यचेताः सततम्' इत्यादिना स्वप्राप्त्युपायं स्वस्य तद्वैल-क्षण्यं चोक्त्वा, स्वस्य भक्त्येकलभ्यत्वं स्वस्वरूपं च वक्तुं पूर्वं क्षराक्षरयोः स्वरूपं कथयन् 'यं प्राप्य न निवर्तन्ते तद्धाम परमं मम' इत्यनेनाक्षरस्य ज्ञानिमुक्तिस्थानत्वं स्वधामत्वं चोक्त्वा, 'पुरुष स परः पार्थ भक्त्या लभ्यस्त्वनन्यया, यस्यान्तःस्थानि भूतानि येन सर्वमिदं ततम्' इति भक्त्येकलभ्यत्वं परत्वं सर्वभूताधारत्वं सर्वविस्तारकत्वं च स्वस्यो-क्तवान् । अतः पुरुषोत्तमसंबन्धित्वमात्रं न तत्प्राप्तिहेतुतावच्छेदकम्, किन्तु तत्संबन्धिभक्ति-त्वम्, तच्चाक्षरे नास्तीत्यतस्तथा नेत्यर्थः ॥ ३३ ॥

**इयदामननात् ॥ ३४ ॥**

ननु संसारनिवृत्त्यानन्दाविर्भावयोरविशेषादक्षरब्रह्मणि लये पुरुषोत्तमप्रवेशान्न्यूनतोक्तौ को हेतुरित्यत आह **इयदित्यादि** । इयदित्यस्य परिमाणवचनस्य तैत्तिरीयोक्तायामानन्द-मीमांसायां मानुषानन्दमारभ्य शतानन्दिगणने 'स एको ब्रह्मण आनन्द' इति प्रजापत्यान-न्दादधिकतया **आमननात्** कथनात् । तथा च पुरुषोत्तमस्यानन्दमयत्वेन तदानन्दस्य च 'यतो वाचो निवर्तन्ते' इत्यनेन वाङ्मनसागोचरत्वश्रावणादक्षरानन्दस्य न्यूनत्वं तत उच्यत इत्यर्थः ॥ ३४ ॥ इत्येकादशमक्षरधियामित्यधिकरणम् ॥ ११ ॥

**अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥ (३-३-१२.)**

ननु ज्ञानमार्गे यथा स्वात्मत्वेन ब्रह्मणो ज्ञानम्, तथा भक्तिमार्गेऽपि भक्त्या पुरुषो-त्तमज्ञाने स्वात्मत्वेन पुरुषोत्तमज्ञानं भवति, नवेत्यक्षरस्मरणेनाभेदज्ञानस्मृत्या संशये, बृहदार-

ण्यके कहोडप्रश्ने, उषस्तप्रश्ने च यत्साक्षादपरोक्षाद्ब्रह्म 'य आत्मा सर्वान्तर' इति, एतदुत्तरवाक्ये च याज्ञवल्क्येन 'एष त आत्मा सर्वान्तर' इति कथनादन्तर्यामिब्राह्मणे च सर्वान्तरस्याप्यन्तरशब्दान्तरेणान्तःस्थापकत्वबोधनाज्जीवात्मान्तःस्थस्यापि जीवं व्याप्य वर्तमानत्वाद्येनकेनापि श्रौतेन साधनेन पुरुषोत्तमेऽभिज्ञायमाने स्वात्मनस्तद्व्याप्तत्वेन भेदास्फुरणात् स्वात्मत्वेन ज्ञानमदण्डवारितम्। अतस्तद्भवतीति प्राप्तम्। एवं प्राप्ते, आह **अन्तर**ेत्यादि। अन्तरेति मध्यवाचकमव्ययम्। भूतग्रामः संघातः शरीरात्मकः। तथा च स्वात्मनो भक्तस्य पुरुषोत्तमे यत्स्वात्मत्वेन ज्ञानं तत् संघातवद्भजनानन्दान्तरायभूतम्, अतो भक्ताय भजनं देदित्सिते भगवांस्तस्य तन्न करोतीति 'सर्वस्य वशी सर्वस्येशान' इत्यादिज्ञानमेव तस्य भवतीत्यर्थः॥ ३५॥

**अन्यथा अभेदानुपपत्तिरिति चेन्नोपदेशान्तरवत्॥ ३६॥**

ननु स्वात्मत्वेन पुरुषोत्तमज्ञानस्य भजनानन्दानुभवविरोधित्वेन जघन्यत्वे भक्तेषूद्धवादिषु भगवांस्तन्नोपदिशेत्, दृश्यते चोपदेश इत्यभेदज्ञानमेव मुख्यमिति भक्त्यपेक्षया ज्ञानमार्गस्योत्कर्ष इति सूत्रांशेनाशङ्क्य, अंशान्तरेण परिहरति **अन्यथे**त्यादि। **अन्यथा** भक्तिमार्गस्य ज्ञानमार्गादुत्कृष्टत्वे स्वात्मत्वेन भगवज्ज्ञानस्य च जघन्यत्वे भगवदुपदिश्यमानात्माभेदानुपपत्तिरिति चेत्, न, न तदनुपपत्तिः, **उपदेशान्तरवत्**। यथा हि स्वर्गापवर्गादिफलकालौकिककर्माधिकारसंपत्त्यर्थं गायत्र्युपदेशः क्रियते कर्ममार्गे प्रतिबन्धनिवारकः, यथा वा अज्ञस्य देहवतस्तद्भिन्नात्मोपदेशो ज्ञानमार्गे शरीरादौ प्रियत्वादिबुद्धिनिवृत्त्यर्थम्, तद्वदत्र भक्तिमार्गेऽपि सर्वेषामात्मनो ह्यात्मा 'य आत्मनि तिष्ठ'न्नित्यादिश्रुतिसिद्धस्यास्यात्मत्वेनोपदेशो जीवात्मनः स्वात्मन्यपि निरुपधिप्रियत्वबुद्धिनिवृत्त्यर्थं क्रियते। अतो न भक्तिनिकर्षः, नवा अभेदोपदेशानुपपत्तिरित्यर्थः॥ ३६॥

**व्यतिहारो विशिंषन्ति हीतरवत्॥ ३७॥**

नन्वैतरेयके आदित्यमण्डलान्तःस्थं पुरुषमुपक्रम्य 'तद्योऽहं सोऽसौ, योऽसौ सोऽहम्' इति, तैत्तिरीयके वाघमर्षणेप्सु विद्यमानं ब्रह्मज्योतिरुपक्रम्य, 'अहमस्मि ब्रह्माहमस्मि' इति ब्रह्मपदमुभयत्र संबध्यमानं स्वात्मब्रह्मणोरभेदं प्रकटयति, तथा लीलास्था अपि 'कृष्णोऽहमहं कृष्ण' इत्येवं वदन्तीति तेषां ज्ञानं श्रीभागवत उच्यते, अतः पूर्वोक्ताभेदज्ञानं भक्तावपि फलत्वेन मन्तव्यम्, अतः पूर्वोक्तमयुक्तमित्याशङ्कायां भक्तौ तत्स्वरूपबोधनायाह **व्यतिहार** इत्यादि। **व्यतिहारः** 'कृष्णोऽहम्' इत्याद्युक्तो विशेषणविशेष्यभावव्यत्ययः, **इतरवत्**, भक्ते रसात्मकत्वेन संयोगविप्रयोगात्मतया द्विविधत्वात्तत्र द्वितीयभावौत्कट्ये यथेतरे अश्रुप्रलापादयो व्यभिचारिभावा उत्पद्यन्ते, तद्वत् अतिविगाढभावेन तदभेदस्फूर्ति-

रप्युत्पद्यते, न तु सर्वदा सा तिष्ठति येन फलत्वं स्यात् । ननु कथमेतदवगम्यते, तत्राह **विशिंषन्ति हीति** । हि यतो हेतोः द्रष्टृत्वेनाश्वप्त्वादीवात्मानं भगवत्त्वेन कदाचिदेव विशिंषन्ति, न सर्वदा । अतस्तथेति न पूर्वोक्तमयुक्तमित्यर्थः ॥ इति द्वादशमन्तराभूतग्रामवदित्याधिकरणम् ॥ १२ ॥

**सैव हि सत्यादयः ॥ ३८ ॥ (३-३-१३.)**

पूर्वाधिकरणे ज्ञानापेक्षया फलतो भक्त्युत्कर्षः साधितः । अत्र साधनतस्तत्साधयति । तत्र प्राप्तभक्तेः पुरुषस्य सत्यशमदमादयः कार्यत्वेन विधेया न वेति संशये, सत्यादीनां फलोपकार्यन्तरङ्गसाधनत्वाच्छुद्धौ सत्यामेव चित्ते भगवत्प्रादुर्भावः संभवति, आवश्यकत्वाद्विधीयन्त इति प्राप्तम् । तत्र सिद्धान्तस्तु, तादृशस्य न ते विधीयन्ते । तत्र हेत्वपेक्षायामाह **सैवे**त्यादि । **हि** यतो हेतोः **सैव** भक्तिरेव सर्वसाधनरूपा, तस्यां सत्यां भक्तहृदि भगवदाविर्भावात्सत्यादयः स्वत एव भवन्ति, न विधिमपेक्षन्त इत्यर्थः ॥ ३८ ॥

**कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥**

पूर्वसूत्रे शास्त्रोक्ताखिलसाधनरूपत्वं भक्तेरुक्तम्, तद्दार्ढ्यार्थमधुना मुक्तिप्रतिबन्धकत्वेन हेयत्वेन चोक्तानां कामादीनामपि भगवत्संबन्धान्मुक्तिसाधनत्वमाह **कामादी**त्यादि । **इतरत्र**, माहात्म्यज्ञानयुताया ईश्वरत्वेन प्रभौ निरुपधिस्नेहरूपायाः शास्त्रप्राप्तत्वेन विहिताया भक्तेः सकाशाद्भिन्नायामविहितायां भक्तौ भगवद्विषयकं कामाद्येव मुक्तिसाधनम्, भगवति चित्तप्रवेशहेतुत्वात् । आदिपदात्पुत्रत्वसंबन्धित्वद्वेषादीनां संग्रहः । तेन भगवत्संबन्धमात्रस्य मुक्तिसाधकत्वमुक्तं भवति । **तत्र च** विहितभक्तावपि कामादिकं साधकम्, ईश्वरत्वेन ज्ञानेऽपि भर्तृत्वेन ज्ञाने कामस्य पुत्रत्वादिज्ञाने स्नेहस्यापि विलक्षणस्य संभवात् । अतो मुक्तिबाधकानामपि भक्तिमार्गे साधकत्वात् ज्ञानमार्गापेक्षया साधनविचारेऽपि भक्तिमार्ग उत्कृष्ट इति सिद्धमित्यर्थः ॥ ३९ ॥ इति त्रयोदशं सैव हीत्यधिकरणम् ॥ १३ ॥

**आदरादलोपः ॥ ४० ॥ (३-३-१४.)**

पूर्वं सात्त्विकानां वृतानामर्थे ज्ञानापेक्षया भक्तेरुत्कर्षः साधितः । इदानीं राजसानां वृतानामर्थे कर्मापेक्षया भक्तेरुत्कर्षः साधनीयः । तत्र नित्यानां वर्णाश्रमधर्माणां भगवद्धर्माणां च परिचर्यादीनामेककाले प्राप्तौ युगपदुभयोः करणासंभवादन्यतरबाधे प्राप्ते, स कस्य स्यात्, कस्य नेति संशये, कर्मणां स्वस्वकाले विहितानामकरणे प्रत्यवायश्रवणादितरत्र तदश्रवणादन्यदापि तत्कृतिसंभवेन सावकाशत्वाच्च परिचर्यादीनामेव बाधो युक्तः, नतु नित्यानां वर्णाश्रमधर्माणामिति प्राप्तम्, तत्र सिद्धान्तमाह **आदरादलोप** इति । तैत्तिरीयाणामारण्यके स्वाध्यायब्राह्मणे, 'ओमिति प्रतिपद्यत एतद्वै यजुस्त्रयीं विद्यां प्रति

एषा वागेतत्परममक्षरम्, तदेतदृचाभ्युक्तम्, ऋचोऽक्षरे परमे व्योमन् यस्मिन् देवा अधि विश्वे निषेदुः यस्तन्न वेद किमृचा करिष्यति, य इत्तद्विदुस्त इमे समासत' इति पठ्यते । अत्र, ऋक्संबन्धित्वेन वर्णात्मके वस्तुतस्तु परमव्योमात्मकं यदक्षरं ब्रह्म यस्मिन् देवाः प्राप्तफला अधिनिषेदुरिति सकलदेवनिषदनस्थानत्वाल्लोकात्मकम्, तदात्मके ॐकारे प्रतिपाद्यत्वेन स्वरूपेण च वर्तमानं 'यो वेद निहितं गुहायां परमे व्योम'न्निति श्रुत्यन्तरात् तल्लोकवेदप्रसिद्धं परं ब्रह्म यो न वेद स किमृचा करिष्यतीति तदज्ञाने वेदाध्ययनस्य निष्फलत्वमुच्यते । एवं सति भगवज्ज्ञानस्याभावे वेदोक्तकर्मणापि मुख्यफलाभावाद्वैयर्थ्यं तेषामप्यर्थादायाति । परब्रह्मज्ञानं च 'भक्त्या मामभिजानाति' इति वाक्यात् भक्त्यैवेति भक्ताः सन्तो ये पुरुषं विदुः, इदित्यवधारणे, त इमे गोकुलवैकुण्ठादिषु भगवन्निकटे समासते । सम्यक् सेवां कुर्वाणास्तिष्ठन्तीत्यर्थः । तथा चात्राविदो निन्दया विदां च सम्यगासनोक्त्या ज्ञानजनिकायां भक्तावेवादरः सिध्यतीति तदादराद्भगवद्धर्माणामेवालोपः अबाध इत्यर्थः । न च तद्यकरणे प्रत्यवायश्रवणस्य का गतिरिति शंक्यम्, भगवत्सेवातोऽवकाशं प्राप्य गौणकालेऽप्यकरणे तस्य सार्थक्यात् । 'मत्कर्म कुर्वतां पुंसां काललोपो भवेद्यदि, तत्कर्म तस्य कुर्वन्ति तिस्रः कोट्यो महर्षय' इति स्मृतेरिति ॥ ४० ॥

**उपस्थितेऽतस्तद्वचनात्** ॥ ४१ ॥

ननु यद्येवं श्रुतेस्तात्पर्यं तदोपनयनादिवत् भक्तेस्तज्जन्यज्ञानस्य चावश्यकत्वात् कर्मोपयोगित्वं स्यात्, न तु तथेति कर्मण एव प्राधान्यं युक्तम्, न तु भक्तेस्तज्जन्यज्ञानस्य चेत्याशङ्कायां तदादरबोधकश्रुतेस्तात्पर्यमाह **उपस्थिते** इत्यादि । भक्तिकर्मणोर्युगपत् करण **उपस्थिते** बलाबलविचारणायां **अत** आदराद्धेतो**स्तद्वचना**द्भगवद्धर्माणां बलवत्त्वेनालोपवचनात् मुमुक्षूणां भगवद्धर्मा एवावश्यकाः । कर्माणि तु 'तमेतं वेदानुवचनेने'तिश्रुत्या विविदिषायामेवोपक्षीणानि, ज्ञानपर्यन्तत्वपक्षेऽप्यारादुपकारकाणीति दूरापास्तं तत्प्राधान्यमित्यर्थः ॥ ४१ ॥ इति चतुर्दशमादरादलोप इत्यधिकरणम् ॥ १४ ॥

**तन्निर्धारणानियमस्तद्दृष्टेः पृथग्ध्यप्रतिबन्धः फलम्** ॥ ४२ ॥ (३-३-१५.)

ननु यदि कर्मणां न मुख्यता, तदा अप्रयोजकत्वात् परमहंसेष्विव भक्तेष्वपि तत्प्राप्तेरसंभवाद्व्यर्थः पूर्वो विचार इत्याशङ्कायामत्र पाक्षिकप्राप्तिं हृदि कृत्य सिद्धान्तमाह **तन्निर्धारणे**त्यादि । भक्तिमार्गे वरणं मूलकारणम्, तच्च मर्यादापुष्टिभेदेन द्विधेति भक्तिमार्गो द्विविधः । 'एष उ एवे'ति श्रुतेर्भगवदिच्छैव कर्मकरणे हेतुः, सा तु स्वरूपविद्भिर्ज्ञायते भगवज्ज्ञापनेन, अन्येषां फलबलकल्प्या, श्रुतिस्तु तैत्तिरीये 'आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चन' इति विद्वांसमुपक्रम्य, 'एतꣳह वा न तपति, किमहꣳसाधु नाकरवं किमहं पाप-

मकरवम्' इत्यकर्मणि विकर्मणि च तापाभावमाह । तथा गोपालतापनीये गान्धर्वीप्रभृतीनां व्रजस्त्रीणां कस्मै ब्राह्मणाय भैक्षं दातव्यं भवतीत्यादिना धर्माचरणमाह । पूर्वकाण्डेऽपि 'प्रह्लादो ह वै कायाधव' इत्यादिना प्रह्लादस्याह । पूराणे च शुकजडादीनामकरणम्, उद्धवाम्बरीषादीनां कर्मकरणमुच्यते । अतो भक्तानां द्विविधाचारदर्शनादाधुनिकानां तन्निर्धारणानियमः, भगवदिच्छानिर्धारणस्यानियमः । तथा चायं कर्म करोतु इतीच्छानिश्चयवता तत्संदेहवता च कर्म कर्तव्यम् । ननु भक्ततत्करणे किं फलमिति शङ्कायां विभज्योभयोः फलं वदन् प्रथममिच्छाज्ञानवतस्तदाह **तद्दृष्टेः पृथगि**ति । तस्या भगवदिच्छाया दृष्टिर्ज्ञानं यस्य स तद्दृष्टिः, तस्य, पृथक् साधारणजीवकृतकर्मणो यत्फलम्, ततोऽतिरिक्तं वेदमार्गरक्षा लोकसंग्रहश्च फलम् । तदुक्तं गीतायां 'यद्यदाचरति श्रेष्ठ' इत्यादिवाक्यैः । तदत्र सूत्रे हिशब्देन सूच्यते । अतःपरमिच्छाज्ञानरहितस्याह **अप्रतिबन्धः फल**मिति । तस्य मध्यमाधिकारात् कालसङ्गादिजनितचित्तमालिन्येन भगवत्सांनिध्ये प्रतिबन्धः स्यात् । अतस्तन्निवृत्तिरज्ञकृतकर्मणः फलमित्यर्थः । तेन कर्मकरणेच्छाज्ञानवता तत्संदेहवता च कर्म कर्तव्यमिति सिद्धम् । प्रासङ्गिकमेतत्सूत्रम् ॥४२॥ इति पञ्चदशं तन्निर्धारणाधिकरणम् ॥१५॥

**प्रदानवदेव तदुक्तम् ॥ ४३ ॥** ( ३-३-१६. )

एवं राजसानां कर्मासङ्गवारणायाधिकरणद्वयमुक्त्वा, मुख्यभक्त्युत्कर्षज्ञापनेन तदभिलाषोपजननाय तत्फलं चात्र दर्शितम् । अतः परमन्यत्र वैराग्यार्थं मुख्यभक्तिः सर्वात्मभावरूपा किं विहितकर्मज्ञानभक्तिभिर्भवति न वेति विचार्यते । तत्रैकादशस्कन्धे, 'तस्मात्त्वमुद्धवोत्सृज्य नोदनां प्रतिनोदनाम्, प्रवृत्तिं च निवृत्तिं च श्रोतव्यं श्रुतमेव च, मामेकमेव शरणमात्मानं सर्वदेहिनाम्, याहि सर्वात्मभावेन यास्यसे ह्यकुतोभयम्' इति भगवद्वाक्ये मुक्त्यात्मकाकुतोभयसाधनरूपे शरणगमने प्रकारत्वेन सर्वात्मभावस्य कथनात्स्वप्रयत्नसाध्यत्वं गम्यते । तत्र विहितस्यैव कारणता संभवति, 'दानव्रततपोहोमे'ति 'भक्त्या संजातया भक्त्ये'त्यादिवाक्यात् । अतस्तत्साध्यत्वं गम्यत इति प्राप्ते, आह **प्रदानव**दित्यादि । **तदुक्तं** भगवदुक्तम्, प्रदानवदेव, प्रकृष्टं दानं प्रदानं वरदानमिति यावत् तद्वदेव, भगवद्वाक्ये हि 'अथैतत्परमं गुह्यं शृण्वतो यदुनन्दन, सुगोप्यमपि वक्ष्यामि त्वं मे भृत्यः सुहृत् सखे'ति तदधिकारमनूद्य तदपृष्टमपि भावस्वरूपादिकं स्वत एवोक्त्वा, ततः 'तस्मात्त्व'मित्यादिश्लोकद्वयेन सर्वात्मभावेन मां शरणं याहीत्यवदत् । अतस्तदुपदेशनं वरदानवदेवेति सर्वात्मभावरूपा भक्तिकाष्ठापि तथेति न विहितसाधनसाध्येत्यर्थः ॥ ४३ ॥ इति षोडशं प्रदानवदित्यधिकरणम् ॥ १६ ॥

**लिङ्गभूयस्त्वात्तद्धि बलीयस्तदपि ॥ ४४ ॥** ( ३-३-१७. )

पूर्वाधिकरणे सर्वात्मभावरूपपरमकाष्ठावत्या मुख्यभक्तेर्वरणैकलभ्यत्वं स्थापितम् । वरणश्रुतौ तु परमात्मनो वरणलभ्यत्वमुच्यते, न तु सर्वात्मभावस्य तत्काष्ठाकाया भक्तेर्वेति

कथमस्य विचारस्य तत्प्रपञ्चत्वमिति शङ्कायां तस्य वरणैकलभ्यत्वं दृढीकर्तव्यम्, तत्स्वरूपं च श्रुत्या विवेक्तव्यम्, तदर्थमिदमत्र विचार्यते । किं कालादृष्टादिरूपप्रतिबन्धकसद्भावेऽपि वरणकार्यं स्यात्, किं वा तन्निवृत्ताविति, तत्र प्रतिबन्धकाभावस्य हेतुतायाः सर्वत्र दृष्टत्वात्, पूर्वाधिकरणे वरदानदृष्टान्तस्योक्तत्वेऽपि वरदानस्य तपःप्रभृतिभिस्तोष एव दर्शनात्, तत्र कारणान्तरे मृग्ये प्रतिबन्धकाभावस्याप्यदण्डवारितत्वात् तन्निवृत्तावेवेति प्राप्तम्, तत्राह **लिङ्गे**त्यादि । हि यतो हेतोः, **तत्** वरणं **बलीयः** बलवत्तरम्, अतः प्रतिबन्धकसद्भावेऽपि तदुपमर्देन वरणकार्यं स्यात् । बलीयस्त्वे हेतुमाह **लिङ्गभूयस्त्वा**दिति, वरणस्य लिङ्गं सर्वात्मभावस्तस्य सर्वतोऽधिकत्वात् । तथा हि, छान्दोग्ये नवमे प्रपाठके, 'अधीहि भगव इति होपससाद सनत्कुमारं नारद' इति सनत्कुमारनारदसंवादमुपक्षिप्य, नारदेनाध्यापनार्थमुक्तेऽधिकारमनिर्धार्य प्रथमत एव मुख्या ब्रह्मविद्या नोपदेष्टुं युक्तेत्यतो नारदाधिकारज्ञानाय 'यद्वेत्थ तेन मोपसीद, तत ऊर्ध्वं वक्ष्यामी'ति सनत्कुमारेणोक्ते, नारद 'ऋग्वेदं भगवोऽध्येमी'त्यादिना स्वविदितं सर्वमुक्त्वा, 'सोऽहं भगवो मंत्रविदेवास्मि, नात्मवित्, श्रुतꣳ ह्येव मे भगवद्दृशेभ्यस्तरति शोकमात्मविदिति सोऽहं भगवः शोचामि तं मा भगवांछोकस्य पारं तारयत्वि'ति स्वाभिप्रायं निवेदयामास, तदा सनत्कुमारस्त्वदुक्तं सर्वं नामेत्युक्त्वा नाम्नो ब्रह्मत्वेनोपासने यावन्नाम्नो गतम्, तत्रास्य यथा कामचारो भवतीति तत्फलमुक्त्वा, ततस्तस्माद्भूयसः प्रश्ने कृते, ततो वाचं तादृशीमुक्त्वा, पुनस्तथा प्रश्ने मनःसंकल्पचित्तध्यानविज्ञानबलान्नाप्तेजआकाशस्मराशास्तथोक्त्वा, तेषां ब्रह्मत्वेनोपासने तत्फलं चोक्त्वा, ततः प्राणस्याधिक्यं तदुपासकस्य सत्येनातिवादित्वं तदधिकारपरीक्षार्थमाह, यद्यस्याधिकजिज्ञासोत्पत्स्यते, तदोपदेशयोग्यो, नो चेदयोग्य इति । तत 'एष तु वा अतिवदति यः सत्येनातिवदती'ति सनत्कुमारेणोक्ते, 'सोऽहं भगवः सत्येनातिवदानी'ति स्वाकाङ्क्षां नारदोऽब्रवीत्, तदा सनत्कुमारस्तस्य सत्यादिजिज्ञासामुत्पाद्य सत्यविज्ञानमतिनिष्ठाकृतिसुखानि पूर्वपूर्वकारणत्वेनावदत्, तत्र सत्यविज्ञानमतिनिष्ठाकृतीनां लौकिकसजातीयमेव रूपमुक्त्वा सुखविशेषं वक्तुं तस्य सुखस्वरूपजिज्ञासायामाह 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य' इति, तदा नारदस्तेन प्राणस्य सत्यवदनादीनां स एव कारणं तत्त्वं च, अतस्तमेव कृत्यादिप्रणाड्या ज्ञात्वा सत्यवदनेऽतिवादित्वम्, नान्यथेत्यवगत्य, 'भूमानं भगवो विजिज्ञास' इति विज्ञापयामास, तदा सनत्कुमारः सर्वत आधिक्यरूपं भूयस्त्वं भूम्नि सिद्धमिति नारदेनावगतं ज्ञात्वा, 'यत्र नान्यत्पश्यति नान्यच्छृणोति, नान्यद्विजानाति स भूमे'ति भूमस्वरूपमाह 'यस्मिन् दृष्टे श्रुते विज्ञाते' तदेकतानतयान्यत्सुखत्वेन सुखसाधनत्वेन च न भासते, किन्त्वल्पत्वेनाप्रयोजकमिति भासते, स भूमेति तत्र फलति, तत्र श्रुतेऽपि भूम्नि स्वस्य तादृशभावाभावात्समुदितैर्दर्शनादिभिः तथाभावं निश्चित्य पप्रच्छ 'स भगवः कस्मिन् प्रतिष्ठित' इति, स भूमा कस्मिन्प्रकर्षेण तिष्ठ-

तीति, तत्रोत्तरमाह 'स्वे महिम्नी'ति, ततः को महिमेत्ययं प्रक्ष्यसीति विचार्य गो अश्वादीनां विभूतीनां महिमत्वमिह न विवक्षितम्, किन्तु ततोऽन्य इत्याशयेनाह 'अन्यो ह्यन्यस्मिन्प्रतिष्ठित' इति, गो अश्वादिभ्योऽन्यो यो महिमा तस्मिन्प्रतिष्ठित इत्यर्थः। ततस्तस्य महिम्नः स्वरूपं कीदृशमित्याकाङ्क्षायाम्, 'स एवाधस्तात्, स उपरिष्टात्, स पश्चात्, स पुरस्तात्, स दक्षिणतः, स उत्तरतः, स एवेदं सर्व'मित्यारभ्य, अग्रेऽहंकारादेशमात्मादेशं च पूर्ववदाह । तथा च यस्य पूर्वं 'स एवाधस्ता'दित्याद्युक्तरीत्या सर्वदिक्षु भूमभानं सर्वं भूमेति च भानं तदनन्तरं पूर्ववदेवाहंकारादेशेन भूमाभिन्नस्वभानं तदुत्तरं च पूर्ववदात्मादेशेन भूमात्माभिन्नस्वभानम्, एवंप्रकारकभानवान् यः पुरुषः स महिमा तस्मिन् भूमा प्रतिष्ठित इत्यर्थः फलति । तत्र भूमप्रतिष्ठायां गमकमाह 'स वा एष एवं पश्यन्नेवं मन्वान एवं विजानन्नात्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्दः स स्वराड्भवति तस्य सर्वेषु लोकेषु कामचारो भवती'ति । तथा चोक्तप्रकारकदर्शनादिमानुक्तरत्यादिमान् भवतीत्येते धर्मास्तत्र भूमप्रतिष्ठागमका इत्येतैर्लक्षणैर्भूममहिमरूपः पुमान् ज्ञातव्य इत्यर्थः । इदं च महिमस्वरूपमग्रेऽनुबन्धादिसूत्रे स्फुटीभविष्यति । एवं तत्स्वरूपं निष्कृष्य तादृशस्य शोकतीर्णत्वं पूर्वपृष्टोत्तरत्वेनाह 'स स्वराड् भवती'ति। स भूमात्मरत्यादिमान् स्वस्मिन् राजमानः स्वस्मिन् भूम्नो रञ्जयिता वा भवति, तस्य नामाद्याशाप्राणपर्यन्तलोकेषु कामचारो भवति सर्वप्राप्त्या शोकपारतीर्णो भवतीत्यर्थः । इदमत्र बोध्यम् । व्याख्यातरीत्या भूममहिमरूपः पुमान् यः परिचायितः, तस्य या स्फूर्तिः, सा नाखण्डब्रह्मज्ञानरूपा, 'तत्केन कं पश्ये'दित्यादिवदाकाराभावात्, किन्तु सखण्डतद्रूपा, षण्णां दिशां परिदृश्यमानस्य सर्वस्य चानुवादपूर्वकमात्मस्फूर्तिकथनात्, सापि न वामदेवादेरिव सर्वदा सर्वत्राहंग्रहरूपा, अहंकारादेशोत्तरमात्मादेशकथनेन तस्य व्यभिचारबोधनात् । अतः सा द्विविधाया अपि ज्ञानिस्फूर्तेर्विलक्षणेति तद्वानपि ज्ञानिभ्यो विलक्षणः । 'स यदि पितृलोककामो भवती'त्यादिवदस्य कामानामकथनात् दहराद्युपासकेभ्योऽपि विलक्षणः । मर्त्यसुखानभीप्सुत्वाल्लोकतोऽपि विलक्षणः । किन्तु सत्यवदनादिकारणभूतकृत्यादिजनकभूमात्मकसुखलाभवत्त्वस्योक्तत्वात्पूर्वं भूमलाभवान्, अतो दृष्टश्रुतविज्ञातभगवत्कः परमभक्तः । ततोऽन्यदर्शनादिराहित्यस्योक्तत्वाद्विरहभावे प्रपञ्चविस्मारकपरमासक्तिरूपातिविगाढभावेन सर्वत्र स्वासक्तिविषयभगवत्स्वरूपस्फूर्तिमान्, ततस्तद्रत्यादिमानिति तत्स्वरूपं फलतीति भूममहिमरूपस्य तादृशस्य या स्फूर्तिः, सा तु रसरूपं भगवन्तं भजतो य उक्तरीतिकविगाढभावात्मकसर्वात्मभावव्यभिचारिभावरूपैव, नान्यविधेति, वरणादेव च भूमा प्रतिष्ठित इति तादृशस्फूर्त्यनुमेयस्य वरणलिङ्गभूतस्य सर्वात्मभावस्यैव सर्वस्मादाधिक्यमित्यर्थः । नन्वहंकारादेशस्यात्रोक्तत्वात्तस्य च ज्ञानमार्गीयस्फूर्तितुल्यत्वात्तेन प्रतिबन्धोऽस्य संभाव्यत इत्यतः सूत्रांशेन समाधत्ते तदपीति, 'अन्तरा भूतग्रामव'दितिसूत्र उक्तमिति शेषः । तथा चैतादृशे मुख्यभक्ते

भगवता तादृग्ज्ञानमेतच्छेषतयैव संपाद्यते, न मुख्यतयेति न तादृशस्फूर्त्यास्य प्रतिबन्ध इत्यर्थः ॥ ४४ ॥

**पूर्वविकल्पः प्रकरणात् स्यात् क्रियामानसवत् ॥ ४४ ॥**

अत्र सूत्रद्वयेनाशंकते **पूर्वे**त्यादि । नात्र वरणलिङ्गभूयस्त्वमुच्यते, किन्त्वयं **पूर्ववि-कल्पः** पूर्वप्रपाठके श्वेतकेतूपाख्यान आत्मना सह सर्वस्याभेदो यो विनिरूपित 'ऐतदा-त्म्यमिदं सर्व'मित्यादिना नवकृत्वस्तस्य विकल्पः प्रकारान्तरं स्यात् । कुतः । **प्रकरणात्** । इदं ह्यात्मप्रकरणम्, अत एव नारदस्यात्मजिज्ञासैवोक्ता, 'सोऽहं भगवो मंत्रविदेवास्मि, नात्मवि'दिति । अतः सनत्कुमारोक्तं तदुत्तरमपि तद्विषयकमेव भवितुमर्हति । अत उभयोः प्रपाठकयोरात्मप्रकरणत्वात् पूर्वत्र यदभेदः सर्वस्योक्तः,तस्यैवात्मनः स्वरूपमत्र 'आत्मन एवेदं सर्व'मित्यन्तेनोच्यत इति । अत्र सिद्धान्तिसंमतमेव दृष्टान्तमाह **क्रियामानसव**दिति । यथा पूजाप्रकरणे क्रियारूपं बाह्यं पूजनमुच्यते, आन्तरं च ध्यानात्मकमनोव्यापाररूपम्, नह्ये-तावता अन्यतरस्य पूजाभिन्नत्वम्, प्रकरणाभेदात्, तद्वदिहापीत्यर्थः ॥ ४५ ॥

**अतिदेशाच्च ॥ ४६ ॥**

हेत्वन्तरमाह । नामरूपात्मकं हि जगत् पूर्वप्रपाठके सर्वपदेनानूद्य तत्र ब्रह्माभेद 'ऐतदात्म्य'मित्यनेन निरूपितः । एवमस्मिन्नपि प्रपाठके नारदोक्ता ऋगादिविद्या अनूद्य नामात्मकब्रह्मत्वं तत्रातिदिश्यते । तथैव वाङ्मनःप्रभृतिरूपात्मकं जगत् तत्तच्छब्देनानूद्य तत्र तत्तदात्मकब्रह्मत्वमतिदिश्यते । अतो यथा कौण्डपायिनामयने 'मासमग्निहोत्रं जुहोती'त्यग्निहोत्रनाम्ना प्राकृताग्निहोत्रधर्मास्तत्रातिदिश्यन्ते, तथात्र नामादिषु नामाद्यात्मक-ब्रह्मत्वमतिदिश्यत इत्यतोऽपि हेतोर्ज्ञानप्रकारभेद एवात्रोच्यत इत्यर्थः ॥ ४६ ॥

**विद्यैव तु निर्धारणात् ॥ ४७ ॥**

उक्तामाशङ्कां निराचष्टे **विद्ये**त्यादि । तुः शङ्कानिरासे । सनत्कुमारनारदसंवादे आत्मज्ञानप्रकार एवोच्यते इति यदाशङ्क्यते, तन्न, किं तर्हि, विद्यैवात्र सर्वात्मभावरूपा निरूप्यते, कुतः । **निर्धारणात्** । 'सुखं त्वेव विजिज्ञासितव्य'मित्युक्त्वा, 'यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः' इति सुखस्वरूपकथनेऽक्षरपर्यन्तं गणितानन्दत्वेनाल्पतया, 'यतो वाचो निवर्तन्ते' इति निरवध्यानन्दमयस्य पुरुषोत्तम-स्यैव विजिज्ञास्यत्वेनात्र निर्धारणात् । अयमर्थः । मुण्डके उक्तायां वरणश्रुतौ 'नायमात्मा' इति पूर्वार्धे जीवकृतसाधनालभ्यत्वमुक्त्वा, उत्तरार्धे वृतलभ्यत्वमात्मनो वदन्ती 'यं वृणुते तस्यैष आत्मा सन् तं स्वां तनुं वृणुते' इति तस्य स्वभोग्यत्वाय तनुत्वमाह । एतदग्रे च, 'नायमात्मा बलहीनेन लभ्यो न च प्रमादात्तपसो वाप्यलिङ्गात्' 'एतैरुपायैर्यतते यस्तु विद्वान् तस्यैष आत्मा विशते ब्रह्मधाम' इति मन्त्रः पठ्यते । तत्र बलशब्देन भक्तिरेवाभिप्रेयते,

'न साधयति मां योगो न सांख्यं धर्म उद्धव, न स्वाध्यायस्तपस्त्यागो यथा भक्तिर्ममोर्जिते' त्येकादशस्कन्धीयभगवद्वाक्येन, 'अहं भक्तपराधीनः' 'वशे कुर्वन्ति मां भक्त्या' इत्यादि-नवमस्कन्धीयभगवद्वाक्यैश्च भक्तेर्भगवद्वशीकारकत्वबोधनाद्वशीकारस्य बलकार्यत्वादत्र बलपदेन भगवद्वशीकारकसामर्थ्यविशेषरूपा भक्तिरेवोच्यते, अतो भक्तिहीनेन न लभ्यः । किंच, प्रमादालिङ्गतपोभ्यामलभ्यत्वकथनेन भगवदिच्छानुरूपसेवादिकरणरूपो योऽ-प्रमादः, यश्च सर्वात्मभावात्मकलिङ्गसहितविरहभावरूपं तपस्ताभ्यां लभ्य इति बोध्यते । उत्तरार्धे च, एतैरुपायैर्यतमानो यो विद्वांस्तस्य फलमुच्यते । तस्यैवं यतमानस्यैष पूर्वोक्त आत्मनोऽप्यात्मा पुरुषोत्तमः, ब्रह्माक्षरात्मकमेतदाधिदैविकं धाम विशते प्रविशति, तद्धृ-दयेऽक्षरं प्रकाश्य स्वयं तत्र प्रविष्टत्वेन प्रकाशत इत्यर्थः । तैत्तिरीये च, 'ब्रह्मविदाप्नोति परम्' इत्युक्त्वा 'सत्यं ज्ञान'मिति तद्विवरणर्चा हृदयाकाशे निहितं यत्परमं व्योमाक्षरं तत्र ब्रह्मणा सह सर्वकामभोगरूपं फलं परप्राप्तिपदार्थत्वेन विव्रीयते । एवं सत्येतच्छ्रुतिस्वारस्येन वरणजन्यभक्तिपरमकाष्ठाभूतं भगवत्प्रापकं यत्सर्वात्मभावरूपं ज्ञानं सैव मुख्या ब्रह्मविद्यात्र भूमात्मनः पुरुषोत्तमस्य विजिज्ञास्यत्वेनावधारणादवसीयत इति फलति । तथा च श्वेत-केतूपाख्याने सर्वस्य जगतो जीवस्य च ब्रह्माभेदो यो बोध्यते, स परोक्षवादेन पुरुषोत्तमाधि-ष्ठानत्वयोग्यताबोधनाय, सनत्कुमारनारदसंवादे तु, योग्यतामात्रेण न पुरुषोत्तमा-धिष्ठानरूपं फलम् । तथा सति ज्ञानिमात्रस्य स्यात्, किन्तु भगवदनुग्रहेण भक्तसङ्गेन च भक्तौ सत्यां तत्फलमिति ज्ञापयितुं भक्तस्य नारदस्य, भगवदावेशयुक्तस्य सन-त्कुमारस्य च संवादमुक्त्वा भूमपदेन निरवधिसुखात्मकं पुरुषोत्तमं परामृश्य तस्यैव सर्व-शोकतारकात्मत्वं तदधिष्ठितस्यात्मनश्च पुरुषोत्तममहिमरूपत्वं बोध्यते । अतः प्रकरण-विचारेऽपि पूर्वोक्तमेतच्छेष इति सर्वात्मभावस्यैव मुख्यं विद्यात्वमित्यर्थः । न च वरणश्रुतेः वाक्यत्वेन प्रकरणात् प्राबल्येऽप्यान्यत्रिकत्वान्नैतन्निर्णायकत्वमितिशङ्क्यम् । 'हानौ तूपायने'ति सूत्रे कुशाछन्दःस्तुत्युपगानेषु परशाखोक्तवाक्यस्यैव सर्वैर्भाष्यकारै-रादरणात्, जैमिनिनापि बाधलक्षणे 'अपि तु वाक्यशेषः स्यादन्याय्यत्वाद्विकल्पस्य विधीनामेकदेशत्वादि'तिसूत्रे, 'नानुयाजेष्वि'ति 'वाक्यस्य, 'आश्रावयास्तु श्रौषड्यजये यजामह' इति दूरस्थवाक्यशेषत्वादरणाच्च । अत्राप्युपसंहारे 'तस्यैवं पश्यत एवं मन्वान-स्यैवं विजानत आत्मतः प्राण आत्मत आशा' इत्यादिभिर्वाक्यैर्भगवतः सकाशादेव प्राणादि-कथनेन भक्त एव परिचाय्यते, अतो न शङ्कालेशः ॥ ४७ ॥

**दर्शनाच्च ॥ ४८ ॥**

दृश्यते च सर्वात्मभाववतां व्रजसीमन्तिनीप्रभृतीनां पूर्वमितरविस्मृतिर्व्यतिहारश्च, पश्चाद्भगवत्स्पर्शादिना सर्वसामर्थ्यमिति व्यासः स्वानुभवमेव प्रमाणत्वेनाह **दर्शना**दिति । यागेन समाधौ दर्शनादित्यर्थः ॥ ४८ ॥

**श्रुत्यादिबलीयस्त्वाच्च न बाधः ॥ ४९ ॥**

नन्‌ु सनत्कुमारनारदसंवादात्मकमान्तमेकं वाक्यम्, तत्रोपक्रमे 'मन्त्रविदेवास्मि नात्मवित्, श्रुतं ह्येवं मे भगवद्दृशेभ्यस्तरति शोकमात्मविद्' इति श्रावणादुपसंहारोऽपि तद्‌नुरोधेनैव व्याख्येयः, उपक्रमस्यासंजातविरोधत्वेन प्रबलत्वात्, अग्रे चेदात्मपदानामीश्वरपरत्वमङ्गीक्रियते, तदा वाक्यभेद उपक्रमविरोधश्च स्यात्, अतो वाक्यानुरोधात् पूर्वोक्तज्ञानप्रकारविशेष एवात्रोच्यत इत्यङ्गीकार्यमित्याशङ्क्योत्तरं पठति **श्रुत्यादी**त्यादि। एवमुपक्रमगतात्मवाक्यानुरोधाद्वरणजसर्वात्मभावलिङ्गभूयस्त्वस्य **न बाधः** । कुतः । **श्रुत्यादिबलीयस्त्वात्**। वाक्यापेक्षया श्रुतिलिङ्गयोः प्रबलत्वात्, तदुक्तं पूर्वतन्त्रे, 'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौबल्यमर्थविप्रकर्षा'दिति चात्र भूमपदेन लभत इति पदेन चोक्ते बोध्ये । निरपेक्षः शब्दो हि श्रुतिः । भूमपदं श्रुतमात्रमितरनिरपेक्षमेव निरवध्यमृतसुखप्रमितिं जनयतीति श्रुतिरूपम्, 'यदा वै सुखं लभतेऽथ करोती'ति सुखलाभश्रुतिः स्वसामर्थ्येन तस्य सुखस्य वरणलभ्यत्वभक्त्यात्मकबललभ्यत्वप्रमितिं जनयतीति पुरुषोत्तमलिङ्गरूपेति ताभ्यां तथेति । न चैवं सत्युपक्रमगतस्यात्मपदस्य पुरुषोत्तमपरत्वनिश्चायनात् तस्याबाधः, नतु वरणलिङ्गस्य सर्वात्मभावस्येति शङ्क्यम् । 'नात्मवित्तरति शोकमात्मविदि'ति नारदवाक्ये 'अथात आत्मादेश' इत्यादिरूपे तदुत्तरवाक्ये च यदात्मपदं तदपि भूयोभूय इत्युत्कृष्टप्रश्नतदुत्तरपर्यवसानाभ्यां सर्वोत्कृष्टे पुरुषोत्तमे पर्यवस्यत्तस्यैव लिङ्गम् । अत एव भूमश्रवणानन्तर 'मस्ति ततोऽपि भूय' इति नापृच्छत्, किन्तु तत्प्राप्त्यर्थमत्यार्त्या 'स भगवः कस्मिन्प्रतिष्ठित' इत्यपृच्छत्, तदा सर्वात्मभाववत्स्वेव प्रतिष्ठित इत्याशयेन सर्वात्मभावलिङ्गात्मकं भावं 'स एवाधस्ता'दित्यारभ्यान्तमुक्तवान् । अतस्तस्यैव द्वितीयप्रश्नस्य तदुत्तरस्य च सर्वात्मभावलिङ्गत्वमिति ॥ ४९ ॥

**अनुबन्धादिभ्यः प्रज्ञान्तरपृथक्त्ववद्दृष्टश्च तदुक्तम् ॥ ५०**

नन्वत्रात्मपदस्य पुरुषोत्तमपरत्वेऽपि द्वितीयप्रश्नोत्तराभ्यां सर्वात्मभावसमर्थनमयुक्तम्, तदुत्तरे पुरुषोत्तमस्य स्वप्रतिष्ठताया एव सिद्ध्या सर्वात्मभाववद्भक्तस्य तदधिकरणताया असिद्धौ विवक्षितसर्वात्मभावस्य तेन प्रतिपत्तुमशक्यत्वादित्याशङ्कायामाह **अनुबन्धे**त्यादि। अत्रोत्तरे सर्वात्मलिङ्गात्मको भाव उच्यते इति ज्ञातव्यम्। कुतः। **अनुबन्धादिभ्यः**, अनु पश्चाल्लक्षीकृत्य वा बध्नाति पूर्वोक्तं नियमयतीत्यनुबन्धः। पचाद्यच् । 'स एष एवं पश्यन्नेवं मन्वान एवं विजानन्'निति महिमप्रतिष्ठानिगमनवाक्यानन्तरवाक्यस्थः 'स एष' इति पूर्वपरामर्शः, स च तदा यः 'स एवाधस्ता'दित्यारभ्यात्मादेशान्तवाक्योक्तास्त्रिविधा भावाश्चेति द्वन्द्वः । तेभ्योऽनुबन्धादिभ्यश्चतुर्भ्यो हेतुभ्यः । तथा च यदि स्वमहिम्नीति वाक्ये पुरुषोत्तमस्यान्यत्राप्रतिष्ठितत्वं चेदभिप्रेयात्, तदा 'स एष' इत्यनेन भूमद्रष्टारं

नानुबध्नीयात्, अहङ्कारादेशादिकं च न कुर्यात्, किन्तु 'कस्मिन्प्रतिष्ठित' इति प्रश्ने, न क्वापीत्येवोत्तरं वदेत्, वदति त्वेवम्, तस्मात्सर्वात्मभावलिङ्गात्मको भाव एवात्रोच्यत इति तस्य न बाध इत्यर्थः । न बाध इति पूर्वसूत्रादनुवर्तते । नन्वनुबन्धस्य तद्बाधसाधकत्वेऽपि तदादीनां 'स एवाधस्ता'दित्यादिनोक्तानां भावानां कथं तद्बाधसाधकत्वमिति चेत्, इत्थम् । पूर्वं ये भावा उक्ताः, तेषां स्वरूप 'मेवं पश्यन्नेवं मन्वान एवं विजान'न्नित्यनेन क्रमादुच्यते । तत्र हि पूर्वमतिविगाढभावेन तदितरास्फूर्त्या तमेव सर्वत्र पश्यतीत्येतद्दर्शनं 'एवं पश्य'न्नित्यनेनोच्यते । ततः किंचिद्बाह्यानुसंधानेऽहङ्कारादेशो भवति पूर्ववत् सर्वत्र सर्वरूपतया च स्वस्यैव भानात्, तदा स्वबले स्फुरितेऽहमेव सर्वैः प्रकारैः स्वसामर्थ्येन तं प्रकटीकरिष्य इति युक्तिभिरनुचिन्तयतीत्येत 'देवं मन्वान' इत्यनेन बोध्यते। तेन रासस्थानामिव विचयनगुणगानादिकरणावस्था ज्ञापिता भवति । ततो निरुपधिस्नेहविषयः परमात्मा पुरुषोत्तम एवेति तन्निर्देशो भवति । ततः पूर्ववत् तस्यैव सर्वात्मकत्वे भाते स्वकृतसाधनवैफल्यज्ञानेनातिदैन्ययुक्तस्वाभाविकस्नेहजविविधभाववान् भवतीत्येतदेव 'विजान'न्नित्यनेन बोध्यते। ततोऽतिदैन्यतो जाते भगवदाविर्भावे या अवस्थास्ता 'आत्मरतिरात्मक्रीड' इत्यादिनोच्यन्त इति । अतस्तज्जानीहि । ननु भवत्वेवमत्र सर्वात्मभावलाभः, तथापि तस्य मुक्तावेव पर्यवसानं वाच्यम्, अतो वृथेयं चिन्तेत्याशङ्कानिरासाय दृष्टान्तमाह **प्रज्ञान्तरपृथक्त्वव**दिति । अन्यप्रज्ञा प्रज्ञान्तरम्, तत्कृतपृथक्त्वं प्रज्ञान्तरपृथक्त्वम्, तेन तुल्यं पष्ठ्यर्थे वति, सर्वात्मभाववद्भक्तप्रज्ञातोन्या विलक्षणा या मुमुक्षुभक्तप्रज्ञा, मोक्षदातृत्वेन भगवद्विषयिणी बुद्धिः सा प्रज्ञान्तरम् । तद्यथा कर्मज्ञानवदितरभक्तप्रज्ञाभ्यः पृथगेव फलं साधयति, तथा सर्वात्मभाववतो भक्तस्य यादृशी प्रज्ञा भगवद्विषयिणी सापि तादृशं फलं तत्क्रतुन्यायात्साधयिष्यति । अतः सर्वात्मभावस्य न मुक्तौ पर्यवसानमिति फलतोऽपि न बाध इत्यर्थः । अत्र स्वानुभवं प्रमाणत्वेनाह **दृष्टश्चे**ति, उक्तभाववतो भक्तस्य स्वरूपदर्शनाद्यतिरिक्तफलाभावोऽस्माभिरेव दृष्ट इत्यर्थः । शब्दमपि प्रमाणयति दर्शनोपष्टंभाय **तदुक्त**मिति, 'अहं भक्तपराधीन' इत्यादिना भगवतैव दुर्वाससं प्रति नवमस्कन्ध उक्तम् । तथा च यो यदधीनः, स तदिच्छानुरूपमेव करोतीति लोके दृष्टम्, अतो भक्तवश्यस्तेषां भजनानन्दमेव ददातीत्यर्थः । भक्तानां मुक्त्यनिच्छुत्वं तु 'मत्सेवया प्रतीतं च'त्यादिवाक्येषु स्फुटम्, अतो न सन्देह इत्यर्थः ॥ ५० ॥

**न सामान्यादप्युपलब्धेर्मृत्युवन्न हि लोकापत्तिः ॥ ५१ ॥**

ननु 'यत्र नान्यत्पश्यती'त्यारभ्य अस्य प्रपाठकस्य सर्वात्मभावनिरूपकत्वोक्तिस्तत्रत्यात्मपदानां पुरुषोत्तमपरत्वोक्तिश्चानुपपन्ना, यतो 'मत्सेवया प्रतीतं च'त्यादिषु पुराणवाक्येषु सर्वात्मभाववतो भक्तस्य मुक्तावपि कामाभावः प्रतिपाद्यते । श्रौते सनत्कुमारवाक्ये 'तस्य सर्वेषु लोकेषु कामचारो भवती'ति तत्तल्लोककामनैव सूच्यते । अतः साधकस्वभाववैलक्षण्यादत्र न

सर्वात्मभावनिरूपणं शक्यवचनमित्याशङ्कायामाह **नेत्यादि** । न, सर्वात्मभावानिरूपणमत्रेति यदाशङ्कितम्, तन्न । कुतः । **सामान्यादप्युपलब्धेः** । समानधर्मयोगादपि तच्छब्दप्रयोगस्य 'अजामेकां लोहितशुक्लकृष्णाम्' 'सृष्टीरुपदधाती'त्यादिश्रुतिषूपलभ्यमानत्वात् । तथा च यथा प्रकृतौ सृष्टयसृष्टिसंघे चाजासृष्टिपदप्रयोगः, तथा प्रकृते कामचारवाक्येऽपि यो लोकपदप्रयोगः, स लोकानां सुखप्रधानत्वात्तेन साधर्म्येण भगवत्संबन्धिषु रतिक्रीडादिषु प्रयुक्तः, ते च मुक्त्यन्तसर्वव्यतिरिक्ताः सर्वात्मभाववद्भक्तकामिता एवेति न तत्प्रयोगेण अत्र न सर्वात्मभावप्रतिपादनाभावः शक्यशङ्क इत्यर्थः । ननु यथाश्रुत एवार्थः कुतो नाद्रियत इत्यत आह **नहि लोकापत्तिः** । सर्वात्मभाववत आत्मनो 'नान्यत्पश्यती'त्यादिधर्मविशिष्टत्वात् हेतोर्न लोकापत्तिर्युक्तिसहा, तादृशस्य स्वराट्त्वेन पूर्वमुक्तत्वात्कामाभाव एव च स्वराट्त्वादिति । किंच, एतदग्रे 'आत्मन एवेदं सर्व'मित्युक्त्वा तेनेतरव्यवच्छेदं कृत्वा ततो 'न पश्यो मृत्युं पश्यती'ति मृत्युदर्शननिषेधः क्रियत इति बोधयितुं दृष्टान्तमाह **मृत्युवदिति** । तेन तादृशस्य मृत्योरिव लोकानामपि नापत्तिः । तथा चातो यथाश्रुतं न गृह्यत इत्यर्थः ॥५१॥

**परेण च शब्दस्य ताद्विध्यं भूयस्त्वानुबन्धः ॥ ५२ ॥**

लोकापत्तिरूपार्थस्याग्रहणे हेत्वन्तरमाह **परेणेत्यादि** । **परेण** 'सर्वमाप्नोति सर्वश' इत्येतेनैतच्छ्लोकतुरीयपादेनापि शब्दस्य 'सर्वेषु लोकेषु कामचारो भवति' इति वाक्यस्य **ताद्विध्यम्**, 'आत्मन एवेदं सर्व'मित्येतद्वाक्यसमानप्रकारकत्वम्, 'तदेच्छ्लोको भवती'ति वाक्येन, पश्यश्लोकस्य पूर्वोक्तार्थसंग्राहकताया उक्तत्वात्, पूर्वं 'चात्मन एव सर्व'मिति निगमनात्, सर्वैः प्रकारैरात्मन एव पूर्वोक्तसर्वप्राप्तिरित्यस्यार्थस्य सिद्धेः कामचारवाक्यस्य लौकिककामपरत्वं न वक्तुं शक्यमित्यर्थः । नन्वयमर्थः 'आत्मन एवेदं सर्व'मित्यनेनैव सिद्ध इति पुनस्तत्कथनस्य किं प्रयोजनम्, अत आह **भूयस्त्वानुबन्ध** इति । तुः शङ्कानिरासे, भूयस्त्वात्, उक्तेऽर्थे हेतूनां भूयस्त्वं बाहुल्यमनुसंधाय, स्वकृतसाधनसाध्यफलापेक्षया स्वयमुद्यम्य भगवता दत्तस्य फलस्य भूयस्त्वमाधिक्यं वानुसंधाय, पुनः श्लोकेनानुबन्धः, तल्लक्षीकृत्य संबन्धः कृत आदरेण बोधित इत्यर्थः ॥ ५२ ॥

**एक आत्मनः शरीरे भावात् ॥ ५३ ॥**

उक्तेऽर्थे श्रुत्यन्तरसंमतिमाह **एक** इत्यादि । एके शाखिनस्तैत्तिरीयाः शरीरे भक्तानां हृदयाकाशे आत्मनो भगवतो भावादाविर्भावात् तेन सह सर्वकामभोगबोधिकां श्रुतिं पठन्ति । 'सत्यं ज्ञानमनन्तं ब्रह्म, यो वेद निहितं गुहायां परमे व्योमम्, सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति । अत्र ब्रह्मणा सह सर्वकामोपभोग उक्त इत्येतदेकवाक्यतायै कामचारश्रुतावप्येवमेवार्थो ज्ञातव्य इत्यर्थः ॥ ५३ ॥ इति सप्तदशं लिङ्गभूयस्त्वाधिकरणम् ॥ १७ ॥

**व्यतिरेकस्तद्भावभावित्वान्न तूपलब्धिवत्** ॥ ५४ ॥ (३-३-१८).

ननु 'ब्रह्मविदाप्नोतिपरम्' इति श्रुतौ अक्षरब्रह्मविदः परप्राप्तिरुच्यते। सा किमितरसाधननिरपेक्षादक्षरज्ञानात्, किं वेतरसापेक्षादिति संशयः। तत्र श्रुतौ साधनान्तरस्यानुक्तत्वेनान्यनिरपेक्षादेवेतिपूर्वपक्षे सिद्धान्तमाह **व्यतिरेक** इत्यादि। उक्तश्रुतौ हि गुहायां परमव्योम्नि यन्निहितं तद्वेदनेन परप्राप्तिरुच्यते, तत्र परमव्योमाविर्भावस्तु ज्ञानिगुहायां दुर्घटः। अतस्तत्र परमव्योम्नो व्यतिरेकोऽभावः। कुतो दुर्घट इत्याकाङ्क्षायां तत्र हेतुमाह **तद्भावभावित्वात्**, वरणश्रुतौ यमेवेति यच्छब्दोपबन्धात् कस्यचिदेव वरणमिति निश्चीयते। अतो यत्र वरणाभावः, तत्र भगवद्भावस्यासंभवाज्ज्ञानिनां तथा वरणाभावात् भगवद्विषयको भावो न भावी, तेन भगवद्विषयकभावाभावाद् दुर्घट इत्यर्थः। ननु परमव्योम्नोऽक्षरस्य ज्ञानिज्ञानविषयत्वं यथा जायते, तथाविर्भावोप्यस्तु। किंच, व्यापकस्याक्षरस्य विस्मृतकण्ठमणेः स्मरणादिविषयत्ववत् ज्ञानविषयत्वमेवाविर्भाव इति तस्य च जातत्वात् कथं नेत्युच्यत इत्याशङ्कायामाह **न तूपलब्धिवदिति**। तुः शङ्कानिरासे। उपलब्धिर्ज्ञानमक्षरविषयकम्, तद्यथा ज्ञानिगुहायां जायते, तद्वत् अक्षराविर्भावो न भवति, स हि वरणहेतुकः, वरणं तु भक्तानामेव, न ज्ञानिनामतो नेत्यर्थः। न च ज्ञानविषयत्वमात्रमाविर्भावः, किन्तु चाक्षुपविषयत्वम्, तच्च तेषां न भवति। अथ साक्षात्कारविषयत्वमेव सः। साक्षात्कारश्च मानसः तेषामस्त्येवेति नोक्तं साधीय इति विभाव्यते। तदापि यस्मै यत्फलं प्रभुर्दित्सति, तं प्रति स्वधामभूतं तत् तथा प्रादुर्भावयति, नान्यथा, ज्ञानिनां त्वव्यक्तासक्तत्वात् तान् प्रति तत्क्रतुन्यायेनाव्यक्ततयैव तत्प्रादुर्भावयति। भक्तानां तु तत्तल्लीलाविशिष्टस्वस्वरूपासक्तत्वात् तान्प्रति तत्क्रतुन्यायेन व्यापिवैकुण्ठात्मकस्वलोकविशिष्टं प्रादुर्भावयतीति साक्षात्कारविषयत्वेऽपि तेन रूपेण न तस्य तथात्वम्, अतो न केवलादक्षरज्ञानात् तत्प्राप्तिरित्यर्थः ॥५४॥

**अङ्गावबद्धास्तु न शाखासु हि प्रतिवेदम्** ॥ ५५ ॥

अस्मिन्नर्थे कैमुतिकन्यायकथनार्थं निदर्शनत्वेनाह **अङ्गे**त्यादि। तुः शङ्कानिरासे। उक्तेऽर्थे कथंभावशङ्का न कापि, हि यतो हेतोरङ्गावबद्धाः अङ्गेषु अन्वाधानादिषु अवबद्धाः, 'अध्वर्युं त्वां वृणे, होतारं त्वां वृण' इत्यादिरूपवरणेन नियमिता ऋत्विजः न शाखासु, ते सर्वशाखाविदोपि न सर्वासु शाखासूक्तान्यङ्गानि कर्तुं शक्ताः, किन्तु प्रतिवेदम्, 'हौत्रमृचा, आध्वर्यवं यजुषा, औद्गात्रं साम्ना' इति तत्तद्वेदनियतमेव कल्पोक्तप्रकारतः कुर्वन्ति, तत्र सर्वशाखोक्तसर्ववेदोक्तकर्मकुशलानां यत्तावन्मात्रककरणम्, तत्रावबन्धनहेतुभूतयजमानेच्छैव नियामिका, लौकिकेऽपि स्वामिन इच्छा, यत्र वैदिकलौकिककार्यम्, एवं तत्रानन्तकोटिब्रह्माण्डनियामकस्येच्छैव नियामिकेति किं वाच्यम्। अत उक्तेऽर्थे कथंभावशङ्का न कार्येत्यर्थः ॥ ५५ ॥

**मन्त्रादिवद्वाऽविरोधः ॥ ५६ ॥**

ननु पूर्वं कर्मज्ञाननिष्ठानामपि पुरुषाणामग्रे भक्तिमार्गीयत्वं भवति, तत्र तथैव भगवद्वरणमिति सिद्धान्तः कृतः, इह तु ऋत्विज एकस्मिन्कार्ये वृतस्य न कार्यान्तरे वरणमिति विरुद्धो दृष्टान्त इत्यरुच्या निदर्शनान्तरमाह **मन्त्रे**त्यादि । मन्त्र आदि यस्य तन्मन्त्रादि, तद्गुणसंविज्ञानः । मन्त्राः कर्म च, तद्वत्, यथा देवस्य त्वे त्वनुषङ्गमन्त्रो बहुषु कर्मसु संबध्यते, यथा वा गायत्रीमन्त्रः सूर्योपस्थाने मन्देहादिनिवारणे च, यथा च, 'अग्निहोत्रं जुहुयात्स्वर्गकाम' इत्यादिकाम्याग्निहोत्रं कामितार्थसाधकत्वे प्रत्यवायपरिहारे चैकमेव विनियुज्यते, तथात्राप्येकमेव वरणं तत्र तत्र चोपयुज्यते, तेन तत्तन्निष्ठानन्तरं भक्तिनिष्ठेति दृष्टान्तस्याविरोध इत्यर्थः ॥ ५६ ॥ इत्यष्टादशं व्यतिरेकाधिकरणम् ॥ १८ ॥

**भूम्नः क्रतुवज्ज्यायस्त्वं तथा हि दर्शयति ॥ ५७ ॥ (३-३-१९).**

ननु सुखस्वरूपजिज्ञासायां 'यो वै भूमा तत्सुख'मित्युक्तम्, भूमस्वरूपजिज्ञासायां 'यत्र नान्यत्पश्यती'त्यादिना यद्ब्रह्मस्वरूपं निरूपितं तत्सर्वात्मभावस्वरूपमित्युक्तम्, तन्नोपपद्यते, सर्वात्मभावे दुःसहदुःखानुभववतो विरहभावस्य पुराणे कथनात्, 'यो वै भूमा तदमृत'-मिति कथनाच्च । किंच, 'स वा एष एवं पश्य'न्नित्याद्युक्त्वाग्रे तस्य 'सर्वेषु लोकेषु कामचारो भवति' इति फलमुच्यते । तच्च मोक्षानन्तरमसंभावितमिति सर्वात्मभावो वा मोक्षो वा प्रतिपाद्य इति भवति संशयः । तत्र कामचारोक्तेर्मुक्तिपूर्वदशायां तन्माहात्म्यबोधनार्थत्वादमृतशब्दाच्च मुक्तिरेव भूमपदेनोच्यत इति प्राप्ते, आह **भूम्न** इत्यादि । भूमशब्देन सर्वात्मभाव एवोच्यते । कुतः । हि यतो हेतोर्भूम्नः क्रतुवज्ज्यायस्त्वम्, दर्शपूर्णमासवत्सर्वाधिक्यम्, तस्मात् । तैत्तिरीयसंहितायां प्रथमाष्टकषष्ठप्रपाठकनवमानुवाके 'परमेष्ठिनो वा एष यज्ञोऽग्र आसीत्, तेन स परमां काष्ठामगच्छत्' इत्युपक्रम्य, 'य एवं विद्वान् दर्शपूर्णमासौ यजते, परमामेव काष्ठां गच्छति' इति श्रूयते, तत्र यथा व्रतादिदुःखात्मकत्वेऽपि परमकाष्ठालक्षणफलगमकत्वेन दर्शपूर्णमासयोः सर्वक्रतुभ्यो ज्यायस्त्वम्, तथा दुःखात्मकविरहभावसंमिश्रत्वेऽपि अनन्यलभ्यसाक्षात्पुरुषोत्तमानन्दप्राप्तिहेतुत्वेन सुखरूपत्वमुच्यत इत्यन्येभ्योऽस्य ज्यायस्त्वम्, तस्मात् स एवात्रोच्यते, न तु मोक्ष इत्यर्थः । अत्रोपपत्तिमाह **तथा हि दर्शयती**ति । हि यतो हेतोः श्रुतिरेव तथा दर्शयति । 'स एवाधस्ता'दित्याद्युक्त्वा, ततोऽहङ्कारादेशमात्मादेशं च क्रमेणोक्त्वा तत एवं पश्यत पुरुषस्य 'आत्मतः प्राणः' इत्यादिना प्राणाशास्मरादीन् सर्वानात्मत एव दर्शयति । एतच्च सर्वात्मभाववत एवोपपद्यते, न मुक्तस्य, वृत्तिभेदाभावात् प्राणाद्यभावाच्च, नापि जीवन्मुक्तस्य तस्य प्राचीनानामेव प्राणादीनां सत्त्वेन 'आत्मत एव प्राणा'इत्यादिसावधारणोक्तिबाधापत्तेः । तस्मात् सर्वात्मभाव एवात्रोच्यत इति निश्चयः ॥ ५७ ॥ इत्येकोनविंशं भूम्न इत्यधिकरणम् ॥ १९ ॥

**नाना शब्दादिभेदात्** ॥ ५८ ॥ ( ३-३-२०. )

पूर्वाधिकरणत्रयेण सर्वात्मभावस्वरूप तदुत्कर्षतत्फलतदधिकारिणां निर्णयं कृत्वा, इदानीममुख्याधिकारिणामर्थे मत्स्यादिरूपाणां भगवदवतारत्वमविशिष्टं यथा सुतेजःप्रभृतीनां वैश्वानरावयवत्वम्, अतस्तेषामिवैषामपि समस्योपासना कर्तव्या, किंवा पार्थक्येनेति शङ्कायाम्, उपास्यब्रह्मणोऽभेदेऽपि रूपभेदस्य सत्त्वादेकरूपोपासकस्य रूपान्तरानुपासनेऽनुपासनलक्षणस्यावज्ञादोषस्य संभवेन, क्रियमाणाया अप्युपासनायाः सिद्ध्यसंभवात्समस्यैव कार्येति प्राप्ते, आह **नाने**त्यादि । सर्वेष्ववतारेषु **नाना**, पार्थक्येनैवोपासना कार्या । कुतः । **शब्दादिभेदात्** । तत्तद्रूपवाचकानां पदरूपाणां तद्बोधकवाक्यरूपाणां च शब्दानामादिपदादाकारकर्मणां च भेदात्, वैश्वानरावयवव्यस्तोपासन इवात्र दोषाकथनाच्चेत्यर्थः । तेन मिथो विरुद्धानामाकारकर्मणामेकत्र भावनाभावेनाशक्यताऽयुक्तता न भवतीति गुणोऽपि बोध्यः ॥ ५८ ॥ इति विंशं नानाशब्दादिभेदादित्यधिकरणम् ॥ २० ॥

**विकल्पोऽविशिष्टफलत्वात्** ॥ ५९ ॥ ( ३-३-२१. )

पृथगुपासनानि कार्याणीति स्थिते चिन्त्यते, किमग्निहोत्रदर्शपूर्णमासादिवत् समुच्चय उत विकल्प इति । तत्र विधिफलयोः समानत्वात्समुच्चय इति प्राप्ते, आह **विकल्प** इत्यादि । उक्त विधानामुपासनानां विकल्प एव । कुतः । **अविशिष्टफलत्वात्** । सर्वेषां तेषां मुक्तिफलकत्वेन तथात्वात् । तथा च मुक्तौ विशेषाभावेनैकस्मादेव तत्सिद्धावन्यस्य प्रयोजनाभावेन अग्निहोत्रादीनामिव तेषां नित्यताबोधकस्य प्रमाणस्याभावेन च तेषां विकल्प एव युक्त इत्यर्थः ॥ ५९ ॥

**काम्यास्तु यथाकामं समुच्चीयेरन्न वा पूर्वहेत्वभावात्** ॥ ६० ॥

पूर्वोक्तप्रत्युदाहरणतया आह **काम्यास्त्वि**त्यादि । यासूपासनासु भिन्नानि भिन्नानि फलान्युच्यन्ते, तत्र त्वनेकफलार्थिनस्तत्तत्काममनतिक्रम्य तत्तत्फलकोपासनाः समुच्चीयेरन्, समुच्चयेन कार्याः । कुतः । **पूर्वहेत्वभावात्** । अविशिष्टफलत्वरूपस्य हेतोरभावात् । **नवा** अत्र वाशब्दो विकल्पार्थोऽपि अप्यर्थकत्वेन फलति, तथा च यत्र त्वेकस्यैवोपासनस्य स्वकामितानेकफलकत्वम्, तत्र चेत् तत्सर्वफलाकाङ्क्षया तामेवोपासनां कुर्यात्, तदा तयैव सर्वेषां कामितानां फलानां सिद्ध्या अन्यास्तत्फलका उपासना न समुच्चीयेरन्नपि । अत्रापि स एव हेतुः । अत्र स्वकामितफलेषु तदितरवैशिष्ट्येन अविशिष्टत्वरूपाविशेषणाभावेऽविशिष्टफलत्वस्याभावेन हेत्वभावो बोध्यः । तेन नानार्थत्वाच्छ्लिष्टोऽयं प्रयोग इत्यर्थः ॥ ६० ॥ इत्येकविंशं विकल्प इत्यधिकरणम् ॥ २१ ॥

**अङ्गेषु यथाश्रयभावः** ॥ ६१ ॥ ( ३-३-२२. )

कर्मादिशेषत्वाभावेन स्वतः फलजनकतया प्रधानभूतासूपासनासु निर्णयमुक्त्वा, अन्यशेषासु निर्णयं वक्तुमेकफलसाधकानामनेकेषामुपासनां रूपभेदाङ्गभेदाभ्यां भेदेऽपि

तेष्वेकतरोपासने क्रियमाणे तत्फलकोपासनान्तरोक्तान्यङ्गानि समुच्चीयेरन्, न वेतिसंशये, फलैक्यात्समुच्चीयेरन्निति प्राप्तम्, तत्र निर्णयमाह **अङ्गेष्वित्यादि** । **अङ्गेषु**, तत्तदुपासनाङ्गेषु । **यथाश्रयभावः** । आश्रयमनतिक्रम्य यथाश्रयं स्वाश्रयभूतोपासनामनतिक्रम्य भावः वर्तमानत्वम् । नान्यत्र तत्प्राप्तिरित्यर्थः ॥ ६१ ॥

**शिष्टेश्च** ॥ ६२ ॥

उक्ते नियमे हेतुमाह **शिष्टेश्चेति**, तत्तदुपासनस्य श्रुतौ तत्तत्प्रतिनियताङ्गवैशिष्ट्येनैवानुशासनात् । चकारेणातिरिक्तकरणे प्रायश्चित्तोक्तिरपि बाधिकेति सापि संगृह्यते। तथाचातथानुशासनादतिरिक्तकरणे प्रसक्तेश्च तत्रैव तान्यङ्गानि कार्याणि, न त्वन्यत्र समुच्चेयानीत्यर्थः । एतदुदाहरणं तु, छान्दोग्ये 'मनो हिंकारो वाक्प्रस्ताव' इत्यादिभिर्दशभिर्वाक्यैर्गायत्रादिनामग्रहणपूर्वकं विहितेषु दशसूपासनेषु 'सर्वमायुरेति ज्योग् जीवति' इत्याद्युक्तानां सर्वायुर्भोगादीनां फलानामैक्यात्, तत्तदुपासनाङ्गभूतानां क्रमेण तत्र तत्रोक्तानाम्, 'महामनाः स्यात्तद्व्रतम्' 'न प्रत्यङ्ङग्निमाचामेन्न निष्ठीवेत्तद्व्रतम्' इत्यादीनां भिन्नानां श्रावणात् तानि ज्ञेयानि । एवमन्यान्यपि द्रष्टव्यानि ॥ ६२ ॥ इति द्वाविंशमङ्गेष्वित्यधिकरणम् ॥ २२ ॥

**समाहारात्** ॥ ६३ ॥ ( ३-३-२३. )

कर्माङ्गभूततया कर्ममार्गीयेषूपासनेषु निर्णयमुक्त्वा, ज्ञानमार्गीयेषूपासनेष्वङ्गनिर्णयमाह सूत्राभ्याम् । अत्र 'अङ्गेषु यथाश्रयभाव' इति पूर्वस्मादनुवर्तते । अथर्वोपनिषदुक्तेषु श्रीरामाद्युपासनेषु तत्रतत्रोक्ता धर्माः किं तत्र तत्रैव नियम्येरन्, उत समुच्चीयेरन्निति संशये, पूर्वोक्तन्यायेन तत्रैव नियम्येरन्नितिप्राप्तम्। तत्राह **समाहारा**दिति। तत्र हि यथा ते ते धर्मा उच्यन्ते, तथा 'यो वै रामचन्द्रः स भगवान् ये वै मत्स्यकूर्माद्यवतारास्तस्मै वै नमो नमः। यो वै नृसिंहो देवो भगवान् यश्च ब्रह्मा तस्मै वै नमो नमः। नमस्ते रघुवर्याय रावणान्तकराय च' इति रूपान्तरत्वेनापि स्तुतिः श्रूयते । सा च स्तुतिर्भगवत्त्वेनेति भगवत्पदादवगम्यते । पुराणे च प्रकरणात्। एवं सति भगवत्त्वप्राधान्येन तदुपासने समाहारस्य दर्शनादेकस्मिन्नपि रूपे तानि सर्वाण्युपसंहृत्य सर्वरूपत्वेनोपासना कार्येति युक्तमित्यर्थः ॥६३॥

**गुणसाधारण्यश्रुतेश्च** ॥ ६४ ॥

ऐश्वर्यवीर्यादिगुणानां तेषु साधारण्यश्रवणाच्च तथेत्यर्थः । एवं हेतुद्वयेनोपसंहार उक्तः । रूपभेदप्राधान्ये त्वनुपसंहारपक्षः पूर्वं 'नाना शब्दादिभेदा'दित्यत्रोक्त इति न विरोधः ॥ ॥ ६४ ॥ इति त्रयोविंशं समाहाराधिकरणम् ॥ २३ ॥

**न वा तत्सहभावाश्रुतेः** ॥ ६५ ॥ (३-३-२४.)

ननु एवमुपासनमग्निहोत्रदर्शपूर्णमासादिवन्नित्यं समुच्चेयम्, उत यावज्जीवमेकमेव कार्यमित्येवं वैकल्पिकमिति संशये, सर्वेषां सर्वरूपत्वादिना तौल्यान्नित्यमिति प्राप्ते, समु-

च्चयनिषेधमाह **नेत्यादि** । **न**, समुच्चयो न कार्यः, किन्तु **वा**, ऐच्छिको विकल्प एव युक्तः । **तत्सहभावाश्रुतेः** । नियमतस्तेषां रूपाणां सहभावश्रवणं चेत्स्यात्, तथोपासनस्य नित्यता स्यात्, न त्वेवम् । अत ऐच्छिक एव विकल्प इत्यर्थः ॥ ६५ ॥

**दर्शनाच्च ॥ ६६ ॥**

योऽपि रूपान्तरसमाहारपूर्वकमुपास्ते, सोऽप्येकं रूपमुपास्यत्वेन मत्वा तथोपास्ते, तस्य फलं चैकरूपस्यैव दर्शनं भवति, न तु सर्वेषाम्, इतो हेतोः विकल्प एवेत्यर्थः । अत्रोपासननिर्णयान्ते दर्शनाच्चेति सूत्रयता भगवता व्यासेनोपासनानामुपास्यदर्शनं फलमिति सूच्यत इति बोध्यम् ॥ ६६ ॥ इति चतुर्विंशं न वा तत्सहभावाश्रुतेरित्यधिकरणम् ॥ २४ ॥

**इति श्रीमद्वल्लभाचार्यचरणैकतानश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचितायां ब्रह्मसूत्रवृत्तौ तृतीयाध्यायस्य तृतीयः पादः ॥ ३ ॥ श्रीः ।**

श्रीकृष्णाय नमः ।

# तृतीयाध्यायस्य चतुर्थः पादः ।

**पुरुषार्थोऽतः शब्दादिति बादरायणः ॥ १ ॥ ( ३-४-१. )**

पूर्वस्मिन्पादे परप्राप्तेरन्तरङ्गसाधनभूतानां विद्यानां मर्यादापुष्टिभेदेन वरणवैविध्यादनेकविधेष्वधिकारिषूपयुक्तानां विचारेण तत्र तत्र तदुचितगुणोपसंहारो विचारितः । इह तु पुष्टिमार्गीयविद्यानां बहिरङ्गसाधनानपेक्षत्वेऽपि पुष्टिमर्यादामार्गीयाणां केवलमर्यादामार्गीयाणां च बहिरङ्गसाधनभूताश्रमादिसापेक्षत्वात् तद्विचारेण कर्मणामुपसंहारो हीनमध्यमाधिकार्यर्थं विचार्यते । 'क्षिप्रं हि मानुषे लोके सिद्धिर्भवति कर्मजा' इति वाक्यान्मन्दमध्यमयोः प्रायशस्तत्रैवासक्तेः । तस्य च हेतुः पूर्वमुपसंहारसूत्रे 'अर्थाभेदात्' इत्यनेनोक्तः । तत्रार्थशब्दो वस्तुवाची प्रयोजनवाची चेति यथा वस्तुवाचित्वमादायोपास्याभेदादुपासनासु शाखान्तरोक्तगुणोपसंहारो भवतीत्युक्तम्, तथात्र प्रयोजनवाचित्वमादाय कर्मणामप्युपसंहारो भवति न वेति विचारयन्, कर्मणां शीघ्रं फलसाधकत्वाद्भवतीति प्राप्ते, सिद्धान्तमाह **पुरुषार्थ** इत्यादि । **पुरुषार्थः** फलं भगवत्प्राप्तिरूपः । **अतः** सर्वात्मभावरूपविद्यात एव । कुतः । **शब्दात्** । 'नायमात्मा प्रवचनेन लभ्यः' इत्यत्र प्रवचनादीनां कर्मणामेतदात्मलाभहेतुतानिवारणपूर्वकं वरणमात्रकारणताबोधकाद्वाक्यरूपाच्छब्दात् । एवं 'ब्रह्मविदाप्नोति परम्' इति 'तमेव विद्वानमृत इह भवति' इतिजातीयकाः केवलविद्याकारणत्वबोधका अपि शब्दाः हेतुत्वेन बोध्याः । श्रुतिपदमनुक्त्वा शब्दपदप्रयोगात् 'केवलेन हि भावेने'त्यादयः साधनान्तराप्राप्यस्य भावमात्रप्राप्यत्वबोधकाः स्मृतिरूपा अपि शब्दाः संगृहीता बोध्याः । स्वनामग्रहणात्स्वस्यात्रैव भरो बोधितः ॥ १ ॥

**शेषत्वात्पुरुषार्थवादो यथान्येष्विति जैमिनिः ॥ २ ॥**

सिद्धान्तं दृढीकर्तुं षड्भिः सूत्रैर्जैमिनिमतेन पूर्वपक्षमुत्थापयति **शेषत्वा**दित्यादि । वेदान्ते हि द्विविधानि विद्यावाक्यानि, जीवस्वरूपबोधकानि ब्रह्मस्वरूपबोधकानि च, तत्र जीवः कर्तृत्वात्कर्मार्थः । विष्णुर्भगवानपीज्यत्वात् कर्मशेषः । शेषलक्षणे 'पुरुषः कर्मार्थत्वा'दिति प्रयुक्तिलक्षणे 'यजतिचोदनाद्रव्यदेवताक्रियासमुदाये कृतार्थत्वात्' इति सूत्रात् । अतः कर्मशेषत्वात् वेदान्तवाक्येषु विद्यायां तद्वेद्ये च पुरुषार्थवादः पुरुषार्थरूपत्वमुच्यते । तत्र दृष्टान्तः । **यथान्येषु** द्रव्यसंस्कारकर्मसु, 'यस्य पर्णमयी जुहूर्भवति न पाप॰श्लोक॰शृणोति, 'यदाङ्क्ते, चक्षुरेव तद्भ्रातृव्यस्य वृङ्क्ते, यत्प्रयाजानुयाजा इज्यन्ते वर्म वा

एतद्यज्ञस्य क्रियते वर्म यजमानस्य भ्रातृव्याभिभूत्यै ' इत्यादिफलश्रुतिरर्थवादः, तथा विद्यावेद्ययोरपि पुरुषार्थोक्तिरर्थवादः । 'द्रव्यसंस्कारकर्मसु परार्थत्वात्फलश्रुतिरर्थवादः स्या'दिति प्रयुक्तिलक्षणे सूत्रादित्यर्थः ॥ २ ॥

**आचारदर्शनात् ॥ ३ ॥**

स्वोक्तोपोद्बलनाय हेत्वन्तराण्याह **आचारे**त्यादि । ब्रह्मविदामपि वशिष्ठादीनामग्निहोत्राद्याचारस्य दर्शनात् ॥ ३ ॥

**तच्छ्रुतेः ॥ ४ ॥**

'जनको ह वैदेहो बहुदक्षिणेन यज्ञेनेजे' इति ब्रह्मविदोऽपि जनकस्य यज्ञकरणश्रुतेः ॥ ४ ॥

**समन्वारंभणात् ॥ ५ ॥**

'तं विद्याकर्मणी समन्वारभेते' इति श्रुत्युक्ताद्विद्याकर्मणोः साहित्येनैव फलस्य सम्यग् लक्षीकृत्यारंभणादुत्पादनात् ॥ ५ ॥

**तद्वतो विधानात् ॥ ६ ॥**

'ब्रह्मिष्ठो ब्रह्मा दर्शपूर्णमासयोस्तं वृणीत' इति कल्पश्रुत्या ब्रह्मविदो ब्रह्मत्वेनार्त्विज्ये वरणविधानात् ॥ ६ ॥

**नियमाच्च ॥ ७ ॥**

'आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणः सोमं पिपासेत्, यावज्जीवमग्निहोत्रं जुहुयात्' इत्यादिश्रुत्युक्तकर्मकरणनियमात् । चकारेण 'नियतस्य तु संन्यासः कर्मणो नोपपद्यते, मोहात्तस्य परित्यागस्तामसः परिकीर्तितः' इति स्मृतिः संगृह्यते । तथा च यदि केवलया विद्ययैव पुरुषार्थः सिध्येत्, तदा ब्रह्मविदो वशिष्ठाद्या यज्ञादिकं नाचरेयुः, श्रुतिश्च जनकादिज्ञानिनां यज्ञकरणं नानुवदेत्, फलसमारंभणे विद्याकर्मणोः साहित्यं च न वदेत्, ब्रह्मिष्ठस्यर्त्विक्त्वेन वरणं च न विदध्यात्, असोमपस्य दुर्ब्राह्मणत्वं अग्निहोत्रे यावज्जीवाधिकारं च वदन्ती सर्वदा कर्मनियमं च न कुर्यात् । गीतास्मृतिश्च नियतकर्मत्यागस्य तामसत्वेन निन्दां न कुर्यात्, अत एतेभ्यो बाधकहेतुभ्यो विद्यायाः फलसाधकत्वे वारिते तस्याः कर्मशेषभूतकर्तृस्वरूपबोधकतया इज्यस्वरूपमाहात्म्यबोधकतया च कर्मशेषत्वमेवादरणीयमित्यर्थः ॥ ७ ॥

**अधिकोपदेशात्तु बादरायणस्यैवं तद्दर्शनात् ॥ ८ ॥**

एवं षड्भिः पूर्वपक्षमुत्थाप्य परिहरति **अधिके**त्यादि । 'तु' शब्दः पूर्वपक्षं निवारयति । यदुक्तम्, द्रव्यदेवतासंबन्धरूपे यागे द्रव्यवद्देवताया अपि तादर्थ्यादिज्यत्वे

कर्मशेषत्वं ब्रह्मणः इति। तदयुक्तम्। कुतः । **अधिकोपदेशात्** । अधिकस्योपदेशोऽधिकोपदेशः 'स वा अयमात्मा सर्वस्य वशी सर्वस्येशानः सर्वस्याधिपतिः सर्वमिदं प्रशास्ति यदिदं किं च स न साधुना कर्मणा भूयान्नो एव एवासाधुना कनीया'नित्याद्युक्त्वा, अग्रे 'तमेतं वेदानुवचनेन विविदिषन्ति ब्रह्मचर्येण तपसा श्रद्धया यज्ञेनानाशकेन चैतमेव विदित्वा मुनिर्भवति, एतमेव प्रव्राजिनो लोकमभीप्सन्तः प्रव्रजन्ति' इति बृहदारण्यकश्रुतौ कर्मापेक्षया अधिकतयोपदेशस्तस्मात् । तथा च यज्ञादेर्यज्ज्ञानसाधकता श्रुत्योच्यते, तस्य यज्ञादिकं विना दुर्ज्ञेयत्वादिज्यत्वेन यज्ञशेषत्वापादनमयुक्तम् । न च वेदानुवचनेनेत्यादिभिस्तृतीयाश्रुतिभिर्ब्रह्मण इज्यत्वेन ज्ञानस्य यागपूर्वाङ्गत्वादस्त्येव तज्ज्ञानमिति तस्य कथं न यज्ञशेषत्वमिति शङ्क्यम् । स्वर्गे फलत्वेन ज्ञानस्य तथात्वेऽपि स्वर्गस्य तच्छेषत्वाभावेनाप्रयोजकत्वात्, इज्येन देवतारूपेण यज्ञार्थत्वेऽपि मूलरूपेण तथात्वाभावात्, न च विष्ण्वादिनाम्ना भ्रमितव्यम्, विभूतिरूपस्य तस्य तद्भिन्नत्वात्, अधिकोपदेशपदेन ततोऽप्याधिक्यबोधनाच्च । न च 'तमेतं वेदानुवचनेन विविदिषन्ती'तिवत् 'यदेव विद्यया करोति तत्तदेवास्य वीर्यवत्तरं भवती'त्यपि श्रूयते, तथा सति पूर्वया यथा यज्ञशेषित्वं प्रतिपाद्यते, तथोत्तरया कर्मशेषत्वमप्यायातीति न पूर्वयैकतरनिश्चय इति शङ्क्यम् । 'एतमेव विदित्वा मुनिर्भवति' इत्यादिके तदुत्तरवाक्ये यज्ञेन ब्रह्मवेदनोत्तरं संन्यासश्रावणेन गार्हस्थ्यबाधनात्, तथा सति ब्रह्मवेदनोत्तरं यज्ञाभावेन ब्रह्मणस्तच्छेषताया बाधितत्वात्, 'यदेवे'ति श्रुतेरुद्गीथविद्यायां पठितत्वेन तन्मात्रविषयतया इतरविद्यासंग्रहस्य तथा कर्तुमशक्यत्वात् । न च ब्रह्मणः कर्तृत्वश्रावणाद्विश्वसृजामिव ब्रह्मणोऽपि कर्तृत्वात्कर्मशेषत्वं शङ्क्यम्, 'स न साधुने'त्यादिना कर्मकृतगुणदोषसंसर्गराहित्यश्रावणस्य विरोधात् । अतः कर्मभ्य इज्येभ्यः कर्तृभ्योऽप्यधिकस्योपदेशान्न ब्रह्मणः कर्मशेषत्वम्, नापि विद्यायाः । 'नायमात्मे'ति, 'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशु'रित्यादिषु तस्या अप्याधिक्यबोधनादिति स्वमतमपि जैमिनिमतादुत्कृष्टमित्याह **बादरायणस्यैव**मिति । बादरायणस्य मतमेवम्, सूक्ष्मदृष्ट्या विचारात् स्थूलदृष्ट्या विचारकमतादधिकमित्यर्थः । एवं श्रुत्या पूर्वपक्षिमतं निरस्य शिष्यविश्वासार्थं प्रमाणत्वेन स्वानुभवमाह **तद्दर्शना**दिति । तस्य भगवतो भक्तिमार्गस्य च दर्शनात्, इतरस्मादाधिक्येनानुभवादित्यर्थः ॥ ८ ॥

**तुल्यं दर्शनम्** ॥ ९ ॥

एवं मुख्यतया ब्रह्मणस्तत्प्रसङ्गेन विद्यायाश्च कर्मशेषत्वं परिहृत्य, विद्यायाः कर्मशेषत्वं मुख्यतया परिहर्तुं जैमिनीयान् कर्मावश्यकत्वबोधकत्वायोक्तान् हेतूनाभासीकरोति । **तुल्यं दर्शन**मित्यादिभिः । यदुक्तमाचारदर्शनादिति, तन्न, यतो दर्शनमाचारवदावयोस्तुल्यम्, शुकभरतसनकादीनां कर्मत्यागदर्शनात् । तथा चाचारदर्शनान्यथानुपपत्त्या

विद्यायाः कर्मशेषत्वं न कल्पयितुं शक्यम्, तदभावदर्शनान्यथानुपपत्त्या शेषत्वाभावस्यापि कल्पयितुं शक्यत्वादित्यर्थः ॥ ९ ॥

**असार्वत्रिकी ॥ १० ॥**

ननु 'जनको हवैदेह' इति श्रुतिसाहाय्यादाचारदर्शनं त्यागदर्शनात्प्रबलमित्यतः श्रुतिमपि साधारणीकरोति **असार्वत्रिकी**ति। ब्रह्मविदः करणबोधकश्रुतिर्न सर्वब्रह्मविद्विषया, 'एतद्धस्म वै तद्विद्वांस आहु ऋषयः कावषेयाः, किमर्था वयमध्येषामहे, किमर्था वयं यक्ष्यामहे, एतद्धस्म वैतत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवांचक्रिरे, एतं वैतमात्मानं विदित्वा पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय, अथ भिक्षाचर्यं चरन्ति' इत्यादि तद्विरुद्धश्रुतीनां विद्यमानत्वात्। अतस्तया श्रुत्यापि न विद्यायाः कर्मशेषत्वसिद्धिरित्यर्थः १०

**विभागः शतवत् ॥ ११ ॥**

ननु मास्तु श्रुत्याचाराभ्यां शेषत्वनिर्णयः, तथापि ब्रह्मवित्त्वाविशेषे कथमेकेषां कर्मकरणमेकेषां तत्त्याग इति विभागः इत्यत्र हेतुर्वक्तव्यः, नो चेत् कर्मत्यागिनां कर्मानधिकारित्वमेवाङ्गीकार्यम्, तथा पूर्वोक्ताचारश्रुतिभ्यां विद्याया वेद्यस्य च कर्मशेषत्वं दुरपोहमित्यत आह **विभाग** इति। अयं यो विभागः सः शतवत्, शतानन्दिनां यथानन्द एकस्मादुत्तरोत्तरः शताधिकः, तद्वत्, तथा च तत्र यथा श्रोत्रियत्वाकामहतरूपाधिकाराधिक्यादानन्दाधिक्यम्, तथात्र प्रकृतेऽप्यन्यभावराहित्याधिक्येन भगवद्भावाधिक्यम्, अतोऽधिकारतारतम्यं विभागहेतुरित्यसाधारण्यान्न प्रत्यवस्थानावकाश इत्यर्थः। न चैतत्सूत्रस्यैवं व्याख्याने समन्वारंभणसूत्रस्यानुत्तरणात् तेन प्रत्यवस्थानं शङ्क्यम्, तद्विषयवाक्योपसंहारे 'इति तु कामयमान' इति कथनात्कर्माङ्गभूतविद्याया एव तत्र विवक्षितत्वावगमेनाशङ्काया एवानुदयेन भ्रान्तिमूलत्वादिति ॥ ११ ॥

**अध्ययनमात्रवतः ॥ १२ ॥**

यदुक्तं 'तद्वतो विधाना'दित्यनेनार्त्विज्यशेषत्वं विद्याया इति, तदसङ्गतम्। तत्र ब्रह्मशब्देन वेद एव बोध्यते, न चेष्ठनप्रत्ययविरोधः। ब्रह्मत्वेनाविकृतत्वं ज्ञात्वा सततं योऽधीते, नतु वेदात्फलं कामयते, सोऽतिशयेन ब्रह्मवानिति तत्र विवक्षणात् तादृशस्याध्ययनमात्रवतो ब्रह्मत्वात् आर्त्विज्येऽधिकारात् तद्वरणं कल्पे विधीयते, नतु ब्रह्मज्ञानवतः। न च साङ्गसरहस्यवेदाध्ययने वेदान्तार्थरूपब्रह्मज्ञानं तस्यानुक्तसिद्धमिति वाच्यम्। विद्यापदेनापरोक्षब्रह्मज्ञानस्य विवक्षिततया शाब्दस्याङ्गतायामपि प्रकृते दोषाभावात्, अपरोक्षज्ञानस्य विवक्षितत्वं तु छान्दोग्यस्य सनत्कुमारनारदसंवादादेव स्फुटतीति नात्र शङ्कालेशः ॥ १२ ॥

**नाविशेषात् ॥ १३ ॥**

यदुक्तम्, 'आश्विनं धूम्रललाममालभेत' इत्यादिषु कर्मकरणनियमात्त्यागपक्षापेक्षया करणपक्ष एव ज्यायान्। अतो विद्यायाः कर्माङ्गत्वं दुरपोहमिति। तन्न। कुतः।

**अविशेषात्** । 'न कर्मणा न प्रजया धनेन त्यागेनैकेऽमृतत्वमानशुः' इति श्रुत्या कर्मादिभिर्मोक्षाप्राप्तिमुक्त्वा, त्यागेन सा बोध्यते, तेन मुमुक्षोः कर्मत्यागावश्यकत्वात्तन्नियमः सिध्यतीति विशेषाभावात् । तथा च मुमुक्षोः कर्मत्यागोऽमुमुक्षोस्तत्करणमिति व्यवस्था सिध्यति । तेन कर्म कुर्वतां जनकादीनामप्यन्ते मोक्षप्रश्नात् त्याग एव तात्पर्यमित्यर्थः । ननु तुरीयाश्रमे कर्मत्यागो द्वितीयाश्रमे तु तत्कर्तव्यम्, कर्मणि कर्ता शेषस्तादर्थ्यात्, तस्य नित्यताज्ञानमावश्यकम्, अन्यथा स्वर्गादिभोगस्तस्य नोपपद्येत, तच्च ज्ञानं यद्यप्यनुमानादिनापि भवति, तथापि यथान्यतः क्रतुज्ञानसंभवेऽप्यध्ययनोपात्तवेदवाक्यावगतकर्मस्वरूपाणामेव पुंसां कर्मस्वधिकारः, तथैवाध्ययनोपात्तोपनिषद्वाक्यावगतात्मतत्त्वानामेव कर्माधिकार इत्यध्ययनविधिबलादवगम्यते । अतो वेदान्तजन्यमात्मज्ञानं तु कर्तृद्वारा कर्मशेषमेवेति शङ्काप्येतेनैव निरस्ता बोध्या । नियमेऽविशेषवदाश्रमेऽप्यविशेषात्कर्तृत्वस्य त्यागकर्मणोः साधारण्येन तद्द्वारा ज्ञानस्य तन्निरूपकवेदान्तभागस्य च कर्ममात्रशेषताया नियन्तुमशक्यत्वात्, तत्रात्मनो देहादिभ्यो विविक्तस्य मोक्षोपयोगिन एव सिद्धया तादृशस्य ज्ञाने त्यागस्यैव सिद्ध्या तेन कर्मासिद्धेश्चेति । तस्मात्तदुक्ताः सर्वे हेतव आभासा एवेत्यर्थः ॥ १३ ॥

**स्तुतयेऽनुमतिर्वा ॥ १४ ॥**

एवं षड्भिः सूत्रैर्जैमिन्युक्तान् हेतूनाभासीकृत्य ब्रह्मिष्ठशब्देन ब्रह्मज्ञ एवोच्यत इति तदीयग्रहिलवादमाशङ्क्य निराचष्टे **स्तुतय** इत्यादि । दर्शपूर्णमासावेतादृशौ यत्र ब्रह्मविदार्त्विज्याधिकारीत्येवं दर्शपूर्णमासस्तुत्यर्थम्, ब्रह्मिष्ठवाक्येनार्त्विज्यानुज्ञा क्रियत इति ब्रह्मिष्ठपदादवगम्यते, अतिशयेन ब्रह्मवान् हि ब्रह्मिष्ठः, तत्र निष्ठावान्, स यदा कृताकृतावेक्षको भवति, तदा तत्कर्म साङ्गं भवति, 'यत् तत्कर्मसु वैषम्यं ब्रह्मदृष्टं समं भवे'दिति दर्शनमात्रेण व्यङ्गतानिवृत्तिस्मरणादिति। अतः कर्मानुग्रहार्थं तथानुज्ञा, न तु ब्रह्मविदोऽधिकारबोधनार्थम्, पूर्वोक्तानुपपत्तिभिरेव पराहतत्वादित्यर्थः ॥ १४ ॥

**कामकारेण चैके ॥ १५ ॥**

ननु 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्' इति श्रुत्या, ब्रह्मविदः कर्मकृतगुणदोषौ निषिध्येते । निषेधश्च प्राप्तिपूर्वक इति ब्रह्मविदः करणमावश्यकमिति लिङ्गदर्शनात्प्राप्यत इति चेत्, तत्राह **कामकारेणे**त्यादि । कामेनेच्छया करणं कामकारः । चकारेणेश्वरेच्छया करणं एके शाखिनः पठन्ति, 'एष नित्यः' इत्यादिना, 'सर्वस्य वशी सर्वस्येशानः' इत्यादिना च । तथा च परानुग्रहेच्छया करणेऽपि तत्कृतगुणदोषासंसर्गान्न तेन पुरुषस्य कर्मशेषत्वमिति, तत्र तादृशसामर्थ्यजनिकाया विद्यायाः कर्मशेषत्वं शङ्कितुमप्यशक्यमित्यर्थः ॥ १५ ॥

**उपमर्दं च ॥ १६ ॥**

उक्तोपष्टंभाय सूत्रान्तरं पठति **उपे**त्यादि । एके शाखिन अखण्डाद्वैतभाने कर्मतदधिकारयोरुपमर्दमभावमपि पठन्ति । 'यत्र त्वस्य सर्वमात्मैवाभूत्, तत् केन कं पश्ये'दित्यादिना । अखण्डब्रह्मभानं च ब्रह्मेति भानम्, न तु 'इदं सर्वं ब्रह्म' इति, उद्देश्यत्वेन पुरोवर्तिभानात्, तथा च तादृशस्य कर्मकृत्यसंभवात् क्व ज्ञानस्य कर्मशेषत्वसंभावनापीत्यर्थः॥१६॥

**ऊर्ध्वरेतस्सु च शब्दे हि ॥ १७ ॥**

एवं त्रिभिः सूत्रैर्ग्रहिलवादं निराकृत्य, श्रुतौ ब्रह्मचर्यगार्हस्थ्यावेवाभिप्रेतौ, चातुराश्रम्यपक्षस्तु स्मार्तत्वान्निर्बल इति, तदादाय कर्मत्यागादरो न युक्त इत्येवं ग्रहिलवादान्तरं परिहरति **ऊर्ध्वे** इत्यादि । **च** पुनः ऊर्ध्वरेतस्स्वाश्रमेषु कर्माभावमेके जाबालाः शाखिनः पठन्ति । 'ब्रह्मचर्यं समाप्य गृहीभवेत्, गृहाद्वनीभूत्वा प्रव्रजेत्' इति क्रमेण चातुराश्रम्यपक्षमुक्त्वा, 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा, अथ व्रती वा, अव्रती वा स्नातकोऽस्नातको वोत्सन्नाग्निरनग्निको वा यदहरेव विरजेत् तदहरेव प्रव्रजेत्' इति । तथा चाश्रमचतुष्कस्यापि श्रौतत्वान्न तस्य नैर्बल्यम् । तस्यायुर्भागक्रमेणादरे चतुर्थाश्रमस्थस्यांध्यादिकमपि क्वचित्संभाव्यत इति तद्वारणाय 'यदि वे'त्यादिना पक्षान्तरं तत्र वैराग्यस्यैव हेतुत्वं चाह । तेन त्यागे वैराग्यस्यैव हेतुत्वम्, न कर्माधिकाराभावस्येति बोधयति । ब्रह्मचर्यानन्तरं केषांचिद् गार्हस्थ्यस्य, केषांचित्संन्यासस्य च कथनेन वैराग्यस्य दुर्लभत्वं च सूचयति । अतो भगवदनुग्रहसाध्यमेव वैराग्यम्, अतो न नैर्बल्यसंभावनापीत्यर्थः । ननु संन्यासेऽपि तदाश्रमीणं कर्म योगाभ्यासादिरूपं वर्तते । अतो वैराग्यसहकृतं ज्ञानं तच्छेषभूतम्, वैराग्यरहितं त्वग्निहोत्रादिशेषभूतमिति शङ्कायामाह **शब्दे हे**ति । **हि**, यतो हेतोर्ज्ञानस्वरूपं तत्फलं च न युक्तिगम्यम्, किन्तु **शब्दे**, वेदे, अतस्तन्मात्रगम्यम्, तत्र तु, 'तमेवं विद्वानमृत इह भवति,' 'ब्रह्मविदाप्नोति परम्,' 'एनं विदुरमृतास्ते भवन्ति' इत्यादिवाक्यैर्मोक्ष एव फलं श्रूयते । सर्वेषां यागादिसाधनानां च तत्रैव पर्यवसानमिति 'तमेतं वेदानुवचनेन' इत्यादिश्रुत्यावसीयते । अत उक्तश्रुतिविरोधात् संन्यासाश्रमीणकर्माङ्गत्वमपि न विद्यायाः शक्यवचनमित्यर्थः । तेन 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद् यतयः शुद्धसत्त्वा' इति तैत्तिरीयश्रुत्या संन्यासस्य सत्त्वशोधनद्वारा ज्ञानोपकारकत्वं वेदान्तविज्ञानस्य चार्थनिश्चायकत्वात्फलसाधकत्वम्, फलं च ब्रह्मप्राप्तिरेव, यावद्दुःखाभावपूर्वकपरमानन्दरूपत्वात्, अतः कर्मविधिनापि परंपरया मोक्ष एव फलत्वेन परामृश्यत इति सिद्धम् ॥ १७ ॥

**परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥**

तं **परामर्शं** पूर्वोक्तं श्रुतितात्पर्यनिश्चयं **जैमिनिः** कर्मस्वातंत्र्यवादी **अपवदति**, बाधते, स हि मोहकशास्त्रवादी, 'द्विजन्मना जैमिनिना पूर्ववेदमायार्थतः । निरीश्वरेण वादेन

कृतं शास्त्रं महत्तर'मिति पाद्मवाक्यात् । अतः कर्मानधिकारे आयुस्तुरीये भागे आंध्यादिना संपन्ने संन्यासस्तादृशैः कार्यः । अन्यथा ' वीरहा वा एष देवानां योऽग्निमुद्वासयते ' इति निन्दा न श्राव्येत । अतः कर्मण्येव श्रुतेस्तात्पर्यम् । अपि च, अचोदना, ज्ञानकर्मणोरलौकिकफलसाधकत्वे तत्त्वेन विहितत्वमेव प्रयोजकम् । अपरोक्षज्ञानवाक्ये च विधायको लिङ्गादिप्रत्ययो न श्रूयते, अतो न मुक्तिसाधकत्वं शक्यवचनम्, च ' य एनं विदुः ' इत्यादिस्तु यागेज्यविष्णुस्तुतिपरा । तस्माज्ज्ञानस्वातंत्र्यं न युक्तमिति ॥ १८ ॥

**अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥**

एवं तन्मतमनूद्य दूषयति । **अनुष्ठेयं** कर्म **बादरायण** आचार्योऽपवदतीति पूर्वोक्तस्यानुषङ्गः । तत्र हेतुः । **साम्यश्रुतेः** । निन्दासाम्यश्रवणात् । 'यथा वीरहा वे'त्यादौ कर्मत्यागनिन्दा, तथा 'असुर्या नाम ते लोका अन्धेन तमसावृताः, तांस्ते प्रेत्यापि गच्छन्ति अविद्वांसोऽबुधा जनाः' । एतदग्रे च, 'य एतद्विदुरमृतास्ते भवन्ति । अथेतरे दुःखमेवापयन्ती'ति च भगवज्ज्ञानरहितस्यापि निन्दा श्रूयते । अतः श्रुतितौल्यादुभयमप्यावश्यकम् । अतो नानया प्रत्यवस्थातुं युक्तमित्यर्थः । न च रागिविरागिभेदेनाधिकारभेदादुभयसाम्यमितिवाच्यम् । वीरहत्वदोषस्य ज्ञानिन्यसंसर्गात्, ' नैनं कृताकृते तपत' इति, 'एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान्' इति श्रुत्या तथावसायात् । नैवमविद्वत्त्वकृतस्य दोषस्य कर्तर्यसंसर्गबोधिका श्रुतिरुपलभ्यत इति साम्याभावात् । एताभ्यामेव श्रुतिभ्यां ज्ञानस्य कर्माङ्गत्वमप्यपास्तम् । न च ज्ञाने चोदनाभावः शङ्क्यः । 'तस्मादेवंवित् शान्तो दान्त उपरतस्तितिक्षुः श्रद्धाचित्तो भूत्वा आत्मन्येवात्मानं पश्येत्' इति तस्या अपि सत्त्वात् । इतः पूर्वम्, 'एष नित्यो महिमा ब्राह्मणस्य' इति मन्त्रेण, तत् पूर्वग्रन्थेन चात्मरूपस्य फलस्योक्तत्वात् । अतो ज्ञान एव प्रयतनीयम्, न कर्मणीत्यर्थः ॥ १९ ॥

**विधिर्वा धारणवत् ॥ २० ॥**

ननु यदि ज्ञान एव श्रुतेस्तात्पर्यम्, न कर्मणि, तदा तत्प्रधानकपूर्वकाण्डवैयर्थ्यापत्तिरित्याशङ्क्य समाधत्ते **विधि**रित्यादि । पूर्वकाण्डोक्तः कर्मविधिः **धारणवत्**, **वा** शब्दोवधारणे । पुष्टिमार्गे तदनपेक्षणात्, मर्यादामार्ग एव तदपेक्षणादिति । तथा च यथा योगशास्त्रे ध्यानस्या मूर्तेर्धारणं समाध्यङ्गत्वेन विधीयते, न तु स्वतंत्रफलसाधकत्वेन, तद्वत् कर्मापि ज्ञानभक्त्योरङ्गत्वेन विधीयते । अतो न पूर्वकाण्डवैयर्थ्यमित्यर्थः । न च तत्र समाधिमधिकृत्य तदङ्गविधाने यमादिवद्धारणस्य विधानाद् युक्तं धारणस्य तदङ्गत्वम्, इह तु ज्ञानभक्त्योरप्रकृतत्वात् तदङ्गत्वं न वक्तुं शक्यम्, दृष्टान्तवैषम्यादिति वाच्यम् । प्रकरणाभावेऽप्यन्यथानुपपत्तिरूपया आवश्यकोपपत्त्या कर्मणा ज्ञानाङ्गत्वे श्रुतेस्तात्पर्यनिश्चयात् । अन्यथा-

नुपपत्तिस्त्वेवं बोध्या। श्रुतिर्हि पूर्वकाण्डे ऐहिकामुष्मिकतत्तत्फलजनकानि काम्यानि कर्माणि विधाय तेषां यन्मुख्यं फलं तन्नित्यकर्माङ्गेषु बोधयति। यथा 'चमसेनापः प्रणये-द्गोदोहनेन पशुकामस्य' इत्यादि, तत्राङ्गे फलश्रुतेरर्थवादत्वेऽप्यसदर्थबोधकत्वं न वक्तुं युक्तम्। श्रुतेः प्रतारकत्वप्रसङ्गात्। अतो यजमानकामनायां तस्यामावृत्तौ प्रधानयागादेव तादृशं फलं भवति, तदकामनायां तु प्रधानवाक्योक्तमेव। अतः काम्यादाधिक्ये नित्यस्य सिद्धे तत्र तात्पर्यं श्रुतेः सिध्यति। ततः पुनरधिकविचारे स्वर्गस्यापि लोकात्मसुखभेदेन द्वैविध्ये लोकस्य दुःखसंभिन्नत्वादात्मसुखे च तदभावात् तत्र तात्पर्यं पर्यवस्यति, पुरुषार्थसिद्ध्यर्थमेव श्रुतेः प्रवृत्तत्वात्। पुनस्ततोऽप्यधिकविचारे तु 'न कर्मणा न प्रजये'ति, 'नैनं कृताकृते तपत' इति, 'एष नित्यो महिमा' इत्यादिवाक्येषु कर्मणां तत्फलानां च जघन्यत्वबोधनात् त्यागस्या-वश्यकत्वात् यावज्जीवाधिकारादिवाक्ये कर्मनित्यतायाश्च बोधनान्मुख्याधिकाराभावे फला-पेक्षां कर्मासक्तिं च विहाय नित्यं कार्यमिति सिध्यति। अन्यथा द्विविधवाक्यविरोधापरि-हारात् दुःखासंभिन्नसुखस्य केवलकर्मणाङ्गीकारे ज्ञानवाक्यवैयर्थ्यस्यापातात्। अधिकारभे-दानङ्गीकारे ज्ञानकर्मणोरव्यवस्थितविकल्पप्रसक्तेश्चेति। तस्मात् स्वानिन्द्यमेवमेव कर्म श्रुति-र्विदधातीति ज्ञानं स्वतंत्रमेव फलसाधकम्। एवं भक्तावपि बोध्यम्। 'दानव्रततपोहोमजप-स्वाध्यायसंयमैः। श्रेयोभिर्विविधैश्चान्यैः कृष्णे भक्तिर्हि साध्यत' इति भक्तौ कर्मफलत्वस्य, 'शृण्वन्ति गायन्ति गृणन्त्यभिक्ष्णशः स्मरन्ति नन्दन्ति तवेहितं जनाः, त एव पश्यन्त्य-चिरेण तावकं भवप्रवाहोपरमं पदाम्बुजम्' इति साक्षाद्दर्शनसाधनत्वस्य चोक्तत्वात्। तेन ज्ञानाङ्गतया भक्त्यङ्गतया वा मन्दमध्यमाधिकारिभिः कर्म कर्तव्यमिति सिद्धम्॥ २०॥

**स्तुतिमात्रमुपादानादिति चेत्, न, अपूर्वत्वात्॥ २१॥**

पुनः किञ्चिदाशङ्क्य परिहरति **स्तुती**त्यादि। 'एष नित्यः' इति श्रुतौ ज्ञानवति विहितनिषिद्धकर्मणोः फलाजनकत्वेन साम्यं यदुच्यते, तज्ज्ञानस्तुतिमात्रम्। कुतः। **उपादानात्**। तयैव हि श्रुत्या कर्मकृतिस्वीकारात्, न हि कर्मकृत्यभावे तत्कृतगुण-दोषौ निषेद्धुं शक्येते, प्रसक्तेरेवाभावात्, न च निषेधवैयर्थ्यं शङ्कनीयम्। ज्ञानिनीतर-साधारण्यपरिजिहीर्षया तत्सार्थक्यात्। अतस्तया श्रुतितात्पर्यनिश्चायनस्य कर्तुमशक्यत्वात् कर्मशेषत्वं ज्ञानस्य निःप्रत्यूह**मिति चेत्**। **न**। कुतः। **अपूर्वत्वात्**। ज्ञाने कर्मफलसंबन्ध-राहित्यफलकत्वकथनस्य अन्यत्रानुक्तत्वेनापूर्वत्वात्। न हि कर्मणो वा ज्ञानस्य वा यत्फलं यत्रोच्यते, तदुक्तिरपि स्तुतिरिति वक्तुं युक्तम्, तयोरुच्छेदापत्तेः। अतः 'प्रतितिष्ठन्ती-ह वै य एता रात्रीरुपयन्ति' इत्यत्रेवात्रापि तत्फलकत्वं विधेयत्वेनैवाङ्गीकार्यम्, न स्तुति-मात्रत्वमित्यर्थः। एतदग्रे च **भावशब्दाच्चे**ति सूत्रं पठ्यते। तत्र च विधिशब्दादित्यर्थः। **तथा** चापूर्वत्वादेव न तथात्वम्, अपि तु तत्फलकतया विधीयते, 'अपि पदवित्स्या-

दिति, 'कुर्यात् क्रियेत कर्तव्यं भवेत् स्यादिति पञ्चमे । एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षण'मिति न्यायविदां स्मरणादिति । तच्च **विधिर्वे**ति सूत्रे एतच्छ्रुतिव्याख्याने विध्यंकारादेव सिद्धमित्यत उपेक्षितमिति प्रतिभाति ॥ २१ ॥

**पारिप्लवार्था इति चेत् न विशेषितत्वात् ॥ २२ ॥**

पुनः किञ्चिदाशङ्कय परिहरति त्रिभिः । **पारी**त्यादि । 'भृगुर्वै वारुणिर्वरुणं पितरमुपससार' इति, 'अधीहि भगव इति होपससाद सनत्कुमारं नारदः' इति, 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' इत्याद्युपाख्यानैर्हि ब्रह्मविद्या प्रतिपाद्यते । उपाख्यानानि तु कर्माङ्गानि । सर्वाण्युपाख्यानानि पारिप्लवे शंसन्तीति तेषां शंसनशेषत्वश्रवणात् । शंसने च शब्दमात्रप्राधान्येनार्थस्याप्राधान्यात् । अतः उपदेशाः पारिप्लवार्थाः, तथा सति उपदेशान्ताख्यानप्रतिपाद्यं ज्ञानं मन्त्रार्थवादवदप्रयोजकमिति तत्प्राधान्यं दूरापेतमिति चेत् । न । एवं ज्ञानस्याप्राधान्यं न शक्यवचनम् । कुतः । **विशेषितत्वात्** । यत्राश्वमेधप्रकरणे 'मनुर्वैवस्वतो राजे'त्यादीन्युपाख्यानानि पठितानि, तत्रानेन वाक्येन तेषां सामान्यतो विनियोगमुक्त्वा, पारिप्लवाख्यकर्मप्रस्तावे पुनर्विशेषतो विनियोगस्तेषामुक्तः 'पारिप्लवमाचक्षीते'ति, तत्र च प्रथमेऽहनि, 'मुनुर्वैवस्वतो राजा इति,' द्वितीये 'इन्द्रो वैवस्वतः' इति, तृतीये 'यमो वैवस्वतः इति । एवं विनियुज्यन्ते । अत आख्यानानां विशेषितत्वात्सर्वपदं विनियोगकृतसंकोचात् तन्मात्रपरं सन्नेतराणि संग्रहीतुं शक्तम् । अतो नानेन ज्ञानप्राधान्यप्रतिक्षेपसिद्धिरित्यर्थः ॥ २२ ॥

**तथा चैकवाक्यतोपबन्धात् ॥ २३ ॥**

हेत्वन्तरमनेनाह । यथा केवले श्रुतौ विद्याप्राधान्यं श्रुतम्, तथोपाख्यानवत्यामपि श्रुतौ, अत उभयोरर्थैक्यम् । **च** पुनरुपाख्यानेषु प्रश्नोत्तराभ्याम्, महतां प्रवृत्तिबोधनेन च विद्यामाहात्म्यज्ञापनं प्ररोचनं चाधिकं तच्च निरुपाख्यानवाक्यापेक्षितम् । एतदुक्तविद्यापेक्षा च सोपाख्यानवाक्यापेक्षितेत्युभयोरेकवाक्यता, सा चोपबन्धात् समीपे कथनादवगम्यते । अत उपाख्यानवाक्यानामनुपाख्यानवाक्यैकवाक्यतयापि ज्ञानस्य प्राधान्यमनिवार्यमित्यर्थः ॥ २३ ॥

**अत एव चाग्नीन्धनाद्यनपेक्षा ॥ २४ ॥**

उपपत्त्यन्तरमाह **अत एवे**त्यादि । यतो ज्ञानी ज्ञानेन स्वयमेव यज्ञात्मको भवतीति श्रूयते । 'तस्यैवं विदुषो यज्ञस्यात्मा यजमानः, श्रद्धा पत्नी, शरीरमिध्मम्' इत्यादिना । अत एव हेतोर्ज्ञानिनो जरामर्यग्निहोत्रेऽग्नीन्धनाद्यनपेक्षा । अग्निहोत्रादिसाधनभूतबाह्यसामग्रीं विनापि तत्सिद्धिर्विदुषो ज्ञानमात्रेण बोध्यते । तथा च यदन्यस्य यज्ञतासंपादकं तस्य स्वकार्यसाधने कथं यज्ञापेक्षा भवेदिति सूचितम् । तस्मात् उपक्रमे यदुक्तं

'पुरुषार्थोऽतः शब्दा'दिति ज्ञानस्य स्वातंत्र्येण पुरुषार्थसाधकं तन्निःप्रत्यूहं सिद्धम् ॥ २४ ॥
इति प्रथमं पुरुषार्थोत इत्यधिकरणम् ॥ १ ॥

**सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत् ॥ २५ ॥** (३-४-२-)

अतः परमिदं चिन्त्यते । ज्ञाने कर्मणां फलोपकारित्वाभावेऽपि स्वरूपोपकारित्वमस्ति न वेति । तत्र 'आचार्यवान् पुरुषो वेद' इति श्रुतौ गुरूपसत्तितदुपदेशाभ्यामेव ज्ञानस्य सिद्धौ बह्वायाससाध्यस्य कर्मणः किमर्थं साधनताङ्गीकार्या । तस्मान्नेति प्राप्तम् । तत्र सिद्धान्तमाह **सर्वे**त्यादि । सर्वेषामपेक्षा सर्वापेक्षा । पुरुषोत्तमसाक्षात्काररूपायां विद्यायां सर्वेषां वेदान्तार्थज्ञानकर्मभक्तीनां साधनानामस्त्याकाङ्क्षा । कुतः । **यज्ञादिश्रुतेः** । पूर्वस्मिन्काण्डे यज्ञानाम्, उत्तरस्मिंश्च ज्ञानभक्त्योरादिपदसंगृहीतयोः श्रावणात् । नन्वेवं सति ज्ञानद्वारा कर्मण एव कारणत्वं कुतो नोच्यत इत्यत आह **अश्ववदि**ति । यथा स्वेष्टदेशप्राप्तावेवाश्वापेक्षा, व्यवधानभूतदेशान्तरातिक्रमस्य तत्साध्यत्वात्, न तु प्राप्ते स्वेष्टदेशे । तथाधिभौतिकादित्रिविधप्रतिबन्धनिवृत्त्यर्थं क्रमेण कर्मज्ञानभक्तीनामपेक्षा, नतु ज्ञानोत्तरमपि । पूर्वाधिकरण एवानुपपत्तीनामुक्तत्वात् । चकारेण केवलपुष्टिमार्गीयस्य तदनपेक्षापि समुच्चीयते । वरणश्रुत्यनुरोधात् । तेन हीनमध्यमयोरधिकारिणोर्ज्ञानस्य स्वरूपोत्पत्तौ कर्मादीनामस्त्यपेक्षेति सिद्धम् ॥ २५ ॥

**शमदमाद्युपेतः स्यात्, तथापि तु तद्विधेस्तदङ्गतया तेषामवश्यानुष्ठेयत्वात् ॥ २६ ॥**

ननु यज्ञादिश्रुतेरित्यनेन यज्ञादीनां विद्यास्वरूपोपकारितत्वं साधितम्, तन्न युक्तम् । यज्ञादीनां साधनताबोधिकायां 'तमेतं वेदानुवचनेन' इति श्रुतौ लिङ्गादिप्रत्ययाभावेन विधेः कल्पनं तृतीयाश्रुतिमात्रेण कर्तव्यम्, तदशक्यम् । विद्यास्तुत्यर्थं यज्ञादिषु तत्कारणतानुवादस्यापि कल्पयितुं शक्यत्वात् । 'तस्मादेवंवित् शान्तो दान्तः' इति श्रुत्या विद्यार्थं साधनान्तरविधानस्यापि दर्शनात् । भक्तिमार्गे तु तदपि न, 'ॐकारेणान्तरितं कृत्वा यो जपति गोविन्दस्य पञ्चपदं मनु तस्यैवासौ दर्शयेदात्मरूप'मित्यादिसाधनान्तरश्रावणाच्च । अतो न पूर्वोक्तं साधीय इत्यत आह **शमे**त्यादि । **शमदमाद्युपेतो** ज्ञानमार्ग इव भक्तिमार्गे स्यादेव । इहामुत्रफलनैराश्येन भगवति मनोयोजने स्वभावादेव तत्सिद्धेः । **तुः** पूर्वपक्षनिरासे । यद्यप्येवं तथापि **तद्विधेः** शमादिविधे**स्तदङ्गतया** 'आत्मन्येवात्मानं पश्येत्' इति ज्ञानमार्गीयज्ञानाङ्गतया **तेषां** शमादीनां ज्ञानमार्गे**ऽवश्यानुष्ठेयत्वात्**, बुद्धिपूर्वकमनुष्ठेयत्वात्तद्विधानम् । तथा चानया श्रुत्या ज्ञानमार्गीयस्य साधनान्तरमधिकं बोध्यते । तन्मार्गे तेषां सन्निपत्त्योपकारकत्वादवश्यानुष्ठेयत्वम्, भक्तिमार्गे च स्वाभाविकत्वम् । तावतापि यज्ञादीनामारादुपकारकाणामनिषेधान्न निवृत्तिरिति तेऽप्यनुष्ठेया एव, न च लिङ्गाद्यभावो बाधकः । 'विविदिषन्ती'ति फलसंयोगस्यापूर्वस्य तत्र सत्त्वेन

रात्रिसत्रवत् दिष्टाग्निहोत्रे 'उपरि हि देवेभ्यो धारयन्ति' इति समिद्धारणवच्च अपूर्वत्वेनैव विधेः कल्पयितुं शक्यत्वात् । अतो यज्ञादीनां हेतुत्वमदण्डवारितमितिपूर्वोक्तहेतोर्न बाधितत्वमित्यर्थः ॥ २६ ॥

**सर्वान्नानुमतिश्च प्राणात्यये तद्दर्शनात् ॥ २७ ॥**

ननु यज्ञादेर्यदुपकारकत्वं तत् सत्त्वशोधनद्वारा वाच्यम् । तदयुक्तम् । 'आहारशुद्धौ सत्त्वशुद्धिः' इति सत्त्वशोधनश्रुतिविरुद्धयोः 'न ह वा एवंविदि किञ्चनान्नं भवति' इति, 'न ह वा अस्यानन्नं जग्धं भवति' इति छान्दोग्यवाजसनीयश्रुत्योः सर्वान्नभक्षणानुमतिदर्शनेन सत्त्वशोधनस्यानावश्यकत्वेऽवगते तदर्थं शमादीनां यज्ञादीनां च विधानाङ्गीकारस्याप्रयोजकत्वात् । अतः 'शान्तो दान्तः' इति शमादिवाक्यं 'तमेतं वेदानुवचनेन' इति यज्ञादिवाक्यं ज्ञानिस्तावकमेव, न तु विधायकमित्यत आह **सर्वे**त्यादि । उक्तश्रुतौ या सर्वान्नानुमतिः, सा **प्राणात्यये** प्राणनाशे उपस्थिते, प्राणधारणस्य ज्ञानान्तरङ्गसाधनत्वेनावश्यकतया तदर्थस्य प्राणपोषकस्याहारस्य बहिरङ्गत्वादनुमतिः क्रियते । तत्र प्रमाणमाह **तद्दर्शना**दिति । 'चाक्रायणः किलर्षिरिभ्येन सामिखादितान् कुल्माषांश्चखाद' इति छान्दोग्ये श्रावणात् । तथा चापद्येवानुमतिः, न सर्वदा, अतः सत्त्वशोधनस्यावश्यकत्वं न हन्यते, तेषामारादुपकारकाणामाहारशुद्धिं यज्ञादीनां सन्निपत्योपकारकाणां शमादीनां विधेयत्वमेवावश्यकत्वादिति न तेषां वाक्यानां ज्ञानिस्तावकत्वमित्यर्थः ॥ २७ ॥

**अबाधाच्च ॥ २८ ॥**

ननु भवत्वेवम्, तथापि अशुद्धाहाराच्चित्ताशुद्धिस्तु स्यादेव, द्रव्यस्याशुद्धत्वादित्यत आह **अबाधा**दिति । आपदि तथान्नभक्षणे तज्जनितप्रतिबन्धाभावान्न चित्ताशुद्धिरित्यर्थः ॥ २८ ॥

**अपि स्मर्यते ॥ २९ ॥**

अत्रापि बीजमाह **अपी**ति । 'जीवितात्ययमापन्नो योऽन्नमत्ति यतस्ततः, लिप्यते न स पापेन पद्मपत्रमिवाम्भसा' इति स्मर्यते । तथा च यत्राविदुषोऽप्यदोषः, तत्र विदुषः स कुतः शङ्कितुमपि शक्यते । तस्मात् तन्न तस्य ज्ञानबाधकमित्यर्थः ॥ २९ ॥

**शब्दश्चातो कामकारे ॥ ३० ॥**

सिद्धमाह **शब्द** इत्यादि । 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन, ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' इत्यादिवाक्याद्यतो ज्ञानं सर्वकर्मदहनसमर्थम्, अतः फलदशायां **कामकारे** यथेष्टाचारे न दोषः । अतश्च अत एव साधनदशायामकामकारे कामकाराभावार्थे शब्दः 'शान्तो दान्त' इत्यादिरूपः श्रूयते । तथा च ज्ञानभक्तिमा-

र्गीययोः साधनदशायामारादुपकारकाणां सन्निपत्त्योपकारकाणां च करणमावश्यकमिति सिद्धम् ॥ ३० ॥ इति द्वितीयं सर्वापेक्षेत्यधिकरणम् ॥ २ ॥

**विहितत्वाचाश्रमकर्मापि ॥ ३१ ॥ ( ३-४-३. )**

एवं ज्ञानस्य कर्मनाशकत्वे सिद्धे जातज्ञानस्याश्रमकर्म कर्तव्यं न वेति चिन्त्यते । तत्र फलस्य जातत्वात् कृतस्यापि कर्मणो ज्ञानेन नाश्यत्वात् न कर्तव्यमिति प्राप्ते, आह **विहितेत्यादि** । यथा ज्ञानिनाप्यनापदि शिष्टानामेवान्नं भक्षणीयं विहितत्वात्, तथाश्रमकर्मापि विहितत्वादेव कर्तव्यम्, तथा चानापद्यशिष्टान्नभक्षणवन्नित्यत्यागोऽपि दोषाय, निषिद्धत्वस्य तौल्यादित्यर्थः ॥ ३१ ॥

**सहकारित्वेन च ॥ ३२ ॥**

शमदमादीनामन्तरङ्गसाधनानां सहकारीण्याश्रमकर्माणीति तद्रहितैः शमादिभिरपि ज्ञानं न स्थिरीकर्तुं शक्यते । अतस्तानि कर्तव्यान्येवेत्यर्थः । अत्राश्रमधर्माणां सहकारित्वोक्त्या ज्ञानाग्निस्मृतौ ज्ञानस्य कर्मणां यः संसारवासनाजनकत्वरूपः स्वभावः, स एव नाश्यते, न तु स्वरूपमिति ज्ञाप्यते, तेन न कश्चिद्विरोध इति ॥ ३२ ॥

**सर्वथापि त एवोभयलिङ्गात् ॥ ३३ ॥**

एवं पूर्वकक्षाविश्रान्तं ज्ञानमार्गीयज्ञानस्थैर्यसाधनमुक्त्वा, भक्तिमार्गीयज्ञानभक्तिस्थैर्यसाधनानि वदन् तेषामावश्यकत्वमप्याह **सर्वथे**त्यादि । त एव श्रवणकीर्तनादयो भगवद्धर्मा एव, सर्वथापि वर्णाश्रमादिधर्माणां भगवद्धर्माणां च युगपदुपस्थितौ वर्णादिधर्माणामनुरोधमकृत्वापि कर्तव्या इत्यर्थः । तेषामावश्यकत्वे हेतुमाह **उभयलिङ्गा**दिति । उभयोक्तं लिङ्गम्, उभयलिङ्गम्, तस्मात्, श्रुत्युक्तात्स्मृत्युक्ताच्च लिङ्गादित्यर्थः । श्रुत्युक्तं लिङ्गं तु, 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः, नानुध्यायाद्बहूञ्छब्दान् वाचो विग्लापनं हि तत्' इति । अत्र प्रथमपाद एवकारेण भगवदतिरिक्तनिषेधपूर्वकं यत् तद्विज्ञानविधानम्, तद्विज्ञानसाधनीभूतश्रवणकीर्तनाद्यात्मकतद्यत्नालिङ्गम् । द्वितीये पादे, प्रज्ञापदोक्तं तत्स्मरणं यद्विहितं तदपि, तत उत्तरार्द्धे तदितरानेकशब्दविचारनिषेध इतरशब्दनिन्दा च तद्ध्यानस्य दुष्टत्वं बोधयन्ती भगवद्धर्माणामवश्यकर्तव्यत्वे लिङ्गम् । स्मृत्युक्तं तु, 'शृण्वन्ति गायन्ति गृणन्ति अभिक्ष्णश' इति, 'सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः' इति, अत्र श्रवणादीनामभीक्ष्ण्यं सातत्यं चावश्यकर्तव्यतालिङ्गम् । एतेन भगवद्धर्माणामात्मधर्मत्वेनान्तरङ्गत्वात् आश्रमधर्माणां देहधर्मत्वेन बहिरङ्गत्वात् भगवद्धर्माविरोधेनैव ते कर्तव्या इति स्थितम् । उक्तश्रुतौ भगवद्धर्मा एवोच्यन्ते इत्यत्र लिङ्गं तु तद्ब्राह्मणसमाप्तौ 'अयमात्मा सर्वस्य वशी सर्वस्येशानः' इत्यादिभगवन्माहात्म्यकथनम् । यद्यपि सूत्रे तच्छब्देन सन्निहितानां पूर्वोक्तानामाश्रमधर्माणां परामर्शः संभाव्यते, तथापि हेतुबोधके विषयवाक्ये भगवद्धर्माणामेव परामृष्टतया तेषामेवावश्यकत्वं साध्यवाक्ये

विवक्षितमिति तच्छब्दस्य प्रसिद्धार्थकत्वमेव बोध्यम्, साध्यसिद्धेर्हेत्वधीनत्वादिति न कोऽपि शङ्कालेशः ॥ ३३ ॥

**अनभिभवं च दर्शयति ॥ ३४ ॥**

प्राधान्येन भगवद्धर्मा एव कर्तव्या इत्यत्र हेत्वन्तरमनेनाह **अनभिभव**मिति । 'सर्वं पाप्मानं तरति, नैनं पाप्मा तरति, सर्वं पाप्मानं तपति, नैनं पाप्मा तपति' इत्यनेन भगवद्धर्मानुरोधादाश्रमकर्माकरणजदोषैरभिभवाभावं च श्रुतिर्दर्शयति, यतो भगवद्धर्मा एवोत्तमानि साधनानीति तान्येवावर्तनीयानीत्यर्थः ॥ ३४ ॥

**अन्तरा चापि तु तद्दृष्टेः ॥ ३५ ॥**

उक्तोपष्टंभार्थं आश्रमधर्माणां हीनतां दर्शयति । **तद्दृष्टेः**, तस्मिन्भगवत्येव दृष्टिस्तात्पर्यं यस्य पुंसस्तस्य **अन्तरा** आश्रमधर्मा व्यवधानभूताः इत्यपि श्रुतिर्दर्शयतीति पूर्वेण संबन्धः । श्रुतिस्तु, 'एतद्ध स्म वै तत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नो एवायमात्मा नायं लोक ' इति, अत्र ऋणापाकरणहेतुत्वेन लौकिकोत्कर्षहेतुत्वे च प्रजाया अभीष्टत्वेऽपि तदुत्पादनव्यासङ्गेन भगवदानन्दानुभवेऽन्तरायो भविष्यतीति भगवद्दृष्ट्या प्रजायामुपेक्षां दर्शयति । तस्मादाश्रमधर्मा भगवद्धर्मेभ्यो हीना इत्यर्थः ॥ ३५ ॥

**अपि स्मर्यते ॥ ३६ ॥**

कैमुतिकेनापि तत उत्कर्षं भगवद्धर्माणामाह **अपी**त्यादि । 'तस्मान्मद्भक्तियुक्तस्य योगिनो वै मदात्मनः, न ज्ञानं न च वैराग्यं प्रायः श्रेयो भवेदिह' इति वाक्ये भगवद्भक्त्यान्तरायता ज्ञानवैराग्ययोरश्रेयबोधनात्स्मर्यते । तथा सति बहिरङ्गानामन्तरायत्वे किं वाच्यमित्यर्थः ॥ ३६ ॥

**विशेषानुग्रहश्च ॥ ३७ ॥**

ज्ञानादिमार्गेभ्यो भक्तिमार्गस्य फलतोऽप्युत्कर्षमाह **विशेष** इत्यादि । स्मर्यत इत्यत्राप्यनुषज्यते । स च भगवतो भक्ताधीनत्वरूपः । ज्ञानिषु मुक्तिपर्यन्त एव, न ततो विशेषरूपः । भक्तेषु तु ' अहं भक्तपराधीनो ह्यस्वतंत्र इव द्विज' इति नवमस्कन्धे, दशमे च 'एवं संदर्शिता हरिणा भक्तवश्यता, स्ववशेनापि कृष्णेन यस्येदं सेश्वरं वशः' इति स्मर्यते । अतः फलतोप्युत्कर्ष इत्यर्थः ॥ ३७ ॥

**अतस्त्वितरज्ज्यायो लिङ्गाच ॥ ३८ ॥**

गूढाभिसंधिमुद्घाटयन् फलितार्थमत्राह **अत** इत्यादि । **अतः** पूर्वोक्तश्रुतिरूपाद्धेतोः, **इतरत्**, भक्तिमार्गीयं भगवदीयत्वम्, **ज्यायः**, मुक्तिरूपात् फलादप्यधिकमिति फलितार्थः । अत्र हेत्वन्तरमाह **लिङ्गाचे**ति । मुक्तानां तु केवलं स्वरूपमेवास्ति निर्मुक्तमायम्, न तु देहेन्द्रियादिकं भजनानन्दानुभवयोग्यं निरध्यस्तत्वात्, भक्तानां तु देहेन्द्रि-

यादिकमपि मायातत्कार्यरहितत्वेनानन्दरूपत्वेन च भगवदुपयोग्येवेति, तथा च तेषां भजनानन्दभावकायाः लिङ्गस्थूलदेहात्मकसामग्र्या आधिक्यादिदं ज्याय इत्यर्थः । भगवतो मुक्तोपसृप्यत्वस्य पूर्वमुक्तत्वात्, श्रीभागवते च 'देहेन्द्रियासुहीनानां वैकुण्ठपुरवासिनाम्' इति देहादिहीनत्वेऽपि पुरवासित्वान्यथानुपपत्त्या जडात्मकदेहेन्द्रियादिभिन्नानन्दात्मकतत्सूचनाच्च तथेति हृदयम् । तेन स्वरूपतः साधनतः फलतश्च ज्ञानादिभ्यो भगवद्धर्माणामुत्कृष्टत्वात् आश्रमधर्माणां तेषां चैककालसन्निपाते भगवद्धर्मा एव कार्याः, अन्ये तु गौणकाल इति सिद्धम् ॥३८॥ इति तृतीयं विहितत्वाच्चाश्रमकर्मेत्यधिकरणम्॥३॥

**तद्भूतस्य तु नातद्भावो जैमिनेरपि नियमातद्रूपाभावेभ्यः ॥३९॥(३-४-४.)**

अथेदं चिन्त्यते । तदीयानां क्वचित्सायुज्यमपि भवति, किं वा न भवतीति । तत्र भक्तिमार्गस्यापि साधनरूपत्वात्तस्यापि मुक्तावेव पर्यवसानात् तदीयत्वस्यापि साधनावस्थायामुत्कृष्टरूपत्वात् तस्यापि मुक्तावेव पर्यवसानमिति भक्तिज्ञानमार्गयोः फलतो न कश्चिद्विशेष इति प्राप्ते, आह **तद्भूते**त्यादि । तुशब्देन मर्यादामार्गीयतदीयत्वव्यवच्छेदः । **तद्भूतस्य** पुष्टिमार्गीयभगवद्भावं प्राप्तस्य **जैमिनेरपि** कर्मजडस्यापि, **नातद्भावः** न भगवद्भावतिरोधानम् । अत्र जैमिनिग्रहणं कैमुतिकन्यायसूचनार्थम्, जैमिन्युपरि चेदनुग्रहः स्यादयमत्यन्तहीनाधिकार्यपि तदीयत्वान्न हीयेत, किमुत अन्यो मध्यमाधिकारी ज्ञानादिनिष्ठ इति । तत्र हेतूनाह **नियमे**त्यादि । नियमात्, अतद्रूपात्, अभावाच्चेत्यर्थः । तत्र नियमस्तावत्, तैत्तिरीयके 'ते ते धामानि' इत्यादिमन्त्रेषु गोकुलादीनि लीलास्थानानि निरूप्य, तत्र कृतानि भगवत्कर्माणि 'पश्यत' इत्यपि निरूप्य, पुनः 'तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः' इत्यनेन सूरीणां सदा तत्स्थानदर्शनमुच्यते । सूरिपदेन पुरुषोत्तमज्ञानवन्तो भक्ता उच्यते । अतस्तेषामेव सदा तद्दर्शनं नियम्यते । यदि तेषां मुक्तिः स्यात्, तदा स नियमो भज्येत, अतो नियमात्तथेति । भक्तिमार्गीयतदीयत्वसाधनरूपतावारणायाह **अतद्रूपे**ति । भावप्रधानो निर्देशः । अतद्रूपत्वात् । उक्तभगवदीयत्वस्य मुक्तिफलरूपत्वात्, 'मुक्तानामपि सिद्धानां नारायणपरायणः, सुदुर्लभः प्रशान्तात्मा' इति श्रीभागवतस्मृतेः । 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः, अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुते' इति बृहदाराण्यकश्रुतौ पूर्वं 'ब्रह्मैव सन् ब्रह्माप्येती'ति ब्रह्मणि जीवस्य लयमुक्त्वा, लयस्वरूपं विवेक्तुमस्मिन्मन्त्रे सर्वकामविमोकेऽस्यामृतत्वभवनमुक्त्वा, 'अत्र ब्रह्म समश्नुते' इति तुरीयपादेऽस्मिँल्लोक एव ब्रह्मभोग उच्यते, 'समश्नुते' इत्यस्य 'सोऽश्नुते' इतिवत् 'अश भोजन' इत्यस्य प्रयोगात्, संभवति श्रुत्यन्तरैकवाक्यत्वेऽर्थान्तरस्यान्याय्यत्वात् । अतो भक्तिमार्गीयतदीयत्वस्य मुक्तिफलत्वान्न तस्य साधनरूपत्वमित्यर्थः । किंच, **अभावात्** । फलं हि साधनादुत्तमं भवति, मुक्तिस्तु न भगवदीयत्ववत् उत्कृष्टा । तदुक्तं पञ्चमस्कन्धे पूर्वं भक्तिमार्गं निरूप्य 'तयैव परया निर्वृत्या ह्यपवर्गमा-

त्यन्तिकं परमपुरुषार्थमपि स्वयमासादितं नो एवाद्रियन्ते भगवदीयत्वेनैव परिसमाप्त-सर्वार्था' इति । तथा चैतस्य भगवदीयत्वस्य मुक्तितोऽप्युत्कृष्टत्वेन इत उत्कृष्टस्यान्यस्याभावादस्य न कदाप्यभाव इति सिद्धमित्यर्थः ॥ ३९ ॥ इति चतुर्थं तद्भूतस्येत्यधिकरणम् ॥ ४ ॥

**न चाधिकारकमपि पतनानुमानात्तदयोगात् ॥ ४० ॥ (३-४-५.)**

अथेदं विचार्यते । पुष्टिमार्गेऽङ्गीकृते, अनुमीयते श्रुतिरनेनेत्यनुमानं स्मृतिः, पतनबोधकमनुमानं पतनानुमानम्, तस्मात् । ब्रह्मादिलोकाधिकारं दत्त्वा अधिकारं फलं ददाति, न वेति । तत्र ध्रुवायेव ददातीति प्राप्ते, तत्राह **न** चेत्यादि । **आधिकारिकमपि** अधिकारसम्बन्धफलं चकारादधिकारमपि न तेभ्यो न ददात्येव । कुतः । **पतनानुमानात्**, 'आब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुन' इति पतनबोधकस्मृतेरित्यर्थः । किंच । **तदयोगात्** । तादृशे भगवदीये पतनायोगात् । तथाच 'नैच्छन्मुक्तिपतेर्मुक्तिं पश्चात्तापमुपेयिवान्' इति वाक्येन ध्रुवस्य मर्यादामार्गीयत्वावगमात् तादृशस्याधिकारोत्तरं तां ददाति, ये पुनः पुष्टावङ्गीकृताः, तेषां तु मुक्तावप्याकाङ्क्षाराहित्यात् तामेव न ददातीति दूरापेतमाधिकारिकमित्यर्थः ॥ ४० ॥

**उपपूर्वमपि त्वेके भावमशनवत्तदुक्तम् ॥ ४१ ॥**

हेत्वन्तरमाह उपेत्यादि । तु पुनः, **एके** भक्ताः **उपपूर्वमपि**, आधिकारिकं फलमधिकारं उपपूर्वकपतनमपि मन्यन्ते । तथाचाधिकारिके फलेऽधिकारे च पतनमात्रं न हेयत्वप्रयोजकम्, किन्तु उपपतनरूपत्वमपि तत्प्रयोजकम्, भक्तिभावाच्च्युतेरित्यर्थः । अधिकारसमाप्तौ कदाचिदनुग्रहाशायाः संभवाच्च तस्योपपतनरूपत्वम्, मुक्तौ त्वपुनरावृत्तेः सापि नेति महापतनरूपत्वमिति भावः । तदुक्तं श्रीभागवते 'नारायणपरा लोके न कुतश्चन बिभ्यति, स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिनः' इति । किंच । **भावमशनवत्**, भक्तिमार्गीयं भावं साक्षाद्भगवत्स्वरूपभोगवन्मन्यन्ते, तदुक्तं श्रीभागवते षष्ठस्कन्धे नवमाध्याये 'अथ ह वाव तव महिमामृतविप्रुशा' इत्यादिना गद्येन । जीवस्य साक्षाद्भगवद्भोगोऽसंभावित इत्याशङ्कायामाह **तदुक्त**मिति । 'सोऽश्नुते सर्वान् कामान् सह ब्रह्मणा विपश्चिता' इति, 'अत्र ब्रह्म समश्नुत' इति श्रुतिभ्याम्, तत् साक्षाद्ब्रह्मरसाशनमुक्तम् । तथा च पूर्णानुग्रहपात्रेषु आधिकारिकं फलमधिकारं च न ददातीति सिद्धम् ॥ ४१ ॥ इति पञ्चमं नचाधिकारिकाधिकरणम् ॥ ५ ॥

**बहिस्तूभयथापि स्मृतेराचाराच्च ॥ ४२ ॥ (३-४-६.)**

अथेदं विचार्यते । प्रचुरभगवद्भावमात्रवतः साक्षात्स्वरूपरसभोगवतो वा गृहत्यागः कार्यो नवेति । तत्र 'मद्वार्तायातयामानां न बन्धाय गृहा मताः' इति वाक्यात् प्रचुरभाववतो गृहाणां बन्धकत्वं न, साक्षाद्भगवत्सम्बन्धफलस्य जातत्वेन साधनभूतो गृहत्यागो न

कार्य इति प्राप्ते, आह बहिरित्यादि । तुशब्द उक्तं पूर्वपक्षं व्यावर्तयति । उभयथापि भावमात्रे साक्षाद्भगवत्संबन्धे वा, इति प्रकारद्वयेऽपि, बहिः गृहात् बहिर्गमनम्, गृहत्याग इतियावत्, स कर्तव्य एव । कुतः । **स्मृतेराचाराच्च** । 'त्वं तु सर्वं परित्यज्य स्नेहं स्वजनबन्धुषु, मय्यावेश्य मनः सम्यक् समदृग्विचरस्व गाम्' इत्येकादशस्कन्धे भगवद्वाक्यरूपस्मृतेः, उद्धवस्य तथाचाराच्च, उभयविधस्यापि भक्तस्य गृहत्यागः कर्तव्य इत्यर्थः । न चोर्ध्वरेतःसूत्रे 'यदहरेव' इत्यादिश्रुतेर्गृहत्यागः प्रव्राजात्मा विचारित एवेति, किं पुनर्विचारेण इति शङ्क्यम् । अस्य तदतिरिक्तत्वात्, अत्र भक्तं प्रत्युपदेशेनाधिकारिभेदता मार्गभेदेन तथा निश्चयात् । न च फलस्य जातत्वात् 'न बन्धाय गृहाः' इति वाक्याच्च यथायथं तयोर्गृहत्यागवैयर्थ्यं शङ्क्यम्, तयोर्गृहस्य मुक्तिप्रतिबन्धकत्वाभावेऽपि तत्र व्यासङ्गान्तरावश्यकत्वात् गृहस्य प्रभुस्वरूपरसास्वादप्रतिबन्धसंभवात्, तत्त्यागे च विप्रयोगेन तदनुभवस्य सुखेन संभवात् त्यागस्य तयोरप्यावश्यकत्वादिति । यद्यप्ययं भक्त्यौत्कट्यस्वभावादेव तयोः संभवति, तथाप्यस्याश्रमान्तरत्वाभावेनावैधत्वं शङ्क्येतेति तन्निरासायायमनुज्ञातः । एतस्यापि मूलमेकादशस्कन्धे 'ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः, सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः' इत्यादय एकादशश्लोका ज्ञेयाः । तेन यथा संवर्तादीनां ज्ञानिनाम्, तथायं भक्तानामिति ज्ञेयम् । एतस्यैव प्रपञ्चनं संन्यासनिर्णयग्रन्थ इति च ॥ ४२ ॥

**स्वामिनः फलश्रुतेरित्यात्रेयः ॥ ४३ ॥**

भवत्वयं संन्यासो वैधः, तथापि किं भक्त्यौत्कट्यस्वभावादेव सिध्यति, उत विहितत्वमवगत्य कार्य इत्याकाङ्क्षायां सूत्रद्वये व्यवस्थामाह **स्वामिन** इत्यादि । पुष्टिमार्गीयभक्तस्यास्मिन् विहितत्वादिज्ञानमप्रयोजकम्, तत्र हेतुः **स्वामिनः फलश्रुतेरि**ति । 'नायमात्मा' इति श्रुतौ स्वामिनो भक्तिमार्गाधिष्ठातुर्भगवतो गोकुलेशादेव, 'यमेवैष वृणुते तेन लभ्यः' इत्यनेन फलस्य भगवल्लाभरूपस्य श्रावणादिति आत्रेयो दत्त आचार्यो मन्यते । तथा च भक्त्यौत्कट्यस्वभावादेव प्राप्तत्वात् न विहितत्वज्ञानमप्यपेक्षत इत्यर्थः ॥ ४३ ॥

**आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४४ ॥**

द्वितीयं पक्षमाह **आर्त्विज्यमि**त्यादि । सर्वत्यागपूर्वकं यद्बहिर्गमनं भगवत्समीपगमनं तत् आर्त्विज्यं भक्तस्यर्त्विक्कर्मेत्यौडुलोमिराचार्यो मन्यते । तस्यायमाशयः । यजमानो हि स्वकार्यार्थमृत्विज आदौ वृणीते, तथा भगवानपि 'तस्मादेकाकी न रमत' इत्यादिश्रुतेः स्वक्रीडायां जीवान् वृणीते इति 'यमेवैषः' इति श्रुत्युक्तं वरणं तदर्थम् । किंच, तत्र यथा 'यूनः स्थविरान्वा' इति वाक्यादेकरूपाणामेव वरणम्, तथात्र सर्वात्मभाववत्त्वेनैकरूपाणाम् । कर्मणो बाह्यत्वाद्देहधर्मेण वयसैकरूपम्, अत्र च लीलायां मनस एव प्राधान्यादान्तरं तत् । भक्तानामृत्विक्त्वेन निरूपणे हेतुत्वेन वरणस्य तात्पर्यान्तरमाह **तस्मै**

हि **परिक्रीयत** इति । हि यतो हेतोः **तस्मै** यजमान आरब्धकर्मसांगत्वायर्त्विक् **परिक्रीयते**, वरणेन स्वीयः संपाद्यते । तथा च प्रकृतेऽपि स्वचिकीर्षितलीलासाङ्गत्वाय तद्वरणम् । अतो भगवदिच्छामवगत्य बुद्धिपूर्वकं प्रयत्नेन गृहत्याग इत्यर्थः ॥ ४४ ॥

**श्रुतेश्च** ॥ ४५ ॥

आथर्वणे गोपालतापनीये 'भक्तिरस्य भजनं तदिहामुत्रोपाधिनैवामुष्मिन् मनःकल्पनमेतदेव च नैष्कर्म्य'मिति भक्तेः संन्यासरूपत्वश्रावणादपि स कार्य इत्यर्थः ॥ ४५ ॥ इति षष्ठं बहिस्तूभयथेत्यधिकरणम् ॥ ६ ॥

**सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत्** ॥ ४६ ॥ (३-३-७.)

ननु 'यमेवे'ति श्रुतिवरणमात्रं साधनं दर्शन आह । 'शान्तो दान्तः' इति श्रुतिस्तु शमदमादिरूपं साधनान्तरमाह । एवं श्रुत्योर्विरोधे किमादरणीयम्, किं नेति भवति संशयः । तत्र श्रुतित्वाविशेषादन्यतरबाधायोगेन समुच्चय एव युक्त इति प्राप्ते निर्णयमाह **सहकारी**त्यादि । वरणे सहकार्यन्तरस्य शमादेर्यो विधिः, स पक्षेण, वरणं हि पुष्टिमर्यादाभेदेन द्विधोच्यते,तत्र मर्यादापक्षेण,पुष्टौ तु न तदपेक्षेति न श्रुत्योर्विरोधगन्धोऽपि, भिन्नाधिकारादित्यर्थः। ननु एतानि मानसाभ्यन्तरङ्गाणि साधनानि कुतः पाक्षिकाणि क्रियन्त इत्यत आह **तृतीय**मित्यादि । श्रुतौ हि कायिकादिभेदेन साधनं त्रिविधं विधीयते । तत्र तृतीयं मानसिकं मुख्यम् । तदपि **तद्वतो** मार्यादिकवरणजन्यस्नेहवतोऽपि तावदेव कर्तव्यम्, यावन्न पूर्णस्नेहोदयः । तत्र दृष्टान्तो **विध्यादिव**दिति । यथा तद्वतो विधिस्तदादिरर्थवादो वा न प्रवृत्तिप्रयोजकः, स्वत एव स्नेहस्वभावेन प्रवृत्तिसंभवात्, तथा विद्यात्मकफलासौ शमादिकं मानसं साधनमपि न प्रयोजकम्, स्नेहादेव तत्संभवादिति । मानसिकस्यापि यत्राप्रयोजकत्वम्, तत्र कायिकवाचिकयोः किं वाच्यमित्याशयेनात्र तृतीयमेवोक्तम् । तेन पुष्टिमार्गे वरणेतरस्य नाकाङ्क्षा, मर्यादामार्ग एव तु तदाकाङ्क्षेति सिद्धम् ॥ ४६ ॥ इति सप्तमं सहकार्यन्तराधिकरणम् ॥ ७ ॥

**कृत्स्नभावात्तु गृहिणोपसंहारः** ॥ ४७ ॥ (३-४-८.)

ननु छान्दोग्यान्ते 'आचार्यकुलाद्वेदमधीत्य, यथाविधानं गुरोः कर्मातिशेषेणाभिसमावृत्य, शुचौ देशे स्वाध्यायमधीयानो धार्मिकान्विदधदात्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य, अहिंसन् सर्वाणि भूतानि, अन्यत्र तीर्थेभ्यः स खल्वेवं वर्तयन् यावदायुषं ब्रह्मलोकमभिसंपद्यते, न च पुनरावर्तते न च पुनरावर्तते' इति श्रूयते । वाजसनेयिशाखायां तु, 'तद्ध स्म वैतत्पूर्वे ब्राह्मणा अनूचाना विद्वांसः प्रजां न कामयन्ते' इत्युपक्रम्य, 'अथ भिक्षाचर्यं चरन्ति' इति श्रूयते । एवमाश्रमद्वयेऽपि श्रौतत्वस्य मुक्तिफलकत्वस्य चाविशिष्टत्वात् विकल्पो वा कालभेदादिना क्रमिकत्वं वेति सन्देहे, युक्तेरुभयत्र तौल्याद्विकल्पे प्राप्ते, उपसंहारस्य तात्पर्यग्राहकत्वाद् गृहाश्रम एव श्रुतेस्तात्पर्यम् । त्यागोक्तिस्तु ब्रह्मैतादृशं यदर्थं

सर्वं त्यज्यत इति स्तुतिपरा । अतः पूर्वाधिकरणैर्यत्प्रतिपादितं त्यागावश्यकत्वम् तदयुक्तमिति प्राप्ते, गृहिणोपसंहारस्य हेतुत्वेन तत्तात्पर्यमाह **कृत्स्ने**त्यादि । त्यागे वाङ्मनसोरेव भगवति विनियोगः, न सर्वेन्द्रियाणाम् । गृहिणस्य तु सर्वैः प्रकारैर्भजनं संभवति, परिजनश्च कृतार्थो भवतीति, भजने कृत्स्नभावो भवति, अतस्तेनोपसंहारः कृत इत्यर्थः । अत्र गमकं तु श्रुतौ 'आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य' इति कथनम् । तदेतद्धृदिकृत्य कर्मठगृहिणं व्यावर्तयितुं सूत्रे तुशब्दमाह । श्रुतावात्मपदं च ब्रह्मपरम् । बाधकाभावे शक्तिसंकोचस्यान्याय्यत्वादिति । तथा च पञ्चमस्कन्धे भवाटवीसमाप्तौ 'यो दुस्त्यजान् क्षितिसुतस्वजनार्थदारान् प्रार्थ्यां श्रियं सुरवरैः सदयावलोकाम्, नैच्छन्नृपस्तदुचितं महतां मधुद्विट्सेवानुरक्तमनसामभवोऽपि फल्गुः' इति भरतवृत्तान्तस्य श्रीशुकैरनुवादात्त्यागाधिकाराभावे 'एवं गृहे स्थित्वा भगवद्भजनं कुर्यात्' इति बोधनायेदं व्यासचरणैरुक्तमित्यर्थः ४७

**मौनवदितरेषामप्युपदेशात् ॥ ४८ ॥**

गृहिणोपसंहारे हेत्वन्तरमाह **मौन**वदित्यादि । **मौनवत्**, मननशीला वेदार्थविचारका वा मुनयः, तेषां भावः कर्म वा मौनमिति योगः । वाङ्नियमो मौनमिति रूढिः । तत्र योगापेक्षया रूढेर्बलवत्त्वात् 'मौनानीहानिलायामादण्डावाग्देहचेतसाम्' इति भगवतैकादशे रूढस्यैवार्थस्यादरणात् मौनं वाङ्नियमः, तच्च त्रिदण्डिधर्मोपलक्षकम् । तथा च तद्वत् **इतरेषां** ततोऽतिरिक्तानामात्मनि सर्वेन्द्रियसंप्रतिष्ठापनादीनामपि श्रुत्या गृहिण उपदेशात् युक्तो गृहिणोपसंहारः धर्मबाहुल्यादित्यर्थः । तत्र तु नियमनमात्रं वागादीनाम्, अत्र तु भगवति विनियोग इति तत आधिक्यमिति भावः ॥ ४८ ॥

**अनाविष्कुर्वन्नन्वयात् ॥ ४९ ॥**

ननु भगवति सर्वेन्द्रियविनियोगाद्गृहिणोपसंहार इति यदुक्तम्, तन्न युज्यते । इतः पूर्वं 'शुचौ देशे स्वाध्यायमधीयान' इति कर्ममार्गीयसाधनोपक्रमादित्याशङ्क्य, तत्तात्पर्यमाह **अनावि**रित्यादि । भगवद्भावस्य रसात्मकत्वेन गुप्तस्यैवाभिवृद्धिस्वभावकत्वात्तमनाविष्कुर्वन् प्रकटमकुर्वन् भजेतेति ज्ञापनाय तदुक्तिः । अन्यथा 'आत्मनि सर्वेन्द्रियाणि संप्रतिष्ठाप्य' इति न वदेत्, अतस्तथेत्यर्थः । मुख्यं हेतुमाह **अन्वया**दिति, ल्यब्लोपे पञ्चमी, भगवता सह अन्वयं संबन्ध प्राप्य इति । तथा च संबन्धाभाव एवाविष्करणम्, न तु संबन्धे । अतस्तथा भजनबोधनार्थं तथोपक्रम इत्यर्थः ॥ ४९ ॥

**ऐहिकमप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५० ॥**

वैदिककर्मकरणे तात्पर्यमुक्त्वा, लौकिकतत्करणसमयमाह **ऐहिक**मित्यादि । ऐहिकं लौकिकं भोजनपुत्रोत्पादनादिकर्म, **अप्रस्तुतप्रतिबन्धे**, प्रस्तुतस्य भगवद्भजनस्य प्रतिबन्धविघटनं प्रस्तुतप्रतिबन्धः; तदभावे कार्यमितिशेषः । न तु प्रतिबन्धसंभावना

यामित्यर्थः । तत्करणे कावश्यकतेत्यत आह **तद्दर्शनादि**ति । 'आचार्यकुलात्' इत्युपक्रम्य, अग्रे 'धार्मिकान् विदध'दिति श्रुतौ दर्शनात् । तथाच श्रुतौ वैदिकवल्लौकिकमपि भजनगोपनार्थमुच्यते, न तु तत्करणे तात्पर्यम्, तत्र श्रुत्युक्तत्वादैहिकाग्रह आवश्यकताभ्रमेण मा करोत्वित्येतदर्थं तत्समयमत्रोक्तवानिति ज्ञेयम् । एवं च यस्य मर्यादायां वरणं वर्तते, तेन साधनापरिपाकदशायमेवं गृहे स्थित्वा भजनं कार्यं तत्तात्पर्यं गोपयतेति सिद्धम् ॥ ५० ॥ इत्यष्टमं गृहिणोपसंहाराधिकरणम् ॥ १८ ॥

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५१ ॥ (३-४-९.)**

'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्य' इति छान्दोगश्रुतौ मुक्तेर्ब्रह्मसंपत्तिः फलमुक्तम् । सा च 'मुक्तोपसृप्यव्यपदेशात्' इति सूत्रे भगवतो मुक्तोपसृप्यत्वबोधनेन भजनानन्दानुभवरूपैव सिध्यति । सा च सर्वात्मभाव एवेति च त्याग एव, गृहस्थितस्य भजनकृतिस्तु पूर्वोक्ताधिकाराभावे । तस्य च फलं ब्रह्मलोकाभिसम्पत्तिः पुनरावृत्त्यभावश्च श्रुत्या दर्शित इति मुक्तिपर्यन्तमेव फलम्, उत मुक्तिफलमपि भजनानन्दरूपं तस्य भवतीति संशये, मुक्तिपर्यन्तताया एव श्रुतौ तस्योक्तत्वात् तृतीयस्कन्धे च 'हृतात्मनो हृतप्राणांश्च भक्तिरनिच्छतो गतिमण्वीं प्रयुङ्क्त' इति कथनाच्च गृहिणो मुक्तिपर्यन्ततैवेति प्राप्ते, निर्णयमाह **एवमि**त्यादि । **एवम्**, उक्तरूपस्य गृहिणो मुक्तिफलस्य भजनानन्दानुभवरूपस्यानियमः कादाचित्कत्वम् । भगवता दीयते चेत्, प्राप्नोति, नो चेत्, नेति, 'भगवान्मुकुन्दो मुक्तिं ददाति कर्हिचित् स्म न भक्तियोग'मिति वाक्येन तस्य भगवदधीनत्वादिति **अनियम** औत्सर्गिकं हेतुमाह **तदवस्थे**त्यादि । 'न स पुनरावर्तते' इति श्रुत्यावृत्त्या तस्य मुक्त्यवस्था एवावधृतेः निर्धारात् । आवृत्तिः समाप्तिद्योतनाय । तथा च यद्यप्यनया श्रुत्या मुक्तिफलनियमाभाव एव समायाति, तथापि 'तस्य तावदेवे'ति श्रुतेः 'आचार्यवान् पुरुषो वेद' इत्यनया पठितया भक्तिमार्गे च भगवत एवाचार्यतया तद्दयया भजनानन्दोपि भवतीति सूत्रकारैस्तथोक्तम् । तेन मुक्तिपर्यन्तं भगवद्भावस्य साधनमित्यपि निर्णीतम् ॥ ५१ ॥ इति नवमं मुक्तिफलानियम इत्यधिकरणम् ॥ ९ ॥

**इति श्रीमद्वल्लभाचार्यचरणैकतानश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचितायां ब्रह्मसूत्रवृत्तौ तृतीयाध्यायस्य चतुर्थः पादः ॥ ४ ॥**

**इति तृतीयोऽध्यायः ॥ श्रीः ॥**

श्रीकृष्णाय नमः ।

# प्रासङ्गिकम् ।

पूर्वाध्यायद्वयवद्भावप्रकाशिकायास्तृतीयाध्यायस्य मुद्रणव्ययप्रबन्धः श्रीमद्गोस्वामि-श्रीव्रजरत्नचरणैः कृतः । द्वितीयाध्यायवदेतदध्यायस्य पाठयोजना श्रीमत्पुरुषोत्तमचरणै-र्निजश्रीहस्ताक्षरलिखितपुस्तकत एव कृता । तत्रापि यत्रैतत्पुस्तकं वर्षाजलेन संदिग्धं जातम्, अक्षराणि चोत्पतितानि, तत्रान्यत्पुस्तकद्वयस्याप्युपयोगः कृतः । तत्रैकं श्रीमद्वैष्णवपरिष-त्संग्रहतो 'वाडीलाल नगीनदास शाह बी. ए. एल् एल्. बी. वकील हाइकोर्ट' इत्यनेन दत्तम् । अन्यच्च 'मग्नलाल गणपतिराम शास्त्री. एम्. ए. बी. इ. एस्, एस. टी. सी. डी. एम्. आर्. ए. एस्. प्रोफेसर ऑफ संस्कृत. दक्कन कॉलेज. पुना.' इत्येतेषाम् । श्रीहस्ता-क्षरपुस्तकापेक्षयैतत्पुस्तकद्वयमपि प्रायोऽशुद्धमर्वाचीनं च, तथापि येषु स्थलेषु मूलपुस्तकस्य वाचनमशक्यं संदिग्धं वा प्राप्तम्, तेषु स्थलेषु एतत्पुस्तकद्वयेनात्यन्तमुपकृतमिति ।

मुम्बई.
आषाढ कृष्ण प्रतिपद् १९८२

मूलचन्द्र तेलीवाला.

श्रीकृष्णाय नमः।

# भावप्रकाशिका।

शास्त्रवित्तमश्रीमद्गोस्वामिश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रचरणविरचिता

(ब्रह्मसूत्रवृत्तिः।)

## चतुर्थाध्यायस्य प्रथमः पादः।

### आवृत्तिरसकृदुपदेशात्॥ १॥ (४-१-१)

पूर्वाध्याये साधनं निरूपितम्, इह फलं निरूपणीयम्, मुख्यमवान्तरं च। तत्रास्मिन्नधिकरणेऽवान्तरं फलं निरूप्यते। **आवृत्तिरि**त्यादि। तत्रायं संशयः। 'आत्मा वारे श्रोतव्यो मन्तव्यो निदिध्यासितव्यः। सोन्वेष्टव्यः स विजिज्ञासितव्यः। तस्मिन् यदन्तस्तदन्तस्तदन्वेष्टव्य' इत्यादिवाक्यैर्विहितं श्रवणादिकं सकृदनुष्ठेयम्, उतावर्तनीयमिति। तत्र तावत्सकृदेवेति प्राप्तम्, तावतैव शास्त्रार्थस्य कृतत्वसिद्धेः। न च तण्डुलनिष्पत्तिफलकावघातवद्दर्शनफलकानां श्रवणादीनामावृत्तिर्न्यायप्राप्तेति शङ्क्यम्। तत्र वैतुष्यरूपस्य द्वारस्य दृष्टत्वेनात्र च तादृशद्वाराभावेन तद्वैषम्यात्। अतः सकृत्कृतेनापि श्रवणादिना दर्शनसिद्धेरावृत्तिरप्रयोजिकेति प्राप्ते, प्रतिवदति।

**आवृत्तिः** श्रवणादीनां कर्तव्येत्येव श्रुत्यभिमतम्। कुतः। **असकृदुपदेशात्।** छान्दोग्ये श्वेतकेतूपाख्याने 'ऐतदात्म्यमिदं सर्वं तत्सत्यं स आत्मा तत्त्वमसि श्वेतकेतो' इति वाक्येन जडजीवयोर्ब्रह्मात्मकत्वस्य नवकृत्व उपदेशात्। यदि हि श्रवणादेः सकृत्करणेनैव शास्त्रार्थः सिध्येत्, एकस्मा एव पुनः पुनः किमित्युपदिशेत्। न चावघातवैषम्यम्। अत्राप्यसम्भावनाविपरीतभावनारूपान्तःकरणदोषनिवृत्तिरूपस्य दृष्टस्यैव द्वारस्य विद्यमानत्वात्॥ १॥

### लिङ्गाच्च॥ २॥

उक्त एवार्थेऽनेन हेत्वन्तरमुच्यते **लिङ्गा**दिति। श्रुत्यनुमापकत्वात्स्मृतिरत्र लिङ्गपदेनोच्यते। सा च 'यथा यथात्मा परिमृज्यतेऽसौ मत्पुण्यगाथाश्रवणाभिधानैः। तथा तथा पश्यति वस्तु सूक्ष्मं चक्षुर्यथैवाञ्जनसम्प्रयुक्त'मिति। अत्राञ्जनदृष्टान्तेन परिमार्गस्य दृष्टद्वाररूपत्वमेव बोध्यते। अत्र श्रवणादीनां स्वेन रूपेण साधनत्वेपि तेषामावर्त्यमानत्वेन रूपेण फलत्वम्। अत एव 'आत्मा वारे' इति वाक्ये दर्शनं पूर्वमुक्त्वा, ततः श्रवणादिक-

मुच्यते, तेनात्मनः परोक्षज्ञानमप्यवान्तरफलमिति सिध्यति । तथा भक्तिमार्गेपि 'सतामयं सारभृतां निसर्गो यदर्थवाणी श्रुतिचेतसामपि । प्रतिक्षणं नव्यवदच्युतस्य यत्स्त्रियो विटानामिव साधुवार्ते'ति स्मृत्युक्तन्यायाद्बोध्यम् । न चास्यार्थस्यासौत्रत्वं शङ्क्यम् । अध्यायस्य फलविचारार्थत्वात् । श्रवणादीनामवान्तरफलत्वेऽनभिसंहितेत्र न तदावृत्तिं विचारयेदिति । अतस्तदावृत्तेरवान्तरफलत्वं निर्बाधम् ।

किञ्च । श्रुतौ कर्मज्ञानभक्तीनामुक्तत्वेपि न त्रयाणां फलतस्तौल्यम्, किन्तु ज्ञानभक्ती फलत उत्कृष्टे इति तत्रैव प्रयतनीयमिति बोधनायात्र कर्मफलमपि बोध्यते । तथा चायं सूत्रार्थः । **आवृत्तिः** पुनःपुनर्जन्म, तदप्यसकृत्, एतत्कर्मणां स्वतन्त्रतया करणे फलम् । तत्र हेतुः । **असकृदुपदेशात्** । वाजिनां बृहदारण्यके शारीरब्राह्मणे 'एवमेवायं शारीर आत्माङ्गेभ्यः सम्प्रमुच्य प्रतिन्यायं प्रतियोन्याद्रवते प्राणायैवे'ति । तत्रैव पुनः 'तेन प्रद्योतेनैष आत्मा निष्क्रामती'त्युपक्रम्य, 'तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चे'ति, तत्रैव तदनुपदमेव, 'तद्यथा तृणजलायुके'त्युपक्रम्य, 'एवमेवायं पुरुष इदं शरीरं निहत्याविद्यां गमयित्वान्यन्नवतरं कल्याणतरं रूपं तनुते पित्र्यं वा गान्धर्वं वा ब्राह्मं वा प्राजापत्यं वा दैवं वा मानुषं वान्येभ्यो वा भूतेभ्य' इति । तत्रैवाग्रे 'प्राप्यान्तं कर्मणस्तस्य यत्किञ्चेह करोत्ययम् । तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मण' इत्येवं पुनरुपदेशादित्यर्थः । **असकृ**दिति पदं देहलीदीपवत्साध्ये हेतौ च सम्बध्यते । लिङ्गात्मिका स्मृतिरपि गीतायां 'त्रैविद्या मां सोमपाः पूतपापा' इत्यारभ्य 'एवं त्रयीधर्ममनुप्रपन्ना गतागतं कामकामा लभन्त' इत्यादिरूपा द्रष्टव्या ॥ २ ॥ इति प्रथममावृत्त्यधिकरणम् ॥ १ ॥

**आत्मेति तूपगच्छन्ति ग्राहयन्ति च ॥ ३ ॥ ( ४-१-२ )**

एवं विद्याया अवान्तरफलं स्वतन्त्रकर्मफलं च विचार्य ज्ञानभक्त्योः फलं विचारयति **आत्मेती**त्यादि । तत्र ज्ञानभक्त्योरनावृत्तिसाधकत्वेनोत्तमत्वाय यत्कर्मणो जघन्यत्वमावृत्तिसाधकत्वादुक्तं ज्ञानाद्यङ्गभूतकर्मणस्तच्छेषत्वादनावर्तकत्वं च 'न स पुनरावर्तत' इति श्रुतिबलेनोक्तम् । सा श्रुतिः किं सावधिकीमनावृत्तिं त्रिदशामरन्यायेन वदत्युत सर्वथाऽनावृत्तिमिति संशये सावधिकीमिति प्राप्तम् । तथा हि सिद्धान्तिनापि ह्यनावृत्तिवाक्यात्पूर्वा 'यावदायुषमेवं वर्तय'न्निति श्रुतिमनुसृत्य कर्मनैयत्यमवश्यमङ्गीकर्तव्यम् । कर्मणां च प्ररोहैकस्वभावानां स्वभावस्य दुरतिक्रमत्वात्तत्फलानुभव आवश्यकः । किञ्च, 'य एनं विदुरमृतास्ते भवन्ती'त्यादिश्रुतेः ज्ञाने सति मोक्षादनावृत्तिः, तच्च ज्ञानमतिदुर्लभम् । 'यतो वाचो निवर्तन्ते' 'अगृह्यो न हि गृह्यत' इत्यादिश्रुतिभिर्ब्रह्मणोऽज्ञेयत्वश्रावणात् । एवं ब्रह्मणो ज्ञानाविषयत्वे तत्र भक्तिरप्यसम्भवदुक्तिका, ज्ञानाविषये स्नेहासम्भवात्, अत एवोपदेशासम्भवोपि । एवं प्राप्ते अभिधीयते **आत्मेती**त्यादि । तुशब्दः पूर्वपक्षनिरासकः ।

इतिशब्दो हेतौ । 'य आत्मनि तिष्ठन्नात्मनोन्तरं' इत्यन्तर्यामिब्राह्मणे भगवतः सर्वात्मत्वेन श्रावणाद्भगवान् सर्वेषामात्मा इति हेतोर्ज्ञानमार्गीयास्तमुपगच्छन्ति 'आत्मेत्येवोपासीते'त्यादिश्रुतिभिरात्मत्वेनोपासीनाः 'ब्रह्मैव सन् ब्रह्माप्येती'ति श्रुतेस्तदात्मकाः सन्तस्तं प्राप्नुवन्ति प्रविशन्ति । भक्तिमार्गीयास्त्वात्मात्मत्वेन तं भजन्तस्तस्योप समीपे गच्छन्ति । **ग्राहयन्ति च** स्वस्वमार्गीयरीत्या आत्मत्वेनात्मात्मत्वेन च स्वस्वशिष्यानुपदिशन्ति । तथा च श्रुतौ यथा अप्राप्यत्वाग्राह्यत्वादिकं निरूप्यते, तथा आत्मत्वात्मात्मत्वादिकमपि निरूप्यते । अतो भगवतो विरुद्धसर्वधर्माधारत्वाज्जीवसामर्थ्येनाग्राह्यत्वेपि स्वसामर्थ्येन तं तं प्रत्यात्मत्वेनात्मात्मत्वेन च हृदि स्फुरति, यथाधिकारं बहिरपि प्रकटीभवति । आत्मत्वेन हितकारिस्वभावत्वात् । कर्म च प्ररोहैकस्वभावमपि भगवदर्थं भगवत्समर्पितं वा सत् कर्मनाशाय भवति । यथा भक्षितमौषधं पूर्वभक्षितान्नरसपाचनाय । अतः श्रुतिविचारे कर्मस्वभावस्य च विचारे विरोधाभावात् ज्ञानभक्त्योस्तदङ्गतया क्रियमाणस्य कर्मणश्च सर्वथा अनावृत्तिः फलं निर्बाधं श्रुत्यभिप्रेतं चेत्यर्थः ॥ ३ ॥

**न प्रतीकेन हि सः ॥ ४ ॥**

नन्वात्मत्वेन ज्ञानस्याभेदे तादात्म्ये वा पर्यवसानात्तत्तन्मार्गरीत्या आत्मत्वेन ज्ञाने तत्तन्मार्गीयो मोक्ष इति यदुक्तं तदसत् । 'आत्मेत्येवोपासीत एष म आत्मेति विद्या'दित्यादिषु वाक्येषु तदुक्तेरुपासनार्थत्वावगत्या 'आत्मनि तिष्ठ'न्नित्यादौ सर्वत्र तदुक्तेस्तत्तुल्यर्थत्वेन तस्याः फलार्थताया अयुक्तत्वादित्याशङ्कायां सूत्रान्तरं पठति **नेत्यादि** । सत्यमात्मत्वोक्तिरुपासनार्था, परन्तु तया श्रुत्या आत्मत्वमवगत्योपासनीयमित्युच्यते, न त्वात्मत्वेन ज्ञानस्य फलमपोद्यते । ततः पूर्वं 'प्राणन्नेव प्राणो भवती'त्यादिना प्राणादिशब्दानां आत्मनः कर्मनामत्वं पाचकपाठकादिवदुक्त्वा, 'स योऽत एकैकमुपास्ते न स वेदाकृत्स्नो ह्येष एकैकेन भवती'त्युक्त्वा, अकृत्स्नतावारणार्थमात्मत्वेनोपासनं वदन् 'अत्र ह्येते सर्वे एकं भवन्ती'ति आत्मनः सर्वतद्रूपत्वमिति स्वरूपमाह । तेन प्राणादिसर्वरूपस्यात्मनो यत्प्राणादिना एकदेशरूपेणोपासनं तत्प्रतीकोपासनम्, यद्वा अतद्रूपे तत्त्वेनोपासनं तत्प्रतीकमित्युच्यते । तादृशेन प्रतीकेनोपासनेन **सः** मोक्षो न भवतीति बोध्यते, न त्वात्मत्वेन ज्ञानान्मोक्षो न भवतीति । 'अत्र ह्येते सर्वे एकं भवन्ती'त्यनेन कृत्स्नत्वरूपस्य फलस्यात्मोपासने बोधितत्वात् । कृत्स्नत्वं सर्वभावपूर्वकक्षा । सर्वभावश्च मोक्षपूर्वकक्षेति श्रुतिसिद्धत्वादिति । तथा च ज्ञानभक्तिभ्यामप्रतीकोपासने तदङ्गत्वेन नित्यनैमित्तिककर्मकरणे च सर्वथाऽनावृत्तिरूपं फलं निर्बाधमित्यर्थः ॥ ४ ॥

**ब्रह्मदृष्टिरुत्कर्षात् ॥ ५ ॥**

न'न्वात्मैवेदं सर्वम्' 'इदं सर्वं यदयमात्मे'त्यादौ ब्रह्मकार्ये सर्वस्मिन् प्रपञ्च आत्मदृष्टेः फलं मोक्ष एवोच्यते । 'तस्मै मृदितकषायाय तमसस्पारं दर्शयति भगवान् सनत्कुमार'

इति 'एतावदरे खल्वमृतत्व'मिति तत्रतत्र श्रावणात् । सा च दृष्टिः प्रतीकरूपैव । कार्यविषयककारणदृष्टिरूपत्वेनातस्मिंस्तद्दृष्टिरूपत्वात् । अतः पूर्वोक्तमयुक्तमित्यत आह **ब्रह्मे**त्यादि । सर्वस्मिन् प्रपञ्चे या ब्रह्मदृष्टिः, सा न प्रतीकरूपा । कटककुण्डलादेः सुवर्णरूपत्ववत्सर्वस्य प्रपञ्चस्य ब्रह्मात्मकत्वात् । सा चाधिकारोत्कर्षे सति तत एव भवतीत्यतोनूद्यते । अतस्तया मुक्तिकथनेपि न दोष इति प्रतीकोपासनान्न मुक्तिरिति यदुक्तं तत्साध्वेवेति पूर्वोक्तमक्षुण्णमित्यर्थः ॥ ५ ॥ इति द्वितीयमात्माधिकरणम् ॥ २ ॥

## आदित्यादिमतयश्चाङ्ग उपपत्तेः ॥ ६ ॥ ( ४-१-३ )

पूर्वाधिकरणे ज्ञानभक्त्योर्मुख्यं भगवत्प्राप्तिरूपं कृपया सम्प्रदायप्रवर्तनरूपमवान्तरफलं तदङ्गभूतकर्मणां च ज्ञानाद्युपकाररूपं निरूप्यात्राङ्गोपासनफलं निरूप्यते **आदित्ये**त्यादि । छान्दोग्ये वैश्वानरविद्यायां 'अथ होवाच सत्ययज्ञं पौलुषिं प्राचीनयोग्य कं त्वमात्मानमुपास्स इत्यादित्यमेव भगवो राजन्निति होवाचे'त्यादिना आदित्यवाय्वाकाशापःप्रभृतय आत्मत्वेनोपासनाविषयाः श्राविताः, तथा तत्रैव मधुविद्यायां 'असौ आदित्यो देवमध्वि'त्युपक्रम्य 'य एवं विद्वानादित्यं ब्रह्मेत्युपास्त' इति श्रूयते । तत्र प्रतीकोपासनत्वमस्ति, न वेति संशये, तद्वाक्योक्तमुपासनं प्रतीकमिति युक्तम् । उक्तासु श्रुतिष्वादित्यादीनां प्रत्येकमुपास्यत्वेन श्रावणात् । यत्पुनः पूर्वं सर्वत्र ब्रह्मदृष्टेर्न प्रतीकत्वमित्युपपादितम्, तदयुक्तम्, उक्तश्रुतिविरोधात् । न च तद्विरोधादिदमेवायुक्तमिति शङ्कयम् । ब्रह्मण एकत्वादेकप्रकारकेणाप्युपासनेन सर्वेषां फलसिद्धेः पृथक् पृथगुक्तौ गौरवात्प्रयोजनविशेषाभावाच्च । अतः सर्वस्य ब्रह्मत्वं नाभिमतम्, किन्तु यथा आदित्यादीनां प्रतीकत्वम्, तथा सर्वस्यापीति प्रतीकोपासनादेव तत्तत्फलमित्येवं युक्तत्वादिति प्राप्तम् । एवम्प्राप्ते उच्यते । **आदित्ये**त्यादि । आदित्यादिषु याः ब्रह्मत्वमतयस्ता अङ्गे अङ्गविषयिण्यः आदित्यादीनां वैश्वानरविद्यायां 'मूर्द्धैव सुतेजाश्चक्षुर्विश्वरूप' इति वाक्ये भगवदङ्गत्वेनैव सिद्धत्वाद्भगवतः प्रत्येकमप्यङ्गमुपासितं फलायैवं भवतीति भगवन्माहात्म्यबोधनार्थं ता विधीयन्ते । कुत एतत् । **उपपत्तेः** । उपपन्नं हि तेषां ब्रह्माङ्गत्वेन ब्रह्मत्वम् । नहि साकारव्यापकस्य ब्रह्मणोऽङ्गं न ब्रह्म । अतो न तत्र प्रतीकोपासनत्वम् । अपि च । मधुविद्याया'मसौ वा आदित्यो देवमध्वि'ति तस्य मधुत्वं परोक्षवादेन निरूप्य प्रतिदिक्करश्मीनां तत्कृपावलोकनरूपाणां मधुनाडीत्वं ऋचां मधुकृत्त्वमृग्वेदस्य पुष्पत्वं तासामेव ऋचाममृतादिरूपत्वं ताभिर्ऋग्वेदस्य तापं ताभिस्तप्तस्यर्ग्वेदस्य यश आदि रसजननं तत्क्षरणं तस्यादित्यमभितः श्रयणं तस्यादित्यरोहितरूपत्वमित्येवं प्रतिदिक्करश्मीनां ये रसास्तेषाममृतं च निरूप्य, तदग्रे 'तद्यत्प्रथमममृतं तद्वसव उपजीवन्त्यग्निना मुखेन न वै देवा अश्नन्ति न पिबन्ति तदेवामृतं दृष्ट्वा तृप्यन्ति त एतदेवाभिसंविशन्त्ये-

तस्माद्रूपादुद्यन्ती'ति पठ्यते। तथा च दर्शनमात्रेण प्राणधर्माणां क्षुदादीनां निवृत्तिस्तस्यैव स्वतन्त्रपुरुषार्थत्वेन ज्ञानं तत्रैव च विगाढभावेन लयस्तद्दर्शनानन्दानुभवार्थं तत उदयश्चे-त्येतत्सर्वमादित्यस्य भगवदङ्गत्व एवोपपद्यते, न तु ब्रह्मप्रतीकत्वे। प्रतीकभूतासु वाग्धे-नूपासनादिषु तथाफलाश्रवणात्। इदमपि हेतुबोधकेनोपपत्तिपदेनैव बोधितं ज्ञेयम्। एवमत्र फलदानोपपादनेन भक्त्यङ्गभूतं माहात्म्यं ज्ञापितम्। तेन भगवत एव फलत्वमिति सिद्धान्तो दृढीकृतः ॥ ६ ॥

**आसीनः सम्भवात्** ॥ ७ ॥

स एव सिद्धान्तो ससाधनः प्रकाश्यते **आसीन** इत्यादि। पूर्वोक्ताङ्गोपासना-फलप्राप्त्या भगवति माहात्म्यज्ञानपूर्वकस्य स्नेहस्य साधनसम्भवात् तदधीनः संस्तदग्रे भगवानासीनो भवति। एवं बहिः प्राकट्यबोधनेन भक्तवश्यता बोधिता। सा च श्रीभागवते तत्रतत्र प्रसिद्धा ॥ ७ ॥

**ध्यानाच्च** ॥ ८ ॥

अत्रान्तरं प्राकट्यमुच्यते। **ध्यानात्**। भावनौत्कट्यदशायां सततस्मरणरूपात् ध्यानात् हृद्यासीनो भवतीत्यर्थः। एतेन स्थैर्यमुक्तं भवति ॥ ८ ॥

**अचलत्वं चापेक्ष्य** ॥ ९ ॥

एवं भक्तेच्छया स्वरूपप्राकट्यं निरूप्य तदिच्छानुसारेण लीलानामपि तदाह **अच-लत्वं चापेक्ष्येति**। भक्तेच्छामपेक्ष्य अचलत्वं चकाराच्चलत्वं च प्रकटयति। अनायासेन हि क्रियमाणं कर्म लीला। सा प्रसादेनैव करणे तथा भवतीत्यतस्तथेत्यर्थः ॥ ९ ॥

**स्मरन्ति च** ॥ १० ॥

फलान्तरमाह। **स्मरन्ति**। चकाराच्छृण्वन्ति कीर्तयन्ति। श्रवणादिसङ्ग्रहश्च श्रीभा-गवते 'अथ ह वाव तव महिमामृतसमुद्रविप्रुषा सकृल्लीढया स्वमनसि निष्पन्दमाना-नवरतसुखेन विस्मृतदृष्टसुखलेशाभासाः परमभागवता' इति गद्ये महिमलेहनादादृतः। एवमत्राङ्गोपासनफलं निर्णीतम् ॥ १० ॥ इति तृतीयमादित्याद्यधिकरणम् ॥ ३ ॥

**यत्रैकाग्रता तत्राविशेषात्** ॥ ११ ॥ ( ४-१-४ )

पूर्वाधिकरणे द्विधाविर्भावरूपफलकथनेन भक्तयोरपि भावद्वैविध्यं सूचितम्। तत्र तयोर्द्वैविध्ये भावभेद एव हेतुरिति तयोस्तारतम्यमस्ति, किं वा भावविषयस्य रूपस्यैक्या-त्तत्रास्तीतीह विचार्यते। तत्र विषयैक्येपि प्राकट्यप्रकारभेदस्य भावभेदकृतत्वादस्तीति प्राप्ते, निर्णयमाह **यत्रेत्यादि**। उक्तभक्तयोर्मध्ये यत्र यस्मिन् भक्ते एकाग्रता भगवत्स्व-रूपविषयिणी ग्राहकचित्तवृत्तिधारा, न त्वन्तस्थत्वबहिष्ठत्वकृतो विशेषः, तत्र तस्मिन् भक्ते

**अविशेषात्** । तस्य भावे तद्दृश्ये भगवत्स्वरूपे च तारतम्याभावात्तयोरपि भक्तयोर्न तारतम्यम्, किन्तु तौल्यमेवेत्यर्थः । तथा चैकाग्र्याभावे भावतारतम्यम्, तेन च तयोस्तारतम्यम्, न तु प्राकट्यप्रकारभेदादिति भावः ॥ ११ ॥ इति चतुर्थं यत्रैकाग्रताधिकरणम् ॥४॥

**आप्रायणात्तत्रापि हि दृष्टम्** ॥ १२ ॥ (४-१-५)

उक्त एवार्थेनुप्रसङ्गेनान्यद्विचारयति **आप्रायणे**त्यादि । अन्तःप्राकट्यवतो यदा बहिः संवेदने सति बहिः पूर्वानुभूतभगवत्स्वरूपानुभवः, तदा पूर्वमन्तरन्वभूवमधुना बहिरनुभवामीत्यनुव्यवसायो भवति न वेति । तत्र भगवतः सर्वत्र वर्तमानत्वेपि देशकालात्मकविशेषणभेदेनानुभववैलक्षण्यात्तदुभयविशिष्टोऽनुव्यवसायो न्यायात्प्राप्तो भवतीति प्राप्ते, उच्यते । **आप्रायणात्** । श्रीभागवते 'प्रायणं हि सतामह'मिति भगवद्वाक्यात् स्वतः पुरुषार्थत्वेन प्राप्यं परमं पारलौकिकं फलमुच्यते । तन्मर्यादीकृत्य तस्य सैवावस्था सार्वदिकी, न तु बहिः प्राकट्येपि बहिष्ट्वानुसन्धानम् । ननु तर्हि तत्प्राप्त्यनन्तरं तस्य तत्र सायुज्यं तु भविष्यतीत्यत आह **तत्रापि हि दृष्ट**मिति । **तत्रापि** प्रायणे प्राप्तेपि **दृष्टं** तच्चरणकमलस्पर्शसंवाहनावलोकनादिरूपं दृष्टमेव फलम्, न त्वदृष्टं सायुज्यम् । हि यतो हेतोः पुष्टिमार्गेङ्गीकृतः, अन्यथा पूर्वोक्तभाव एव न स्यात् । अतस्तस्य भावस्य सार्वदिकत्वं निःप्रत्यूहमित्यर्थः ॥ १२ ॥ इति पञ्चममाप्रायणाधिकरणम् ॥ ५ ॥

**तदधिगम उत्तरपूर्वाघयोरश्लेषविनाशौ तद्व्यपदेशात्** ॥ १३ ॥ (४-१-६)

अङ्गोपासनां प्रस्तुत्य तदीयपरमफलविचारे पुष्टिमार्गीयाणां फलमतीताधिकरणे निरूपितम् । इदानीं मर्यादामार्गीयस्य फलं चिन्त्यते । तस्य ज्ञाने सतिं कथं फलं भवतीति । तत्र मर्यादामार्गे ज्ञानानन्तरं भक्तेर्भवनात्तेन पूर्वं ज्ञानं सम्पादनीयम् । मध्यमाद्यधिकारिणा कर्मापि कर्तव्यम्, कर्म तु 'नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपी'ति वाक्यान्नाभुक्तं क्षीयते इति भोगो भवत्येव । तदा भोगानुकूलकर्मणा स्वजातीयं कर्मापि जन्यत इति तत्सन्तानेनुसीव्यमाने चित्तशुद्ध्यभावाज्ज्ञानोदयो दुर्घटः, तदभावे च भक्तेरप्यनुद्भवे तन्मार्गे मुक्तिरूपं फलं न शक्यवचनमिति प्राप्ते आह **तदधिगम** इत्यादि । तस्य ब्रह्मणोऽ**धिगमे** ज्ञाने सति ज्ञानस्वभावादेव उत्तरपूर्वाघयोरश्लेषविनाशौ उत्तराघस्याश्लेषोनुत्पादः, पूर्वाघस्य च विनाशश्च भवति । तत्र हेतुः । **तद्व्यपदेशात्** । छान्दोग्ये उपकोसलविद्यायां 'पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यत' इति, तत्रैव वैश्वानरविद्यायां 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त' इति तयोरघाश्लेषविनाशयोर्विशेषेण कथनादित्यर्थः । न च कर्मणां प्ररोहैकस्वभावत्वान्मध्यमाद्यधिकारिणां ज्ञानोदयदौर्घट्यं शङ्क्यम् । तैरपि फलाभिसन्धिराहित्येन परमेश्वरार्पणेन कर्मणां क्रियमाणत्वात्तादृशेन तेन बन्धकस्वभावकर्मणोनुत्पादनात् । यथा भक्ष्यत्वेऽविशिष्टत्वेपि

अन्नादजीर्णोत्पत्तिः, न तु तत्पाकार्थं भक्षितादौषधादपि, मात्रया तस्य भक्षणात्, तद्वत्। तथा च ततो यथा आरोग्यम्, तथात्र ज्ञानप्रतिबन्धाभाव इत्यदोषादिति ॥ १३ ॥

**इतरस्याप्येवमसंश्लेषः पाते तु ॥ १४ ॥**

ननु मास्तु पापसम्बन्धो ज्ञानिनि, पुण्यसम्बन्धस्तु भविष्यत्येव। तस्य विहितत्वेनाविरुद्धत्वादित्याशङ्क्य तत्रापि पूर्वोक्तहेतुमतिदिशति **इतरस्ये**त्यादि। **इतरस्य** पुण्यस्यापि। **एवम्**। 'उभे ह्येवैष एते तरत्यमृतः साध्वसाध्वसाधूनि' इति। 'क्षीयन्ते चास्य कर्माणी'ति तरणक्षययोर्व्यपदेशात्। असंश्लेषः असम्बन्ध इत्यर्थः। ननु मर्यादामार्गीयस्य ज्ञानानन्तरं भरतवत् सङ्गदोषेण भगवद्भावाच्च्युतौ सङ्गदोषवत् विहितनिषिद्धकर्मसम्बन्धोपि शक्यवचन इति ज्ञानस्य न सर्वात्मना कर्मविरोधित्वमित्याशङ्क्य, तत्रापि नियममाह **पाते** त्विति। तुरप्यर्थे। **पाते** भगवद्भावात् च्युतावपि पुण्यपापयोरश्लेष इत्यर्थः ॥ १४ ॥

**अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥ १५ ॥**

ननु देहस्य कर्मजन्यत्वात् ज्ञानेन कर्मनाशे देहनाशस्याप्यवश्यकत्वाद्गुर्वभावे प्रवचनानुपपत्तिः,तदभावे च ज्ञानभक्त्योरप्यनुत्पत्तिप्रसङ्ग इत्याशङ्क्य समाधत्ते **अनारब्धे**त्यादि। नारब्धं भोगायतनलक्षणं कार्यं याभ्यां ते अनारब्धकार्ये एव पापपुण्ये। **पूर्वे**। पूर्वसूत्रद्वये ज्ञाननाश्यत्वेनोक्ते। न तु यावत्तावच्छिन्ने। तथा च देहजनकस्थापककर्मसद्भावान्न प्रवचनाद्यनुपपत्तिरित्यर्थः। ननु 'क्षीयन्ते चास्य कर्माणी'ति श्रुत्या 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुत' इति स्मृत्या च सर्वकर्मनाशस्यैव बोधितत्वात्कुतोयं सङ्कोच इत्यत आह **तदव**धेरिति। तुः शङ्कानिरासे। आरब्धकार्यस्य कर्मणो यत् ज्ञानेनादहनं तत्। **अवधेः** अखिलकारणकारणत्वेनाखिलपूर्वावधिभूतो यो भगवदिच्छारूपो हेतुस्तस्मात्। तादृशी तदिच्छा तु पञ्चमस्कन्धे भरतचरिते 'मृगदारकाभासेन स्वारब्धकर्मणा योगारम्भणतो विभ्रंशित' इति 'उपभोगेन कर्मारब्धं व्यपनय'न्निति वाक्याभ्यामुक्ते ये योगविभ्रंशनभोगरूपे प्रारब्धकार्ये ताभ्यामनुमेयेति सर्वमनवद्यम् ॥ १५ ॥

**अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥ १६ ॥**

ननु प्रारब्धकर्माभुक्तं न नश्यतीति ज्ञानिना तदेव भोगेन नाशनीयम्। न त्वन्यद्विहितं कर्तव्यम्, प्रयोजनाभावात्, दृश्यते तु तादृशामपि वशिष्ठादीनां तत्करणम्, अत उत्तरस्य कर्मणः संश्लेष आवश्यक इत्याशङ्क्य तत्प्रयोजनमाह **अग्निहोत्रा**दीति। अग्निहोत्रादिरूपविहितकर्मकरणं **तत्कार्यायैव**। तस्य भोगस्य यत्कार्यं प्रारब्धकर्मनाशस्तदर्थमेव। तुशब्दः शङ्काव्युदासाय। येषामग्निहोत्रादिकारकं प्रारब्धमस्ति, तैरेव भोगवत्तत्तत् क्रियते, नेतरैः सनकादितुल्यैः। ननु कुत एवं ज्ञायत इत्यत आह **तद्दर्शना**दिति। 'पुण्यः पुण्येन

कर्मणा भवति पापः पापेने'ति श्रुतिः पूर्वकर्मणोग्रिमकर्महेतुत्वं दर्शयति तस्मात् । तथा च न तेनादृष्टान्तरसंश्लेष इत्यर्थः ॥ १६ ॥ इति षष्ठं तदधिगमाधिकरणम् ॥ ६ ॥

**अतोन्यापि ह्येकेषामुभयोः ॥ १७ ॥ ( ४-१-७ )**

पूर्वाधिकरणे मर्यादामार्गीयस्य मर्यादयैव मुक्तिप्रतिबन्धस्तयैव तन्नाशश्चेति निरूपितम् । अत्र तु पुष्टिमार्गीयस्य प्रारब्धनाशः किं भोगेनोत भोगं विनेति विचार्यते । तत्र प्रारब्धस्य भोगैकनाश्यस्वभावस्य पूर्वं सिद्धत्वाद्भोगं विना पुष्टिमार्गीयस्यापि प्रारब्धं न नश्यति । मार्गभेदमात्रेण प्रारब्धस्वभावनाशस्याशक्यवचनत्वादिति प्राप्ते, अभिधीयते **अतोन्ये**त्यादि । एकेषां पुष्टिमार्गीयाणां भक्तानां उभयोः शुभाशुभप्रारब्धयोः प्रारब्धाप्रारब्धयोर्वा भोगं विनैव नाशो भवति । कुत एवमित्यत आह **अतोन्यापि** हीति । **हि** यतो हेतोः **अतोन्यापि** कर्मणो ज्ञाननाश्यत्वनिरूपिकायाः ज्ञानानाश्यप्रारब्धाक्षेपिकायाश्च श्रुतेः सकाशादन्यापि शाट्यायनिनां श्रुतिरस्ति । 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्या'मिति । तथा ज्ञानभोगाभ्यां कर्मनाशनिरूपिकायाः श्रुतेरेतस्याश्च परस्परविरोधपरिहाराय द्वयोर्विषयभेदस्यावश्यं वाच्यत्वादत्यनुग्रहभाजनमेतस्या विषयस्तद्रहितस्त्वन्यस्या इति सिद्धयति । तेन पुष्टिमार्गीयस्य भोगं विनैव कर्मनाश इत्यर्थः ॥१७॥

**यदेव विद्ययेति हि ॥ १८ ॥**

ननु 'यदेव विद्यया करोति श्रद्धयोपनिषदा वा तत्तदेवास्य वीर्यवत्तरं भवती'ति श्रुतौ ज्ञानवता कृतस्य कर्मणो वीर्यवत्तोक्त्या ज्ञानिनोपि कर्मफलस्यावश्यं वाच्यत्वेन कर्मश्लेषसिद्धेर्न पूर्वोक्तं साधयि इत्यत आह **यदेवे**त्यादि । हि यतो हेतोः विद्यावान् प्रारब्धक्षयायैव कर्म करोतीति तत् अन्यैः कृतात्कर्मणो वर्यिवत्तरम् । अतस्तत्कर्मान्तरं निवार्य स्वयमपि निरिन्धनवह्निवन्नश्यतीति न तेन श्लेष इति पूर्वोक्तं साध्वेवेत्यर्थः ॥ १८ ॥

**भोगेन त्वितरे क्षपयित्वाथ सम्पद्यते ॥ १९ ॥**

पुष्टिमार्गीयफलप्राप्तौ प्रतिबन्धाभावमुक्त्वा तत्प्राप्तिप्रकारमाह **भोगेने**त्यादि । **इतरे** अग्रे प्राप्यालौकिकदेहाद्भिन्ने स्थूललिङ्गशरीरे **क्षपयित्वा** पूर्वोक्तरीत्या कर्मनिवर्तनेन दूरीकृत्य, **अथ** भगवल्लीलोपयोगिदेहप्राप्त्यनन्तरं **भोगेन सम्पद्यते** । 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणे'ति श्रुत्युक्तेन परप्राप्तिरूपेण भोगेन सम्पन्नो भवतीत्यर्थः । अलौकिकत्वं विना अलौकिकदेहं विना चोक्तफलव्यवच्छेदाय तुशब्द इति सर्वमनवद्यम् ॥ १९ ॥ इति सप्तममतोऽन्याधिकरणम् ॥ ७ ॥

**इति श्रीमद्वल्लभाचार्यचरणैकतानश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचितायां ब्रह्मसूत्रवृत्तौ चतुर्थाध्यायस्य प्रथमः पादः ॥ १ ॥**

श्रीकृष्णाय नमः ।

# अथ चतुर्थाध्यायस्य द्वितीयः पादः ।

**वाङ्मनसि दर्शनाच्छब्दाच्च ॥ १ ॥ ( ४-२-१ )**

पूर्वपादे ब्रह्मज्ञानवतस्तत्तन्मार्गभेदात्प्रकारभेदेन कर्मक्षये स्थूलसूक्ष्मशरीरक्षपणोत्तरं ब्रह्मप्राप्तिरुक्ता । तत्र स्थूलशरीरत्यागः स्फुट इति तदनुक्त्वा सूक्ष्मशरीरत्यागप्रकारोऽस्मिन् पादे प्रदर्श्यते । तत्र केवलभगवत्कृपारूपस्य साधनद्वारकतद्रूपस्य वा साधनस्य पूर्णत्वे मार्गभेदेन सद्यो मुक्तिः यथायथं शारीरकब्राह्मणे आर्तभागब्राह्मणे चोक्ता । 'न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्ये'तीत्यादिना, 'यत्रायं पुरुषो म्रियते उदस्मात्प्राणाः क्रामन्त्याहो ने'त्यार्तभागप्रश्नेनेति 'होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते स उच्छ्वयत्याध्मायत्याध्मत मृतः शेत' इत्यादिना च । तत्राद्यायां किं प्राणाः युगपल्लीयन्ते, उत क्रमेणेति संशये, युगपदेवेति । साधनसम्पत्तौ विलम्बे हेत्वभावादिति तावत्प्राप्ते, तत्राह **वागि**त्यादि । वागिन्द्रियं मनसि सम्पद्यते, पूर्वं लीयते, तत्र हेतुः **दर्शनाच्छब्दाच्चे**ति । भगवद्दर्शनाद्वेणुनादादिरूपाच्छब्दाच्च । सूत्रे चोऽप्यर्थे । यं पुष्टिमार्गे भगवानङ्गीकरोति, तस्यान्तकालेऽपि दर्शनं ददाति । यथा वृत्रस्य । वेणुनादं वा श्रावयति, यथान्तर्गृहगताभ्यः, तस्यैकतानत्वाय । तदा नामादिग्रहणं कुर्वतो वाक् भगवदेकताने मनसि लीयते । यद्यपि युगपदपि वक्तुं शक्यते, तथापि 'तस्यैतस्य प्रयतो वाङ्मनसि सम्पद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवताया'मिति छान्दोग्ये क्रमश्रावणात्तथा आद्रियत इत्यर्थः ॥ १ ॥

**अत एव सर्वाण्यनु ॥ २ ॥**

इन्द्रियान्तरलयप्रकारमाह **अत एवे**ति । अत एव पूर्वोक्ताद्दर्शनादेरेव हेतोः सर्वाणीन्द्रियाणि **अनु** वाचं सन्निहितां लक्षीकृत्य मनसि सम्पद्यन्ते । पश्चान्मनसि सङ्गतानि भगवदानन्देन सम्पद्यन्त इत्यर्थः । एतेन श्रुतौ वाक्पदमिन्द्रियान्तराणामप्युपलक्षकमिति बोधितम् ॥ २ ॥

**तन्मनः प्राण उत्तरात् ॥ ३ ॥**

तत् पूर्वोक्तसर्वेन्द्रियविशिष्टं मनः **प्राणे** आसन्ने लीयते । तत्र हेतुः । **उत्तरा**दिति । 'स यथा शकुनिः सूत्रेण प्रबद्धो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा बन्धनमेवोपश्रयत एवमेव खलु सौम्य तन्मनो दिशं दिशं पतित्वान्यत्रायतनमलब्ध्वा प्राणमेवोपश्रयते प्राणबन्धनꣳहि सौम्य मन' इति मनसः प्राणोपश्रयणवाक्यादुत्तरं यत् प्राणबन्धनवाक्यं तस्मादित्यर्थः ॥ ३ ॥

**सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥**

**सः** सर्वेन्द्रियविशिष्टमनोविशिष्टः प्राण **अध्यक्षे** पुरो हृदि वा प्रत्यक्षविषये भगवति सम्पद्यते । तत्र हेतुमाह । **तदुपगमादिभ्य** इति । तस्य उपगमः अभ्युपगमः 'यमेवैष' इति श्रुत्युक्तोऽङ्गीकारः, आदिपदात् 'नायमात्मा बलहीनेने'ति श्रुत्युक्तं भगवद्वशीकरणसमर्थं भक्तिरूपं बलम्, भगवदनिङ्गितार्थत्यागरूपः प्रमादाभावः, सर्वात्मभावरूपं सलिङ्गं तपश्च, तेभ्यो हेतुभ्य इत्यर्थः । एवं पुष्टिमार्गीयसद्योमुक्त्यर्थं वागादिलयप्रकार उक्तः । तेन शारीरब्राह्मणे यदुक्त'मथाकामयमान' इत्यादिना तत्र यत्प्रतिपादितं 'अत्रैव समवनीयन्त' इति तस्य आत्मकामशब्दस्थात्मपदेनोक्तो य आत्मा तस्मिन्नेवं प्रकारेण समवनीयन्त इति बोधितम् ॥ ४ ॥ इति प्रथमं वाङ्मनोधिकरणम् ॥ १ ॥

**भूतेषु तच्छ्रुतेः ॥ ५ ॥ ( ४-२-२ )**

एवं पुष्टिमार्गीयस्य वागादिलयप्रकारमुक्त्वा मर्यादामार्गीयस्य सद्योमुक्तौ तद्वागादिलयप्रकारमाह । तत्र तस्य प्राणाः किं भगवति नीयन्ते, उत प्रकारान्तरमिति संशये, भगवतीत्येव युक्तम् । प्राप्तुरेकाशयत्वादेरत्रापि तुल्यत्वादिति प्राप्ते, निर्णय उच्यते **भूतेष्वि**ति । तस्य ते भूतेषु लीयन्ते । कुतः । **तच्छ्रुतेः** । 'यत्रास्य पुरुषस्य मृतस्याग्निं वागप्येति वातं प्राणश्चक्षुरादित्यं मनश्चन्द्रं दिशः श्रोत्रं पृथिवीꣳ शरीरमाकाशमात्मौषधीर्लोमानि वनस्पतीन्केशा अप्सु लोहितं च रेतश्च निधीयत' इति श्रुतेः । न चेयमविद्वद्विषयेति वाच्यम् । 'यत्रायं पुरुषो म्रियत' इति पूर्ववाक्योक्तप्राणानुत्क्रमणरूपसद्योमुक्तिलिङ्गविरोधात् । न चाग्निं वागिति लयवाक्योत्तरं 'क्वाऽयं तदा पुरुष भवती'त्यार्तभागप्रश्ने 'तौ ह यदूचतुः कर्मैव तदूचतु'रित्यादिना 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेने'त्यन्तेन भूतलीनप्राणकस्य कर्माश्रयत्वश्रावणात्तस्याविद्वत्त्वे निश्चिते प्राणानुत्क्रमस्य विद्वदविद्वत्साधारण्यान्न तस्य सद्योमुक्तिलिङ्गत्वमिति वाच्यम् । तत्र कर्मपदस्य कर्मप्रधानकमर्यादामार्गपरत्वात् । अन्यथा कर्मणः प्ररोहैकस्वभावतया संसारजनकत्वेन मोक्षमार्गे निन्द्यत्वादत्र 'कर्मैव तत्प्रशꣳसतु'रित्युक्तकर्मप्रशंसाविरोधापत्तेः । न च 'पुण्यो वा पुण्येन कर्मणा भवति पापः पापेने'ति तत्र वाक्यशेषात्पुण्यमादाय सा प्रशंसेति वाच्यम् । तथा सति तत्र गोप्यांशस्याभावा'दाहर सौम्य हस्त आवामेवैतद्वदिष्याव' इत्युक्त्वैकान्तगमनादिविरोधापत्तेः । किञ्च, विदुषः काममयताया आवश्यकत्वात्कामयमानस्य 'तमुत्क्रामन्त'मित्यादिनोक्तस्योत्क्रमस्यापि तत्पृष्ठलग्नत्वेन तदभावे हेतोर्वक्तुमशक्यत्वाच्च । न च तस्य तदानीं मोहवशगत्वात् कामाभाव इति वाच्यम् । तदापि सुषुप्तस्येव वासनावशेषस्य कामस्य सत्ताया आवश्यकत्वात्, अन्यथा 'यदा सर्वे प्रलीयन्त' इति श्रुत्या मुक्तेरेवापत्तेरिति । तस्माद्विद्वद्व्यवस्थैवात्रोच्यत इति निश्चयः ॥ ५ ॥

**नैकस्मिन् दर्शयतो हि ॥ ६ ॥**

नन्वयं प्राणलयप्रकारो ज्ञानिनोस्तु, न तु भक्तस्यापि, तृतीयस्कन्धे कापिलेये 'मय्यर्पितात्मनः पुंसो मयि संन्यस्तकर्मणः। न पश्यामि परम्भूतमकर्तुः समदर्शना'दिति मर्यादाभक्ते उत्कर्षविश्रान्तेरुक्तत्वात्तदिन्द्रियाणां तु भगवत्येव लय उचित इत्याशङ्कायामाह **नैकस्मि**न्निति। **एकस्मिन्** ज्ञानिनि भक्ते वा मर्यादानियमो न, किन्तूभयोरपि समानः। तत्र हेतुः। **दर्शयतो हि**। हि यतो हेतोः आर्तभागयाज्ञवल्क्यौ 'अत्र पुरुष' इति सामान्यनिर्देशेन विशेषाकथनात्कर्मौक्तिकर्मप्रशंसाभ्यां मर्यादामार्गस्यैव विषयीकरणाच्च सामान्यत एव निर्णयं दर्शयतस्तस्मात्। तथा च यद्यवान्तरो ज्ञानभक्तिकृतो विशेषो विवक्षितः स्यात्, तदा सामान्येन न वदेताम्, अतस्तथेत्यर्थः॥ ६ ॥ इति द्वितीयं भूताधिकरणम्॥ २ ॥

**समाना चासृत्युपक्रमादमृतत्वं चानुपोष्य ॥ ७ ॥ ( ४-२-३ )**

एवमधिकरणद्वयेन पुष्टिमर्यादास्थयोः क्रमेण वागादिलयं व्युत्पाद्य इत आरभ्य नवभिः सूत्रैस्तद्दाढर्यार्थं तास्ता शङ्का अपनुदन्ति। तत्र पूर्वं मर्यादापुष्ट्योर्न कदाचिदन्यथाभाव इत्यत्र को हेतुरित्येतां निराचष्टे **समाने**त्यादि। आसंसृत्युपक्रमात् सृतिः संसरणं जीवानां स्वस्मात्पृथक्कृतानामविद्ययाहंताममतासम्बन्धस्तस्य य उपक्रम आरम्भः सृत्युपक्रमस्तं मर्यादीकृत्य। ल्यब्लोपे पञ्चमी। तदारभ्य साधनक्रमेण मोचनेच्छारूपा या मर्यादामार्गीयमर्यादा सा समाना, चोवधारणे, मुक्तिपर्यन्तमेकरूपैव। **अमृतत्वं चानुपोष्य**। उप पूर्वो वसिरनशनार्थको नियमान्तरस्याप्युपलक्षकः। चोप्यर्थे। यथा मर्यादामार्गीयमर्यादा सदा तुल्या; तथा उपवासादिरूपविहितसाधनामकृत्वा यदमृतत्वं तदपि पुष्टिमार्गे समानम्। तथा च मर्यादापुष्ट्योरन्यथाभावाभावे 'एष उ एवे'ति श्रुत्युक्तेच्छाविषयं 'ते नाधीतश्रुतिगणा' इत्येकादशस्कन्धीयभगवद्वाक्यविषयं तत्तन्मार्गस्वरूपमेव हेतुरित्यर्थः॥७॥

**तदापीतेः संसारव्यपदेशात् ॥ ८ ॥**

एवं प्रासङ्गिकमुक्त्वा पुनः प्रकृतं परामृशति। ननु यद्यार्तभागब्राह्मणे सद्योमुक्तिप्रकार एव निरूप्यः स्यात्तदेन्द्रियलयकथनोत्तरं कृते 'क्वाऽयं तदा भवतीति' प्रश्ने मुक्तो भवतीत्येवोक्तं स्यात्, न तु कर्मप्राशस्त्यमतो न तत्र सद्योमुक्तिप्रकार उच्यत इत्याशङ्कायामाह **तदाऽपीते**रिति। **तदा** नित्यलीलाप्रवेशलक्षणपुष्टिमार्गीयमुक्तिदशाविचारे **अपीतेः** मर्यादामार्गीयमुक्तेः **संसारव्यपदेशात्** संसार इति व्यपदेशः संसारव्यपदेशस्तस्मात्, तस्याः संसारत्वाभावेपि तस्यां भगवद्भजनानन्दानुभवाभावेन संसारतुल्यतया कथनादित्यर्थः। तदुक्तं श्रीभागवते श्रीशिवेन 'नारायणपराः सर्वे न कुतश्चन बिभ्यति। स्वर्गापवर्गनरकेष्वपि तुल्यार्थदर्शिन' इति। तथा चात्र तन्न्यूनताबोधनार्थं श्रुतौ कर्माश्रयत्वकथनं मुक्तिप्रकारहेतुत्वाच्च कर्मप्रशंसेति तस्य सद्योमुक्तिप्रकारबोधकमक्षुण्णमित्यर्थः॥ ८ ॥

**सूक्ष्मं प्रमाणतश्च तथोपलब्धेः ॥ ९ ॥**

ननु मुक्तेः संसारतुल्यत्वोक्तिः पुष्टिमार्गस्तुतिमात्रपराङ्गीकार्या, अन्यथा मुक्तिबोधकश्रुतेः प्रतारकत्वापत्तेरित्यत आह **सूक्ष्ममित्यादि** । ये हि मर्यादामार्गीयास्तेषां मुक्तिरेवेष्टेति तेषां पुष्टिमार्गीयं तत्त्वं सूक्ष्मं दुर्ज्ञेयम्, यथा कर्मठानां मोक्षतत्त्वम् । अतो यथा मोक्षमजानतो मोक्षानिच्छून्वा प्रति कर्मनिरूपकश्रुतेर्न प्रतारकत्वं तदभीष्टफलप्रापकत्वात्, एवं मोक्षबोधकश्रुतेरपि तदिच्छून्प्रति तथात्वान्न प्रतारकत्वम् । तदुपदिष्टसाधनाचरणे तदुक्तफलप्राप्तेः । पुष्टितत्त्वस्यैतादृशत्वेपि तत्रेच्छाभावस्तु तादृशाधिकाराभावात् । अतोनुपपत्त्यभावात्पुष्टितत्त्वबोधकस्मृतिवाक्यस्य न स्तुतिमात्रपरत्वमित्यर्थः । नन्वेवंविधार्थस्य श्रुत्यनुक्तत्वात्किं तत्सत्त्वे मानमित्याकाङ्क्षायामाह **प्रमाणतश्च तथोपलब्धेरि**ति । प्रमाणं श्रुतिः । सा च 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । आनन्दं ब्रह्मणो विद्वान्न बिभेति कुतश्चने'ति तस्याः सकाशात् । अत्र पूर्वार्धे दुर्ज्ञेयत्वमुत्तरार्धे तत्सत्ता च बोध्यते । अन्यथा मनसोप्यप्राप्यस्य वेदनकथनं विरुद्धं स्यादतोधिकारिणामेव तज्ज्ञेयम्, न सर्वेषाम् । तदाह **उपलब्धेश्च तथे**ति ॥ ९ ॥

**नोपमर्देनातः ॥ १० ॥**

ननु यद्येवं तदा ब्रह्मविद इव तादृशा भक्ता अप्यधिकारिषु कुतो नोपदिशन्ति, तत्र हेतुर्वाच्यः । अन्यथा सर्वमेतदनुपपन्नमेवेत्यत आह **नोपमर्देने**ति । पुष्टिमार्गे तेषां भगवद्विरहभावो वा भगवत्सङ्गो वेति दशाद्वयमेव । तत्राद्ये उपमर्देनास्वास्थ्येन कृत्वा न उपदेशः कर्तुं शक्यः, न द्वितीये त्वतो भगवत्सन्निधानात् । अतोनुपदेशे हेतुसद्भावान्नानुपपन्नमित्यर्थः ॥ १० ॥

**अस्यैव चोपपत्तेरूष्मा ॥ ११ ॥**

ननु 'रसो वै सः रसꣳह्येवायं लब्ध्वानन्दीभवती'त्युपक्रम्य 'एष ह्येवानन्दया'तीतिश्रुत्यानन्दप्राप्तेः श्रावितत्वाद्दुःसहविरहभावस्तेषामशक्यवचनः । अथ स कथञ्चिदाद्रियते, तदानन्दतिरोभाव एव सिद्ध इति नित्यनिरतिशयसुखाभिव्यक्तिरूपादक्षरैक्यरूपाद्वा मोक्षात्कथं तस्याधिक्यमतः पूर्वोक्तमनुपपन्नमेवेत्यत आह **अस्यैवे**ति । आनन्दात्मकरसरूपस्य भगवत एवायं धर्म **ऊष्मा** विरहतापः । कुतः । **उपपत्तेः** । व्यापकस्य भगवतः सर्वत्र सत्त्वेपि मायया तिरोधानात्तद्विरहः सर्वसाधारणस्तथापि न सर्वानुभवगोचरः, किन्तु रत्याख्यस्थायिभावात्मकरसरूपभगवदाविर्भावो यस्य हृदि तस्यैव तदप्राप्तिजस्तापोनुभवगोचरीभवति, नान्यस्येत्यन्वयव्यतिरेकरूपाया उपपत्तेः । तथा च रसरूपस्य वस्तुन एव तथात्वात्स तापो रसात्मक एवेति तदानन्दतिरोभावाभावान्न तस्य न्यूनतेति मुक्त्यपेक्षया तदाधिक्यं दुरपोहमित्यर्थः ॥ ११ ॥

**प्रतिषेधादिति चेन्न शारीरात्** ॥ १२ ॥

ननु 'न पश्यो मृत्युं पश्यति न रोगं नोत दुःखता'मिति श्रुत्या तादृशे भक्ते दुःखप्रतिषेधः क्रियत इति तादृशे कथं दुःखात्मको विरहतापः शक्यवचन इति सूत्रांशेनाशङ्कयांशान्तरेण समाधत्ते **प्रतिषेधा**दिति। नशब्दः 'अस्यैवोष्मे'ति च पूर्वसूत्रद्वयादनुवर्तते। विरहतापो रसात्मकस्य भगवत एवोष्मेति न युक्तम्। 'न पश्य' इति श्रुत्या भगवद्दर्शनवतो दुःखप्रतिषेधात्। इति चेन्न। कुतः। **शारीरात्**। शरीरसम्बन्धिनः कर्मणः सकाशात् य ऊष्मा तापः तस्यैव प्रतिषेधात्। विरहतापस्य कर्माजन्यत्वात्तस्य न प्रतिषेध इत्यर्थः। अत्रापि उपपत्तेरिति पूर्वोक्त एव हेतुः। अन्यथास्य दुःखत्वेन कर्मजन्यत्वानुमाने मोक्षसुखस्यापि सुखत्वेन कर्मजन्यत्वशङ्कया मोक्षसुखमपि विप्लूयेत। अतस्तत्र यथा लौकिकत्वरूपोपाधिग्रासाद्धेतुर्दुष्टः, तथात्रापीत्येवं बोध्यः ॥ १२ ॥

**स्पष्टो ह्येकेषाम्** ॥ १३ ॥

ननु लौकिकत्वस्योपाधित्वं तदा स्याद्यदा भगवद्विरहतापस्य कर्माजन्यत्वं प्रमाणसिद्धं स्यादित्याशङ्कायामाह **स्पष्ट** इति। एकेषां शाखिनां तैत्तिरीयाणां 'रसो वै सः रसꣳह्येवायं लब्ध्वानन्दीभवति को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् एष ह्येवानन्दयाती'ति श्रुतौ भगवत्स्वरूपलाभानन्तरं दुःखतन्निवर्तनलक्षणोर्थः स्पष्टः। तथाहि। अत्र रसात्मकभगवत्स्वरूपलाभे सत्यानन्दवत्त्वमुक्त्वा तस्यैव जीवनहेतुत्वं यदुच्यते, तन्मरणहेत्वनुपस्थितावसङ्गतं सन्मरणहेतुभूतं दुःखमुपस्थापयति। तदग्रे आनन्दजननकथनं च सुखविशेषम्। रसस्तु शृङ्गारात्मा, संयोगविप्रयोगाभ्यामेव पूर्णोनुभूतो भवति। अतस्तदनुभावनार्थं भगवानेव तान् रक्षतीति रसप्रकरणात् प्रतिवाक्यं 'ह्येव'शब्दयोरावृत्त्या चावसीयते। तस्मादयमर्थस्तत्र स्पष्ट इति विरहतापस्य भगवद्धर्मत्वे कर्माजन्यतायाः प्रमाणसिद्धत्वाल्लौकिकस्योपाधित्वं दुरपोहमिति पूर्वोक्तं निर्विचिकित्समित्यर्थः ॥१३॥

**स्मर्यते च** ॥ १४ ॥

उक्तं दृढीकर्तुमुपबृंहणमाह **स्मर्यत** इति। श्रीभागवते दशमस्कन्धे 'ता मन्मनस्का मत्प्राणा मदर्थे त्यक्तदैहिकाः। ये त्यक्तलोकधर्माश्च मदर्थे ता बिभर्म्य'हमित्युपक्रम्य 'धारयन्त्यतिकृच्छ्रेण प्रायः प्राणान् कथंचने'ति भगवतोक्तम्। एतस्य भावस्य परमपुरुषार्थत्वं दुरापत्वं च तत्रैवोद्धववाक्ये। 'एताः परं तनुभृतो ननु गोपवध्वो गोविन्द एवमखिलात्मनिरूढभावाः। वाञ्छन्ति यं भवभियो मुनयो वयं च किं ब्रह्म जन्मभिरनन्तकथारसस्ये'ति ॥ १४ ॥

**तानि परे तथा ह्याह** ॥ १५ ॥

नन्वेतादृशस्य रसानुभवस्य फलकोटौ क्वचिदप्यदर्शनादश्रवणाच्चैतस्य साधनकोटावेव निवेशोस्त्वित्याशङ्क्य तस्य फलकोटिपातित्वे प्रमाणमाह **तानी**ति। **तानि** रसात्मक-

भगवत्प्राकट्यतददर्शनजदुःखतत्कृतमरणादिनिवृत्तितत्प्राकट्यतद्दर्शनाद्यानन्दस्वरूपरसानुभवादीनि वस्तूनि **परे** प्रकृतिकालाद्यतीते श्रीगोकुले सन्तीति **तथा** फलकोटिगत्वेन **हि** यतो हेतोः। **आह** ऋग्वेदश्रुतिः पठति। 'ता वां वास्तून्युष्मसि गमध्यै यत्र गावो भूरिशृङ्गा अयासः। अत्राह तदुरुगायस्य वृष्णः परमं पदमवभाति भूरी'ति। अर्थस्तु, ता तानि वां युवयोः भगवत्तदन्तरङ्गभक्तयोः सम्बन्धीनि वास्तूनि वर्णविकृतेर्वस्तूनि स्थानानि वा गमध्यै प्राप्तुं उष्मसि कामयामहे। तानि कानीत्याकाङ्क्षायामाह। यत्र गोकुले वृन्दावने गावः भूरिशृङ्गा रुरुप्रभृतयो मृगाश्च सन्तीति शेषः। क्रूरमृगवारणायाह। अयासः शुभावहाः। तत्स्थानं कुत्रास्तीत्यत आह। अत्राह अत्रैव भूमावेव तत्पूर्वोक्तगुणविशिष्टम्। तर्हि भूमिष्ठत्वान्मुख्यं तन्न भविष्यतीति शङ्कानिरासायाह। उरुगायस्य वृष्णः परमं पदमिति, उरुभिर्गीयते, उरु यथा स्यात्तथा वा गीयत इत्युरुगायस्तस्य वृष्णः गोपीजने कामवर्षुकस्य भगवतः परमं वैकुण्ठादप्याधिकं तत्स्थानं भूरि बहुतरमवभातीति। तथा चात्रोष्मसीति काम्यत्वलिङ्गं फलकोटित्वगमकमित्यर्थः॥ १५॥ इति तृतीयं समानाधिकरणम्॥ ३॥

**अविभागो वचनात्**॥ १६॥ (४-२-४)

एवं मर्यादामार्गतत्त्वात्पुष्टिमार्गीयतत्त्वस्योत्कर्षस्य दुर्ज्ञेयत्वं चोपपाद्येदं विचारयति। किमाधुनिकं कंचन कृपया नित्यलीलास्थाने नीतं ततः कदाचिद्वियोजयति न वेति। तत्र तोषस्य कादाचित्कत्वात्तत्साध्या स्थितिरपि कादाचित्कैवेति प्राप्ते सिद्धान्तमाह **अविभाग** इति। तत्र नीतस्य भक्तस्य ततोऽविभागः अवियोग एव। कुतः। **वचनात्**। तैत्तिरीयके उक्तर्गनन्तरं 'विष्णोः कर्माणि पश्यते'त्यृचा तत्र कृतानि कर्माण्युक्त्वा, तदग्रे पठति 'तद्विष्णोः परमं पदꣳसदा पश्यन्ति सूरय' इति। अत्र सूरिपदेनाधुना भक्त्या पुरुषोत्तमविदो भक्ता उच्यन्ते। 'भक्त्या मामभिजानातीति' वाक्येन भक्त्यैव तज्ज्ञानात्। तेषां च सदा दर्शनमुच्यते। अन्यथा लीलानित्यत्वेनैव तत्र स्थितगवादीनां भक्तानां च सदा दर्शनस्यार्थादेव पूर्वर्ग्भ्यां प्राप्तत्वात्सदा दर्शनं पुनर्न वदेत्। अतः पुनस्तद्वचनादाधुनिकस्यापि कृपया तत्प्राप्त्यनन्तरमविभाग एव। लीलानित्यत्वं तु विद्वन्मण्डने प्रभुचरणैरुपपादितं ततोवगन्तव्यम्। न च तस्य स्थानस्य परिच्छिन्नत्वात् भक्तानां च नानादेश्यत्वेन तत्र तत्र मरणे ततो निर्गत्यात्रागमनस्यावश्यकत्वात्सद्यो मुक्तिप्रसङ्ग एतद्विचारो न युक्त इति शङ्क्यम्। दहराधिकरणन्यायेन तन्नित्यत्वस्य परिछिन्नत्वेपि व्यापकत्वस्य एतस्य व्रजस्य तद्वृत्तिलाभस्थानतायाश्च व्युत्पादितत्वात् तादृशभक्तस्य यत्र क्वचन मरणेपि तदानीं लीलादिसहितस्य भगवतो हृदि वा बहिर्वा प्राकट्ये तत्स्थानादेरपि तत्रैव प्राकट्येन तत्रैव तस्य तत्प्राप्तेर्विद्वन्मण्डन एवोपपादितत्वेन सद्योमुक्तिविचार एतद्विचारस्य युक्तत्वादिति॥ १६॥ इति चतुर्थमविभागाधिकरणम्॥ ४॥

**तदोकोग्रज्वलनं तत्प्रकाशितद्वारो विद्यासामर्थ्यात्तच्छेषगत्यनुस्मृतियोगाच्च हार्दानुगृहीतः शताधिकया ॥ १७ ॥ (४-२-९)**

एवं पुष्टिमार्गीयव्यवस्थां द्विविधं सद्योमुक्तिप्रकारं च दर्शयित्वा ज्ञानमार्गीयस्य क्रममुक्तौ निर्गमनप्रकारं दर्शयति **तदोकोग्रे**ति। स च प्रकारो बृहदारण्यके श्रूयते। 'स यत्रायं शारीर आत्मा अबल्यं नीत्य सम्मोहमिव न्येत्यथैतमेते प्राणा अभिसमायन्ति स एतास्तेजोमात्राः समभ्याददानो हृदयमेवान्ववक्रामति स यत्रैष चाक्षुषः पुरुषः पराङ् पर्यावर्ततेऽथारूपज्ञो भवति न पश्यतीत्याहु'रित्यादिना करणग्रामपिण्डीभावमुक्त्वा, ततः 'तस्य हैतस्य हृदयस्याग्रं प्रद्योतते तेन प्रद्योतेनैष आत्मा निष्क्रामति चक्षुष्टो वा मूर्ध्नो वान्येभ्यो वा शरीरदेशेभ्यस्तमुत्क्रामन्तं प्राणोनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ती'-त्यादिना 'इति तु कामयमान' इत्यन्तम्। अर्थस्तु, यः पूर्वब्राह्मणे एभ्योऽङ्गेभ्यः सम्प्रमुच्ये-त्यादिना म्रियमाणावस्थ उक्तः सोयं शारीर आत्मा जीवो यत्र यस्यां म्रियमाणावस्थायां अबल्यं नीत्य बलभावं नितरां प्राप्य संमोहमिव न्येति संमोहः संमूढता विवेकराहित्यं तत् नितरां प्राप्नोति अथ एनं करणस्वामिनं एते प्राणा वागादयोभिसमायन्ति आभिमुख्येन निकट आयान्ति। स एतास्तेजोमात्राः विषयप्रकाशकानीन्द्रियाणि चक्षुरादीनि समभ्याददानः सम्यगाभिमुख्ये गृह्णान उपसंहरमाणो हृदयं स्वायतनमेवावक्रामति तल्लक्षीकृत्यायाति स यत्र वर्तते तत्र एष चाक्षुषः पुरुष आदित्यांशश्चक्षुर्देवतारूपः पराङ् पर्यावर्तते स्वकार्याद्विमुखो भवति अथ तदा स एष इत्यनेनोक्तश्चक्षुरधिष्ठाता अरूपज्ञो भवत्येकीभवति करणग्रामेण। तदा न पश्यतीत्याहुः पार्श्वस्थाः न पश्यतीत्याहुः। एवमग्रेपि। तदुत्तरावस्थामाह। तस्येत्यादि। तस्य लिङ्गोपाधिकस्य ह एतस्य मुमूर्षोर्हृदयस्य एतत्स्थानस्य अग्रं नाडीमुखं प्रद्योतते, पूर्वमप्रकाशमपि तदानीं प्रकाशते, तेन प्रद्योतेनैष आत्मा शरीरान्निष्क्रामति निर्गच्छति चक्षुराद्यन्यतमेभ्यः शरीरदेशेभ्यः। तदुत्तरव्यवस्थामाह। 'तमुत्क्रामन्त'मित्यादि। तं जीवात्मानम्। प्राण आसन्यः। प्राणा इन्द्रियाणि। अयं च निष्क्रमणप्रकारो यमगतिरहितानाम्। यमगतीनां तु 'अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादि'-त्यादिवाक्यात् पिण्डितकरणग्रामस्य जीवस्य बलान्निष्क्रामणम्। एवं सति यद्यप्येतावत् ओकोज्वलनादिकं यमगतिरहितचर्षणीजीवानां विदुषां च साधारणम्, तथापि विद्वांस्तु नेतरवदितरनाड्या निष्क्रामति, किन्तु शताधिकयेत्याद्युक्तमार्गेण। श्रुतिस्तु छान्दोग्ये दहरविद्यास्था। शेषं स्फुटम्। तथा च हृदयाग्रप्रद्योतनपर्यन्तं विद्वदविदुषोस्तुल्यम्। निर्गमनमार्गः प्रकारश्च विदुषोतिरिक्त इति सिद्धम्। तथा चायं सूत्रार्थः। **तदोकोग्रज्वलनं** तस्य जीवस्य यदोको हृदयं तस्य यदग्रं नाडीमुखं तस्य ज्वलनं उक्ताभिस्तेजोमात्राभिः प्रकाशनं तदानीं ताभिः स्वस्वकार्यं विहाय पराङावर्तनेनैकीभूयेदमेव कार्यं क्रियते। अन्यथा तेषां तेजोमात्रात्वकथमनर्थकं स्यात्, तदा तत्प्रकाशितद्वारस्ताभिः प्रकाशितं द्वारं

निर्गमनमार्गो यस्य तादृशः सन् देहान्निष्क्रामति चक्षुष्टो वा अन्येभ्यो वा शरीरदेशेभ्यः । एतावत् विदुषामविदुषां च सर्वेषां गन्तॄणां जीवानां साधारणम् । अथ विदुषो विशेषमाह **विद्ये**त्यादिति । **विद्या** प्रधानभूता उपासना तस्याः सामर्थ्यात्, **तच्छेषगत्यनुस्मृतियोगाच्च** तस्याः विद्यायाः शेषभूता तदर्था या गतिः संन्यासरूपा तदङ्गभूता या अनुस्मृतिर्भगवत्स्मरणं तस्य योगो नैरन्तर्यं च, एताभ्यां हेतुभ्यां **हार्दानुगृहीतः** हृदि वर्तमानेन परमात्मनानुगृहीतः कृपाविषयीकृतः सन् **शताधिकया** 'शतं चैका च पुरुषस्य नाड्यस्तासां मूर्धानमभिनिःसृतैका तयोर्ध्वमायन्नमृतत्वमेति विश्वङ्ङन्या उत्क्रमणे भवन्ती'ति छान्दोगस्थदहरविद्यागतश्रुत्युक्तया एकशततम्या मूर्धन्यया नाड्या निष्क्रामतीति । तस्मादस्ति विद्वदविदुषोः निष्क्रमणे विशेष इति सिद्धम् ॥ १७ ॥ इति पञ्चमं तदोकोधिकरणम् ॥ ५ ॥

**रश्म्यनुसारी ॥ १८ ॥ ( ४-२-६ )**

ननु यथा उत्क्रमणे विशेषः, तथा 'या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति शुक्लस्य नीलस्य पीतस्य लोहितस्येत्यसौ वा आदित्यः पिङ्गल' इति छान्दोग्ये यदुक्तमुत्क्रमतो रश्म्यनुसारित्वम्, तदपि विदुष एव, उत साधारणमिति संशये, 'तमभित आसीना आहुर्जानासि मां जानासि मा'मिति श्रावणात्तदग्र उक्तं ' अथैतैरेव रश्मिभिरूर्ध्व आक्रमत ' इति प्राप्ते, आह **रश्मी**ति । यथा हार्दानुग्रहाद्विदुषो गतिरन्यमार्गेण, तथा रश्म्यनुसार्यपि विद्वानेव, नान्यः । ऊर्ध्वाक्रमणश्रुत्यनन्तरम् । ' स ओमिति वाह उद्वा मीयते स यावत्क्षिप्येन्मनस्तावदादित्यं गच्छत्येतद्वै खलु लोकद्वारं विदुषां प्रपदनं निरोधोऽविदुषा'मित्यादित्यस्य विद्वद्द्वारताया अविद्वन्निरोधतायाश्च श्रावणात्तथेत्यर्थः ॥ १८ ॥ इति षष्ठं रश्म्यधिकरणम् ॥ ६ ॥

**निशि नेति चेन्न सम्बन्धस्य यावद्देहभावित्वाद्दर्शयति च ॥ १९ ॥ (४-२-७)**

विदुष उत्क्रमे यथा हार्दानुग्रहकृतो विशेषस्तथा कालविशेषकृतोपि विशेषोस्ति न वेति संशयेऽस्तीत्याशङ्क्य निषेधति **निशि ने**त्यादि । निशीतिपदं मुक्तिप्रतिबन्धककालविशेषोपलक्षकम् । तत्र न आदित्यद्वारेण गमनमिति चेत् । न । कुतः । **सम्बन्धस्य यावद्देहभावित्वात्** । अनुग्रहहेतुभूतो यः पूर्वोक्तो गत्यनुस्मृतिसम्बन्धस्तस्य यावद्देहभावित्वाद्देहस्थितिपर्यन्तं सत्त्वात्तत्कार्यस्यानुग्रहस्यापि तथात्वाद्वेदेवादित्यद्वारेण गमनम् । तथा च हार्दानुग्रह एव बलीयानिति कालोऽप्रयोजकत्वान्न प्रतीक्षणीय इत्यर्थः ॥ १९ ॥

**अतश्चायनेपि दक्षिणे ॥ २० ॥**

चोवधारणे । **अतः** उक्तसम्बन्धादेव हेतोः **दक्षिणे**ऽयने **अपि**शब्दात्कृष्णपक्षेपि सूर्यद्वारेण विदुषो गमनं निःप्रत्यूहमित्यर्थः ॥ २० ॥

**योगिनः प्रति स्मर्यते स्मार्ते चैते ॥ २१ ॥**

ननु 'यत्र काले त्वनावृत्तिमावृत्तिं चैव योगिनः । प्रयाता यान्ति तं कालं वक्ष्यामी-' त्युपक्रम्य 'अग्निर्ज्योतिरहः शुक्लः षण्मासा उत्तरायण'मिति गीतायां भगवद्वाक्यात् ब्रह्मविदापि कालः प्रतीक्ष्य एवेति शङ्कायामाह **योगिन** इति । एते कालप्रतीक्षावत्यौ योगिस्मार्ते गती । न श्रौतसाधनवतः । तत्र हेतुः । योगिनः प्रति तादृशः कालः स्मर्यते । तत्र योगिनामेवोपक्रान्तत्वात् । अतो न दोषः । अथ कालमुखेन तत्रापि देवयानपितृयाणे एवोच्येत इत्युच्यते, तदा त्वग्न्यादिशब्दैर्मार्गस्था आतिवाहिक्यो देवता एवोच्यन्ते, न काल इत्युभयथाप्याविरोध इत्यर्थः । तस्माद्विद्यावतः क्रमेण मुक्तिं प्राप्तवतोपि न साधनान्तरापेक्षेति सिद्धम् ॥ २१ ॥ इति सप्तमं निश्यधिकरणम् ॥ ७ ॥

**इति श्रीमद्वल्लभाचार्यचरणैकतानश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचितायां ब्रह्मसूत्रवृत्तौ चतुर्थाध्यायस्य द्वितीयः पादः ।**

---

श्रीकृष्णाय नमः ।

# अथ चतुर्थाध्यायस्य तृतीयः पादः ।

**अर्चिरादिना तत्प्रथितेः ॥ १ ॥ ( ४-३-१ )**

पूर्वस्मिन्पादे प्रथमं पुष्टिमार्गीयस्य मर्यादामार्गीयस्य च सद्योमुक्तिप्रकारं दर्शयित्वा ततः क्रममुक्तौ निर्गमनद्वारादिकं दर्शितम्, इह तु तेन द्वारेण निःसृतस्य ब्रह्मप्राप्तिमार्गस्तल्लोकस्तत्प्राप्तिप्रकारश्च दृश्यते । तत्र स मार्गे किं ज्ञानिभक्तसाधारणः, उत ज्ञानिमात्रविषय इति संशये, यथा ज्ञानिनो नियमाभावः, तथा मर्यादामार्गीयस्यापीति प्राप्ते, निर्णयमाह **अर्चिरादिने**ति । छान्दोग्ये पञ्चाग्निविद्यायां 'तद्य इत्थं विदुर्ये चेमेरण्ये श्रद्धातप इत्युपासते तेर्चिषमभिसम्भवन्त्यर्चिषोऽहरह आपूर्यमाणं पक्षमापूर्यमाणपक्षाद्यान् षडुदङेति मासांस्तान्मासेभ्यः संवत्सरं संवत्सरादादित्यमादित्याच्चन्द्रमसं चन्द्रमसो विद्युतं तत्पुरुषोऽमानवः स एतान् ब्रह्म गमयत्येष देवयानः पन्था' इति भक्तातिरिक्तानेवोपक्रम्य गतिश्रावणात् गीतायां च 'अग्निर्ज्योतिरहः शुक्ल' इत्युपक्रम्य 'गच्छन्ति ब्रह्म ब्रह्मविदो जना' इत्युपसंहारे निगमनेन । **तत्प्रथितेः**, तेषां भक्तातिरिक्तानामिव प्रसिद्धेस्त एवार्चिरादिना मार्गेण गच्छन्ति, भक्तास्तु प्रायशः सद्य एव मुच्यन्त इत्यर्थः । यद्यपि क्रममुक्तिबोधकेषु तत्तदुपासनावाक्येषु 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोक'मित्येवं भिन्नानि भिन्नानि पर्वाण्युच्यन्त इति नानामार्गता सम्भाव्यते, तथापि सूत्रे 'अर्चिरादिने'त्ये-

कवचननिर्देशान्मार्गैकत्वमादृतम् । तत्र तत्र श्रुतौ देवयानपदेनैव मुक्तिमार्गस्य निर्देशो द्वितीयस्मिन् पितृयाण इति 'जायस्व म्रियस्वे'त्यस्मिन् तृतीयनिर्देशश्च बीजम् । तस्मान्नानापर्वविशिष्ट एक एव क्रममुक्तिमार्ग इति सिद्धम् । तत्र तत्र पर्वभेदकथनं तु तस्य तस्य तत्र तत्रैव भोग इति बोधनार्थम् । यथैकस्मिन् महापथेऽवान्तरवसतिग्रामेषु बहुषु सत्स्वपि न सर्वेषां सर्वत्र भोगः, किन्तु कस्यचित्क्वचित्कस्यचिदन्यत्रेति तद्वदिति न तेन मार्गभेदापत्तिरिति च ॥ १ ॥ इति प्रथममर्चिराद्यधिकरणम् ॥ १ ॥

**वायुमब्दादविशेषविशेषाभ्याम्** ॥ २ ॥ ( ४-३-२ )

ननु छान्दोग्ये पञ्चाग्निविद्यायामुपकोसलविद्यायां च वायुर्न पठ्यते, वाजसनेयके पञ्चाग्निविद्यायां मासानन्तरं संवत्सरो न पठ्यते, तत्स्थाने देवलोकः पठ्यते, आदित्यानन्तरं चन्द्रमा न पठ्यते । कौषीतकिपर्यङ्कविद्यायां 'स एतं देवयानं पन्थानमापद्याग्निलोकमागच्छति स वायुलोकं स वरुणलोकं स इन्द्रलोकं स प्रजापतिलोकं स ब्रह्मलोकमिति वाय्वादयः पठ्यन्ते। एवं सत्यर्चिरादिमार्गे वायोरनुक्तत्वात्स कुत्रापि निवेशयितुं न शक्यः, एवमग्रेपीति मार्गभेदपक्ष एव युक्तः इत्याशङ्कायां पूर्वं वायुनिवेशमाह **वायुमब्दा**दिति । संवत्सरलोकानन्तरं वायुलोको निवेशनीयः । तत्र हेतुमाह **अविशेषे**त्यादि । भूलोकसंबन्धित्वमर्चिरादीनां संवत्सरादीनामस्तीत्यविशेषः, अन्तरिक्षे लोकसंबन्धित्वं वायोरस्तीति विशेषः ताभ्याम् । अयमर्थः । अग्निहोत्रादिकर्मभिश्चित्तशुद्धावुपासनाभिर्ज्ञानोदये क्रममुक्तिं प्राप्नोति । अर्चिश्चाग्नेर्न भिद्यत इति अग्निलोकस्य प्राथम्यम् । कर्म भूलोक एव भवति । 'पृथिवी दीक्षा तया अग्निदीक्षया दीक्षित' इत्यादिश्रुतिभिः पृथिव्यग्निप्रधाना, अतः पूर्वं तल्लोके भोगस्तस्य भवति, तथा अहरादिसंवत्सरान्ते काले कर्मण उपासनायाश्च प्रायशो विधानात्ततस्तल्लोके भोगः ।एवमेतेषां संवत्सरान्तानां भूसंबन्धित्वम् । अतस्तन्मध्ये वायोर्न प्रवेशः । किन्तु 'वायुरन्तरिक्षस्याधिपति'रिति श्रुतेर्वायुरन्तरिक्षसंबन्धीति तदुत्तरं वायोर्निवेशस्ततस्तल्लोकभोगादीति । तत उपर्यादित्यलोकः 'सूर्यो दिवोधिपति'रिति श्रुतेः । अतस्तस्मादर्वागेव युक्त इत्यर्थः । एवं च वाजसनेय्युक्तो देवलोकोपि वायोरुपर्यादित्यात्पूर्वं निवेशनीयः । 'सूर्यो दिवोधिपति'रिति श्रुतेरिति बोध्यम् ॥ २ ॥

**तडितोऽधि वरुणः संबन्धात्** ॥ ३ ॥

पूर्ववदेवाशङ्कायामाह **तडित** इत्यादि । तडितः तडिल्लोकस्याधि उपरि वरुणलोको निवेशनीयः । तत्र हेतुः । **संबन्धात्** । 'विशाला हि विद्युतो नृत्यन्ति तीव्रस्तनितनिर्घोषो जीमूतोदरेष्वि'ति ब्राह्मणेन लोकेपि तडितामप्संबन्धिदर्शनेनाप्संबन्धद्वारा वरुणसंबन्धात् । अतो वरुणस्य तडिदनन्तरं निवेशो युक्त इत्यर्थः ॥ ३ ॥

**वरुणाच्चाधीन्द्रप्रजापती ॥ ४ ॥**

**स्पष्टार्थं सूत्रम्** ॥ ४ ॥ इति द्वितीयं वाय्वित्यधिकरणम् ॥ २ ॥

**आतिवाहिकास्तल्लिङ्गात्** ॥ ५ ॥ (४-३-३)

ननु छान्दोग्ये विद्युदनन्तरं पठ्यते 'तत्पुरुषोऽमानवः स एतान्ब्रह्म गमयती'ति । तत्र संशयः । पूर्वं मार्गैक्यस्य साधनेपि यस्य वरुणादिलोकसंबन्धो विद्युदनन्तरं तं स पुरुषो ब्रह्म प्रापयत्युत नेति । तत्र वचनस्य यावद्वचनत्वाद्वरुणलोकादिगतान्न प्रापयतीति प्राप्ते, आह **आतिवाहिका** इति । कौषीतकिश्रुतौ प्रजापतिलोकोत्तरं ब्रह्मलोकस्य पठितत्वात्तेषां ब्रह्मप्राप्तिरावश्यकी । सापि मार्गैक्यात्प्रापकममानवं पुरुषमपेक्षते। अतो यत्र स नोक्तस्तत्रापि सोऽवगन्तव्यः । तादृशाश्च बहवः सन्तीति ज्ञापनाय बहुवचनम् । अतिवहनमतिवाहः भावे घञ् । तत्सबन्धी आतिवाहिकः । अतिक्रम्य प्रापयिता, ते बहव आतिवाहिका भगवत्सेवकाः सन्ति । तत्र हेतुः । **तल्लिङ्गा**दिति । 'तत्पुरुषोऽमानव' इति वाक्योक्तामानवत्वलिङ्गात् । तेनेदं ज्ञाप्यते । यथा विद्याबलादर्चिरादिलोकमारभ्य प्रजापतिलोकपर्यन्तप्राप्तिस्तथा न ब्रह्मप्राप्तिः, किन्तु भगवदीयपुरुषानुग्रहणैवेति । तथा च यद्यपि श्रुतावमानव इत्येकवचनं तथापि प्राप्याणां बाहुल्येन प्रापकाणां बहुत्वमपि लिङ्गादेवावगन्तव्यम् ॥ ५ ॥

**उभयव्यामोहात्तत्सिद्धेः ॥ ६ ॥**

ननु छान्दोग्य उपकोसलविद्यायां बृहदारण्यके पञ्चाग्निविद्यायां वार्चिरादिमार्गगतानां अपुनरावृत्तिः श्राविता, 'तेषामिह न पुनरावृत्तिरस्ती'ति, किञ्च, देवयानः पन्था ब्रह्मविदामेवार्थ इति तेषां साक्षाद्वा परंपरया वा ब्रह्मवित्त्वमप्यवश्यं वाच्यम्, एवं सति तेन ब्रह्मज्ञानेन सद्यो मुक्तौ संभवत्यां क्षयिष्णूनां क्षुद्रानन्दानां लोकानां परप्राप्तिविलम्बजनकानामर्चिरादिलोकानां प्राप्तिः कुतः । किञ्च, 'यत्कर्मभिर्यत्तपसा ज्ञानवैराग्यतश्च य'दित्युपक्रम्य 'सर्वं मद्भक्तियोगेन मद्भक्तो लभतेऽञ्जसा, स्वर्गापवर्गमद्धाम कथञ्चिद्यदि वाञ्छती'ति भगवद्वाक्ये भक्तस्यान्यवाञ्छाफले उक्ते इति तत्रापि भक्तिसुखं हित्वा तादृशवाञ्छायां हेतुश्च वाच्य इत्याकाङ्क्षायामाह **उभये**त्यादि । देवयानस्यापि भगवतैव सृष्टत्वात्तत्र ब्रह्मविदो भक्तस्य च ज्ञानभक्त्योरुत्कर्षज्ञानात्तेन मार्गेण गमनाभावे तत्सृष्टिवैयर्थ्यं स्यादिति भगवानेव कांश्चित् ज्ञानिनो भक्तांश्च व्यामोहयति । 'संसारमोक्षस्थितिबन्धहेतु'रिति श्रुतेः 'मत्तः स्मृतिर्ज्ञानमपोहनं चे'ति स्मृतेश्च । अतः उभयोः कयोश्चित् ज्ञानिभक्तयोर्भगवत्कृताद्व्यामोहात्तत्सिद्धेः तादृशवाञ्छाफलयोः सिद्धेस्तद्व्यामोह एव हेतुरित्यर्थः ॥ ६ ॥

**वैद्युतेनैव ततस्तच्छ्रुतेः ॥ ७ ॥**

ननु तडिल्लोकाद्वरुणलोकप्राप्त्यनन्तरं यस्य ब्रह्मप्राप्तिस्तस्य तल्लोकसंबन्धी पुरुषोस्ति ब्रह्मप्रापक उत नेति संशये, अस्तीति पूर्वः पक्षः, ब्रह्मप्राप्तेः प्रापकपुरुषाधीनत्वात् विद्युल्लो-

कस्य चातिक्रान्तत्वाद्वरुणादिलोकस्थस्यैव ग्राह्यत्वादिति प्राप्ते, आह **वैद्युतेने**ति । विद्युल्लोकस्थब्रह्मपुरुषेणैव वरुणादिलोकगतस्यापि ब्रह्मप्राप्तिः तल्लोकस्थात् नापि पुरुषं विना कुतः । **तच्छ्रुतेः** । 'तान् वैद्युतात्पुरुषो मानस एत्य ब्रह्मलोकान् गमयती'ति वाजसनेयिनां पञ्चाग्निविद्यास्थश्रुतेः । अत्र हि एत्य वैद्युताद्गमयतीति पदसंबन्धः । तस्मात्तथेत्यर्थः ॥ ७ ॥
इति तृतीयमातिवाहिकाधिकरणम् ॥ २ ॥

**कार्यं बादरिरस्य गत्युपपत्तेः** ॥ ८ ॥ ( ४-३-४ )

क्रममुक्तौ मार्गं विचार्य तत्फलं विचारयति । किं कार्यब्रह्मलोकप्राप्तिरुत परस्य । तत्र बादरिमतं पूर्वपक्षत्वेनाह पञ्चभिः । तत्र 'स एतान् ब्रह्म गमयती'त्यत्र ब्रह्मपदेन किं परमेव ब्रह्मोच्यते उत कार्यो ब्रह्मलोक इति संशये, ब्रह्मपदेन परं ब्रह्म न वक्तुं शक्यम् । परस्य व्यापकत्वेन देशविशेषगमयित्रोरनपेक्षितत्वात् । अतः कार्यं ब्रह्मलोकमत्र बादरिराचार्यो मन्यते । तत्र हेतुः । **अस्य गत्युपपत्तेः** । तस्य लोकस्य परिच्छिन्नत्वे अस्य जीवस्य गतेरुपपन्नत्वादित्यर्थः ॥ ८ ॥

**विशेषितत्वाच्च** ॥ ९ ॥

हेत्वन्तरमाह **विशेषितत्वा**दिति । वाजसनेयके 'ब्रह्मलोकान् गमयति तेषु ब्रह्मलोकेषु पराः परावतो वसन्ती'ति श्रुतौ बहुत्वेन वासाधिकरणत्वेन च विशेषितत्वात्तथेत्यर्थः । न च छान्दोग्ये ब्रह्मेत्येकवचनमुक्तम् । लोकपदस्य तज्जन्यभोगपरत्वेन तत्र बहुत्वस्य कथनेपि तदधिकरणस्यैकत्वे तदविरोधात् ॥ ९ ॥

**सामीप्यात्तु तद्व्यपदेशः** ॥ १० ॥

ननूपासनप्राप्यं चेत् कार्यं तदा तत्र ब्रह्मशब्दः कुतः प्रयुज्यत इत्याकाङ्क्षायां ब्रह्मपदप्रयोगे हेतुमाह **सामीप्या**दिति । तल्लोकस्थितानां ब्रह्मप्राप्तौ नान्यलोकव्यवधानमतः परब्रह्मसामीप्याद्ब्रह्मत्वेन तद्व्यपदेशः श्रुतौ कृतः । तुशब्देन तस्य वस्तुतो ब्रह्मत्वं व्यवच्छिद्यते ॥ १० ॥

**कार्यात्यये तदध्यक्षेण सहातः परमभिधानात्** ॥ ११ ॥

न'न्वाब्रह्मभुवनाल्लोकाः पुनरावर्तिनोऽर्जुने'ति वाक्यात्ततः कार्याल्लोकात्पुनरावर्तन्ते । अत्र तु 'न तेषामिह पुनरावृत्तिरस्ती'ति पठ्यत इति तस्य कार्यत्वं न वक्तुं शक्यमित्यत आह **कार्यात्यय** इति । कल्पस्य समाप्तौ कार्यस्य ब्रह्मलोकस्य अत्यये नाशे सति तदध्यक्षेण कार्यलोकपतिना चतुर्मुखेन ब्रह्मणा सह जातो हिरण्यगर्भात्परं ब्रह्म ईश्वरं प्राप्नोतीति अपुनरावृत्तिश्रुतिर्न विरुध्यते । अत्र प्रमाणमाह **अभिधाना**दिति । 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः । ते ब्रह्मलोके तु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' इति श्रुतौ परस्य चतुर्मुखायुषः समाप्तिकाले परं यदमृतं ब्रह्म तत्प्राप्य सर्वे परिमुक्ता भवन्तीति कथनात् । तथा च न विरोध इत्यर्थः ॥ ११ ॥

**स्मृतेश्च** ॥ १२ ॥

अत्र स्मृतिमपि प्रमाणयति **स्मृते**रिति । सा च 'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पद'मिति वदति । अत्रापि तथेत्यर्थः । तेन बादरिमते कार्यस्यैव प्राप्तिरिति सिद्धम् ॥१२॥ इति चतुर्थं कार्यं बादरिरित्यधिकरणम् ॥४॥

**परं जैमिनिर्मुख्यत्वात्** ॥ १३ ॥ ( ४-३-५ )

अत्रापि 'स एतान् ब्रह्म गमयती'त्येव विषयवाक्यम् । पूर्ववदेव सन्देहस्तद्बीजं च । पूर्वपक्षस्तु बादरिमतेन । तथा च कार्यमेवोच्यत इति प्राप्ते आह **पर**मिति । अस्मिन्वाक्ये ब्रह्मपदेन परमेव ब्रह्मोच्यते, न कार्यमिति **जैमिनि**राचार्यो मन्यते । कुतः । **मुख्यत्वात्** । ब्रह्मपदेन हि बृहत्त्वादिधर्मविशिष्टं वस्तूच्यते । तादृशं च परमेव ब्रह्म भवतीति ब्रह्मपदस्य मुख्या वृत्तिः **पर**स्मिन्नेव, तस्मात् । तथा चोपासकस्याविद्यादिदोषाभावेन ब्रह्मप्राप्तिप्रतिबन्धाभावेपि भोजकादृष्टेन प्रतिबन्धाद्गत्युपपत्तौ, सुखभोगे ब्रह्मण एव कारणत्वात्सुखबाहुल्येन लोकपदे बहुत्वस्याप्युपपत्तौ सामीप्यनिबन्धनगौण्या अयुक्तत्वेनानुपपत्त्यभावे मुख्यार्थत्यागायोगात्तथेत्यर्थः ॥ १३ ॥

**दर्शनाच्च** ॥ १४ ॥

कार्यात्ययादिसूत्रद्वयोत्तरमाह **दर्शना**दिति । कौषीतकिश्रुतौ 'स एतं देवयानं पन्थानमापद्य'त्यादिना अग्न्यादिलोकवत्प्रजापतिलोकप्राप्तिमुक्त्वा अग्रे 'स ब्रह्मलोक'मिति दर्शयति । न हि तत्र ब्रह्मलोकपदे कार्यो लोक आदर्तुं शक्यते । पार्थक्येन प्रजापतिलोकस्योक्तत्वात्, अतस्तदतिरेकेण ब्रह्मलोकस्य दर्शनात्पूर्वोक्तश्रुतिस्मृत्योः प्रलयविषयत्वेनात्र तद्विषयाभावान्न ताभ्यां प्रकृतश्रुतिविरोधः परिहर्तुं शक्य इति बादरिमतमयुक्तमित्यर्थः॥१४॥

**न च कार्ये प्रतिपत्त्यभिसन्धिः** ॥ १५ ॥

युक्त्यन्तरमाह **नचे**त्यादि । 'ब्रह्मविदाप्नोति पर'मिति यजुषि या परप्राप्तिः फलत्वेनोक्ता तद्विवरणं 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते'ति ऋग्भागेन क्रियते । तत्र चोपक्रमानुरोधात्परेणैव ब्रह्मणा सह कामभोगलक्षणा प्राप्तिरुच्यते । अतः परप्राप्तिरेव श्रुतौ फलत्वेनाभिप्रेता । तथाच संसारगतिप्रतिकूलापत्तिः प्रतिपत्तिः तस्यामेव श्रुते**रभिसन्धि**रभिप्रायः । **न च कार्ये** । नैव कार्ये क्वापि दृष्टः । अतो 'ब्रह्म गमयती'त्यत्रापि या गतिर्ब्रह्मप्राप्तिरूपोच्यते, सापि परब्रह्मविषयैव युक्तेति ब्रह्मपदेनात्र परमेव ग्राह्यमित्यर्थः ॥१५॥ इति पञ्चमं परं जैमिनिरित्यधिकरणम् ॥ ५ ॥

एवं चात्र व्यासपादैः स्वनामग्रहणेपि पूर्वं बादरिमतमुक्त्वा तस्यानुपपन्नत्वबोधकं जैमिनिमतं यत्पश्चादुक्तं तेनेदमेव व्यासचरणानामभिप्रेतम् । तेनेदं पूर्वोत्तरपक्षभेदेनैकमेवाधिकरणमिति ज्ञेयम् ।

**अप्रतीकालम्बनान्नयतीति बादरायण उभयथा दोषात्तत्क्रतुश्च** ॥१६॥(४-३-६)

क्रममुक्त्यधिकारिणः प्रारब्धं भुक्त्वा अमानवेन पुरुषेण प्रापिताः परमेव ब्रह्म प्राप्नुवन्तीति सिद्धम् । तत्रेदं सन्दिह्यते । क्रममुक्तावातिवाहिकत्वेनाधिकृतः अमानवः पुरुषः किं सर्वानेवोपासकान् ब्रह्म प्रापयत्युत कांश्चिदेवेति । तत्र येऽर्चिरादिमार्गगास्तान्नेतुं स नियुक्त इत्यविशेषेण सर्वानेव नयतीति प्राप्तम् । तत्राह **अप्रतीकालम्बना**निति । श्रुतौ सर्वत्र ब्रह्मत्वेनैवोपासनाया उक्तत्वादुपास्येषु भगवद्विभूतिरूपत्वेन शुद्धब्रह्मरूपेषु तथात्वं ज्ञात्वा ये उपासते, ते अप्रतीकालम्बनास्तान् सः अमानवः पुरुषो **नयति** ब्रह्म प्रापयति, नेतरानिति बादरायण आचार्यो मन्यते । कुतः । **उभयथा दोषात्** । ये हि श्रुतिर्ब्रह्मत्वेनोपासनायाः फलसाधनत्वं वक्ति, न तूपास्येषु ब्रह्मत्वं वक्तीत्येवं ज्ञात्वा ये उपासते, ते प्रतीकालम्बनाः, अतद्रूपे तद्रूपत्वेनोपासनं हि प्रतीकमित्युक्तं तेषां तदालम्बनत्वात् । तेषु च ब्रह्मरूपाणां अब्रह्मत्वेनासत्ताज्ञानमेको दोषः, 'असन्नेव स भवति असद्ब्रह्मेति वेद चे'दिति श्रुतेः । असत्त्वमनुसन्धायाप्युपासनायाः फलवत्त्वाय ब्रह्मत्वेन भावनमित्यपरः । 'योऽन्यथासन्तमात्मानमन्यथा प्रतिपद्यते । किं तेन न कृतं पापं चौरेणात्मापहारिणे'ति श्रुतेः । एवमुभयप्रकारेण दोषात् । अत एतादृशान् विहाय पूर्वोक्तानप्रतीकालम्बनान्नयतीति । एवं ज्ञानमार्गीयव्यवस्थामुक्त्वा भक्तिमार्गीयस्य तामाह **तत्क्रतुश्चे**ति । भगवद्भजनलक्षणक्रतुश्च 'कथंचिद्यदि वाञ्छती'ति वाक्योक्तवाञ्छितभोगोत्तरममानवेन नीयत इत्यर्थः । यद्वा । पूर्वोक्तस्तत्क्रतुरमानवपुमपेक्षारहित एव स्वात्मानं ब्रह्म नयतीति । अस्मिन् लाकारप्रयोगविपरिणामाभावादयं पक्ष उत्तमः । न च मन आद्युपासनानां अप्रतीकत्वं न युक्तम् , 'मनो ब्रह्मेत्युपासीते'ति प्रकारवाचीतिशब्दशिरस्कब्रह्मपदप्रयोगेण तस्योपासनाप्रकारावच्छेदकताया एव भानेन उपास्यरूपब्रह्मत्वबोधनाक्षमत्वादिति वाच्यम् । तत्रेतिशब्दस्य हेत्वर्थकत्वात् । न च विनिगमकाभावः । मनो हि ब्रह्म मन उपास्स्वेत्यादेः पूर्ववाक्यस्यैव विनिगमकत्वात् । उपसंहारापेक्षया उपक्रमस्य प्रबलत्वादिति ॥१६॥ इति षष्ठमप्रतीकालम्बनाधिकरणम् ॥६॥

**विशेषं च दर्शयति** ॥ १७ ॥ ( ४-३-७ )

पूर्वाधिकरणे उपास्यानां लिङ्गबलेन ब्रह्मत्वम्, तथा तदुपासने परंपरया साक्षाद्वा ब्रह्मप्राप्तिरिति सिद्धम् । तत्रेदं सन्दिह्यते । ज्ञानमार्गीयाणां भक्तिमार्गीयाणां चाविशेषेण ब्रह्मप्राप्तिरुत कश्चिद्विशेषोस्तीति । तत्रोभयोरपि परब्रह्मोपासकत्वेनाविशेष इति प्राप्ते, आह **विशेष**मित्यादि । 'ब्रह्मविदाप्नोति पर'मित्यस्य व्याख्यानभूता या ऋक् 'सत्यं ज्ञानमनन्तं ब्रह्म यो वेद निहितं गुहायां परमे व्योमन् सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते'ति, सा ज्ञानिभक्तयोः फले विशेषं दर्शयति । तथा हि । 'ब्रह्मविदाप्नोति पर'मिति व्याख्येये वाक्ये ब्रह्मवित् अक्षरज्ञानवान् आप्नोति, सान्निध्यादक्षरमाप्नोति, एतस्यार्थो 'यो वेदे'त्यन्तेन साधनविवरणाद्बोधितः । अथ 'निहितं गुहाया'मित्यादिना 'आप्नोति पर'मित्यस्यार्थो ब्रह्मणा

सह कामभोगरूपो विव्रीयते । तस्मादस्ति विशेष इति । न च व्याख्यानक्लेशादयमर्थो न युक्त इति शङ्क्यम् । 'नायमात्मा प्रवचनेने'ति श्रुतौ भगवल्लाभे वरणातिरिक्तसाधननिषेधादत्राक्षरज्ञानेन तल्लाभाङ्गीकारे तद्विरोधापत्तिरिति तदभावायैवं व्याख्यानस्य युक्तत्वादिति । चकारात् 'एवं सततयुक्ता य'इति प्रश्नमारभ्य 'मय्यावेश्य मनो ये माम्' 'येत्वक्षरमनिर्देश्य' इत्यक्षरसमाप्तिपर्यन्ता स्मृतिः संगृह्यते इति । तस्मादस्ति विशेष इति सिद्धम् ॥ १७ ॥
इति सप्तमं विशेषाधिकरणम् ॥ ७ ॥

**इति श्रीमद्वल्लभाचार्यचरणैकतानश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचितायां ब्रह्मसूत्रवृत्तौ चतुर्थाध्यायस्य तृतीयः पादः ॥ ४ ॥ ३ ॥**

---

**श्रीकृष्णाय नमः ।**

# अथ चतुर्थाध्यायस्य चतुर्थः पादः ।

**सम्पद्याविर्भावः स्वेन शब्दात् ॥ १ ॥ ( ४-४-१ )**

द्वितीयपादे सद्योमुक्तिक्रममुक्त्योः प्रकारं दर्शयित्वा तृतीये क्रममुक्तौ प्राप्यस्वरूपं प्राप्तिप्रकारश्च दर्शितः,समाप्तौ च ज्ञानमार्गीयभक्तिमार्गीययोः सद्योमुक्तावपि तत्क्रतुन्यायादक्षरप्राप्तिपुरुषोत्तमप्राप्तिरूपो विशेषः फलेस्तीति दर्शितम् । अत्र तु तत्फलं कथमनुभवतीत्यतस्तत्प्रकारो विचार्यते, मोक्षस्य निःसम्बोधतानिराकरणाय । सद्योमुक्तिस्तावद् बृहदारण्यके शारीरब्राह्मणे अकामयमानमधिकारिणं प्रक्रम्योक्ता । 'अथाकामयमानो योऽकामो निष्काम आत्मकाम आप्तकामो भवति न तस्मात्प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येती'ति । अत्राग्रे 'स विश्वकृत्स हि विश्वस्य कर्ते'त्यारभ्य 'सर्वस्याधिपतिः सर्वमिदं प्रशास्ती'त्यादिभिः सर्वकर्तृत्वादिधर्मवत्तया ब्रह्मणो विव्रीयमाणतया ब्रह्मणस्तादृशत्वादस्य जीवस्यापि ब्रह्मभावे सति तादृशत्वान्मुक्तस्यापि ससंबोधता । तदेतन्मनसि कृत्य 'यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत' इति श्लोके ब्रह्मसमशनरूपो ब्रह्मबोधप्रकारः सूचितः, स्वप्रतिज्ञानुरोधात्तु न सम्यग्विवृतः । पुष्टिमर्यादाभेदेन सद्योमुक्तेः सङ्कीर्णत्वाच्च । स चानुभवप्रकारो 'ब्रह्मविदाप्नोती'त्यत्र विवृत इति तं मनसि कृत्य सन्दिह्यते । किमन्तः स्थित एवाश्नुत उत पुनर्जन्म प्राप्येति । तत्र क्रमेण ब्रह्मलोकं प्राप्तानामपि 'न स पुनरावर्तत' इति 'तेषामिह न पुनरावृत्तिरस्ती'त्यादिश्रावणात्तेषामपि चेदनावृत्तिः, तदा साक्षाद्ब्रह्मसायुज्यं प्राप्तानां सा दूरनिरस्तेत्यन्तःस्थित एवाश्नुत इति प्राप्तम् । तत्र प्रतिवदति **सम्पद्ये**त्यादि । ब्रह्मसम्पद्यापि स्थितस्य जीवस्य भजनानन्दे दित्सिते भगवत्कृपावशात्पुनराविर्भावो बहिःप्राकट्यं भवत्येव । तत्र हेतुः । **स्वेने**ति । स्वशब्दो भगवद्वाचकः । भूमविद्यायां

'आत्मन आविर्भावतिरोभावा'विति श्रावणात् । न चापुनरावृत्तिश्रुतिविरोधः । तत्रेहेतिपदेन प्रपञ्च एव तन्निषेधेनाविरोधात् । लीलायास्तु प्रपञ्चातीतत्वात् । ननु तथापि प्रकृते स विवक्षित इत्यत्र किं मानमित्यत आहुः **शब्दा**दिति । 'सोऽश्नुते सर्वान्कामान् सह ब्रह्मणा विपश्चिते'ति ब्रह्मणा पुरुषोत्तमेन सह जीवस्य भोगबोधकात् वाक्यरूपाच्छब्दात् । तथा चात्रोक्तो भोगो विग्रहमन्तरेणासंभवन्नर्थतस्तं बोधयतीति स एव शब्दोत्र मानमित्यर्थः ॥१॥

**मुक्तः प्रतिज्ञानात् ॥ २ ॥**

ननु ब्रह्मसंपत्तिरेव मुक्तिरिति तत्संपन्नस्य मुक्तत्वम् । आविर्भावस्तु विभागे सति व्युच्चरणाद्भवति । तथा सति सृष्ट्यादाविव बन्धोपि संभाव्यत इति कथमाविर्भावस्य मुक्तित्वमित्याकाङ्क्षायां तदर्थं हेत्वन्तरमाह **मुक्त** इत्यादि । अत्र 'ब्रह्मविदाप्नोति पर'मिति वाक्ये मुक्तिः प्रतिज्ञाता । सा च 'सोऽश्नुत' इत्यादिना विव्रीयते इति तस्याशनस्य मुक्तित्वम् । अतः **प्रतिज्ञाना**दाविर्भूतो मुक्त इति तस्याविर्भावस्य न बन्धकत्वं न वा आवृत्तिरूपत्वमित्यर्थः ॥ २ ॥

**आत्मा प्रकरणात् ॥ ३ ॥**

नन्वत्र ब्रह्मणा सह कामभोग उच्यते, भोगस्तु गुणसाध्य एव प्रायो दृष्ट इति 'ब्रह्मणा सहे'ति ब्रह्मपदं सगुणपरमेव युक्तमिति न तस्य मुक्तित्वमित्याशङ्कायामाह **आत्मे**त्यादि । अत्र ब्रह्मपदेन आत्मा व्यापको मायागुणसंबन्धरहित एवोच्यते, न तु सगुणः । कुतः । **प्रकरणात् ।** 'ब्रह्मविदाप्नोति पर'मित्युपक्रम्य तत्पाठात् गुणातीतस्यैव तत्प्रकरणम् । न ह्यक्षरात्परः सगुणो भवति । अतो ब्रह्मपदेनात्र गुणातीतमेवोच्यतेऽतो न तस्य मुक्तित्वभङ्ग इत्यर्थः ॥ ३ ॥

**अविभागेन दृष्टत्वात् ॥ ४ ॥**

ननु 'ब्रह्मविदाप्नोति पर'मिति भिन्नार्थप्रतिपादकं वाक्यम्, ऋक्च तदतिरिक्तार्थप्रतिपादिका, परस्पराकाङ्क्षाबोधकं पदं च नास्तीत्येकवाक्यत्वाभावान्नैकं प्रकरणमतोत्र ब्रह्मपदं सगुणवाचकमित्याशङ्क्य समाधत्ते **अविभागेने**त्यादि । 'ब्रह्मविदाप्नोति पर'मितिपूर्ववाक्याविभागेनैवेयमृग्वर्तते । कुतः । **दृष्टत्वात् ।** 'ब्रह्मविदाप्नोति पर'मिति पूर्ववाक्यानन्तरं 'तदेषाभ्युक्ते'तिवाक्ये तच्छब्देन पूर्वोक्तमर्थमभिमुखीकृत्येषा ऋगुक्तेति दृश्यते । अत एवमेकवाक्यत्वस्य दृष्टत्वादत्रार्चि गुणातीतमेव प्रतिपाद्यम् । अग्रे च 'तस्माद्वा एतस्मा'दित्यादिना मान्त्रवर्णिकमेव सर्वस्मिन् प्रपाठक उच्यत इति प्रकरणमप्येकमेवेति नात्र सगुणं वक्तुमुचितमित्यर्थः ॥ ४ ॥ इति प्रथमं संपद्याविर्भाव इत्यधिकरणम् ॥ १ ॥

**ब्राह्मेण जैमिनिरुपन्यासादिभ्यः ॥ ५ ॥ ( ४-४-२ )**

पूर्वाधिकरणे ब्रह्मसायुज्यं प्राप्तोप्यतिकृपया बहिराविर्भूतो भगवता सह सर्वान् कामानश्नुत इति पूर्वसूत्रद्वये सिद्धम् । तदग्रिमसूत्रद्वये च भगवतः परमात्मात्मत्वम् । तत्र

पूर्वसूत्रद्वयविषय इदं चिन्त्यते—आविर्भूतो जीवः किं प्राकृतेन शरीरेणाश्नुते, उताप्राकृतेनेति । तत्र भोगस्य लौकिकताया एव दृष्टत्वादयमपि भोगस्तादृश एवेति तदायतनमपि लौकिकमेव मन्तव्यमिति प्राप्ते तत्राह **ब्राह्मेणे**त्यादि । **ब्राह्मेण** ब्रह्मण इदं ब्राह्मं ब्रह्मणा भगवता स्वभोगानुरूपतया संपादितं सत्यज्ञानानन्दात्मकं यच्छरीरं तेन शरीरेण पूर्वोक्तान् भोगानश्नुत इति **जैमिनि**राचार्यो मन्यते । तत्र हेतुः । **उपन्यासादिभ्य** इति । उप समीपे न्यासो व्युत्पादनं विवरणमिति यावत्, स आदिर्येषां तद्गुणसंविज्ञानः ते उपन्यासादयस्तेभ्यः । तथा च 'ब्रह्मविदाप्नोति पर'मिति ब्रह्मविदः परप्राप्तिं प्रतिज्ञाय तद्विवरणमस्यामृचि 'सोऽश्नुत' इत्यादिना क्रियते, स उपन्यासः आदिपदेनाग्रेऽन्नमयादीनां विभूतिरूपाणां बहूनां कथनं तेभ्यो हेतुभ्यः । यदि हि मुक्तानां ब्राह्मं शरीरं श्रुतिर्नाभिप्रेयात्, तदा परप्राप्तिमेवं विवृणुयात्, अन्नमयादीनां चोपास्यत्वादिना विभूतिरूपतां न स्फुटीकुर्यात्, अतस्तथेत्यर्थः । एवमेकं मतमुक्तम् ॥ ५ ॥

**चिति तन्मात्रेण तदात्मकत्वादित्यौडुलोमिः ॥ ६ ॥**

अत्र मतान्तरमाह **चितीत्या**दि । 'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरे अयमात्मानन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन' इति श्रुतौ घनपदेन अकृत्स्नत्वनिवारकेण कृत्स्नपदेन च ज्ञानात्मकविग्रहात्मकत्वं ब्रह्मणो बोध्यते, अन्यथैतत्पदद्वयं न वदेत्, प्रयोजनाभावात्, अतस्तादृशेन सह भोगकर्त्रा तादृशेनैव भवितव्यमिति **चिति** चिद्रूपे ब्रह्मणि **तन्मात्रेण** चिन्मात्रेण रूपेण कामान् भुङ्क्ते, भगवतः पूर्णानन्दत्वात्तत्संबन्धेन तदानन्दाननुभवति । न तु विग्रहेण। श्रुतौ जीवस्य विग्रहवत्ताया अनुक्तत्वात् । अत्रोपपादकं हेतुमाह **तदात्मकत्वा**दिति । प्रथमे मैत्रेयीब्राह्मणे तस्यापि विज्ञानघनत्वश्रावणेन जीवस्य स्वभावत एव चिदात्मकत्वादि**त्यौडुलोमि**राचार्यो मन्यते। कामपदेन चेच्छोच्यते, 'सोकामयते'त्यादौ तथादर्शनात् । तथा चैतज्जातीयकानन्दानुभवोस्य भवत्वितीच्छानुभवे तद्विषयानन्दानुभवोपि तस्य चिन्मात्रेणैव रूपेणेत्यर्थस्तस्य मते संपद्यते ॥ ६ ॥

**एवमप्युपन्यासात्पूर्वभावादविरोधं बादरायणः ॥ ७ ॥**

एवं मतद्वयमुक्त्वात्र भगवान् व्यासः स्वमतमाह **एवमपी**त्यादि । सत्यं जीवश्चिन्मात्रः, परन्तु 'ब्रह्मविदाप्नोति पर'मेतस्य विवरणर्चि **एवमप्युपन्यासात्** 'यो वेद निहितं गुहाया'मिति विग्रहं विनानुपपद्यमानाया हृदयाकाशबोधकगुहाया उक्त्या । 'सोऽश्नुत' इति जीवस्य भोगे स्वतन्त्रतायाः 'ब्रह्मणा सहे'ति भोगे ब्रह्मणो गुणभावस्य, 'विपश्चिते'ति भोगचातुर्यस्य च तादृशस्योक्त्या विग्रहवत्त्वेनाप्युपन्यासात् । **पूर्वभावात्** । भक्तस्य तत्प्राप्तेः पूर्वमेव भगवदीप्सितभोगानुरूपविग्रहाणां सत्त्वात् । जीवचिन्मात्रताया अबाधेनाविरोधं **बादरायण** आचार्यो मन्यते । तथा च चिन्मात्रत्वं ब्राह्मशरीरवत्त्वं चोभयमप्यविरुद्धमित्यर्थः ॥ ७ ॥

**सङ्कल्पादेव च तच्छ्रुतेः ॥ ८ ॥**

अत्र हेत्वपेक्षायामाह **सङ्कल्पे**त्यादि । जीवस्य भजनानन्दं दातुं यो भगवतः सङ्कल्पः विचारस्तस्मादेव हेतोः स एवं विग्रहं प्राप्नोति, न तु सर्वः । तत्र प्रमाणापेक्षाया-माह **तच्छ्रुते**रिति । 'नायमात्मे'त्युपक्रम्य 'यमेवैष वृणुते तेन लभ्य' इति श्रुतेः । आत्मा हि परस्तस्य लाभः प्राप्तिस्तत्र वरणरूपः सङ्कल्प एव हेतुतया श्राव्यत इति तथेत्यर्थः । चकारात्तज्जनिता तदनुरूपा परमार्तिरपि संगृह्यते ॥ ८ ॥

**अत एव चानन्याधिपतिः ॥ ९ ॥**

पुष्टिमार्गीयस्यैव तथाकरणे हेतुमाह **अत एवे**त्यादि । यतो हेतोः पुष्टिमार्गीयाणां वरणादिरूपं साधनं स्वस्वरूपात्मकं फलं च स्वयमेव **अत एव** हेतोः **अनन्याधिपतिः** न विद्यते साधनं च फलं च भगवदतिरिक्तं येषां तेऽनन्यास्तेषामधिपतिः स्वामी । तथा च तत्स्वामित्वमेव हेतुरित्यर्थः । चकारेण 'मदन्यत्ते न जानन्ती'त्यादिवाक्यं संगृह्यते ॥ ९ ॥

**अभावं बादरिराह ह्येवम् ॥ १० ॥**

मुक्तस्य देहाङ्गीकारे बादरिः प्रत्यवतिष्ठत इत्याह **अभाव**मित्यादि । मुक्तस्य देहेन्द्रियाभावं बादरिराचार्यो मन्यते । तत्र हेतुः । **आह ह्येव**मिति । हि यतो हेतोः श्रुतिः **एवं** वक्ष्यमाणरीत्या देहाद्यभावमाह । 'यत्र हि द्वैतमिव भवति तदितरदितरं पश्यती'त्याद्युक्त्वा 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्ये'दित्यादिना ब्रह्मविदो द्वितीयज्ञाननिषेधमाह । तथा च तस्य कामभोगवार्ता दूरतरेति तदाक्षेप्यो देहोपि न वक्तुं शक्य इत्यर्थः ॥ १० ॥

**भावं जैमिनिर्विकल्पामननात् ॥ ११ ॥**

जैमिनिस्तु तदुक्तं न मन्यत इत्याह **भाव**मित्यादि । जैमिनिस्त्वाचार्यो मुक्तस्य पुंसो देहादेर्भावं सत्तां मन्यते । तत्र हेतुः । **विकल्पामननात्** । विरुद्धं पक्षान्तरं विकल्पस्तस्यामननात् आसमन्ताद्विचारात्, 'ब्रह्मविदाप्नोति पर'मिति श्रुतिः परप्राप्तौ ब्रह्मज्ञानस्य हेतुत्वमाह, 'नायमात्मे'ति श्रुतिस्तु वरणमात्रस्य हेतुत्वमिति साधने विरुद्धं पक्षद्वयम् । तथा 'सोऽश्नुत' इत्यत्र परप्राप्त्युपन्यासः क्रियते, 'इहैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येती'त्यत्र तु लय उच्यते इति फले विरुद्धं पक्षद्वयम् । अतः श्रुत्योर्विरोधे सति तदभावाय ज्ञानमार्गीयस्य ब्रह्मज्ञानेनाक्षरप्राप्तिस्तत्राप्ययरूपा, पुष्टिमार्गीयभक्तस्य तु 'सोऽश्नुत' इत्यादिनोक्ता पुरुषोत्तमभजनानन्दप्राप्तिर्वरणात्तत्साहाय्याद्वेति व्यवस्था श्रुत्यभिप्रेतेति तस्य व्यवस्थितविकल्पस्य सम्यग्विचारात्पुष्टिमार्गीयभक्तस्य भोगसाधनभूतविग्रहवत्त्वं निःप्रत्यूहं मन्यते, 'तत्केन कं पश्ये'दित्यादिना तु मर्यादामार्गीयस्य ब्रह्मज्ञानसामयिकी व्यवस्थोच्यत इति न दोषः । एवं विषयत्वपक्षेपि तत्र पूर्वकक्षोच्यत इत्यदोष इति न किमप्यनुपपन्नमित्यर्थः ॥ ११ ॥

**द्वादशाहवदुभयविधं बादरायणोतः ॥ १२ ॥**

एवं मतद्वयमुक्त्वा स्वसिद्धान्तमाह **द्वादशाहव**दित्यादि । बादरायणस्तु परमाचार्य-स्तस्य शरीरमुभयविधं भूताजन्यत्वभोगायतनत्वाभ्यां धर्माभ्यां शरीरत्वाशरीरत्वोभयप्रकारकं मन्यते, तत्र हेतुः **अत** इति । भूमविद्यायां तस्य केवलं नित्यनिरवध्यानन्दरूपभूमात्म-जन्यत्वश्रावणात् । तत्र हि 'यत्र नान्यत्पश्यती'त्यादिना केवलभावविषयत्वं भूम्नः पुरुषो-त्तमस्य लक्षणमुक्त्वा, केवलभाववतो भक्तस्य विप्रयोगसामयिकीं व्यवस्थां च 'स एवाधस्तात्स उपरिष्टा'दित्यादिनोक्त्वा, ततः ' स वा एष एवं पश्यन्नेवं मन्वान ' इत्यादिना तदनुवा-दपूर्वकं भक्तस्य संयोगावस्थामाह 'आत्मरतिरात्मक्रीड आत्ममिथुन आत्मानन्द' इति वाक्येन । सा चावस्था 'सोऽश्नुत ' इत्युक्तार्थसंवादिनीति रत्यादिभिर्देहेन्द्रियादिकं भक्तस्याक्षिपति । ततस्तत्कीदृशमित्याकाङ्क्षायां 'तस्य ह वा एतस्यैवं पश्यत एवं मन्वान-स्यैवं विजानत आत्मतः प्राण आत्मत आशे'त्यादिना प्राणाशास्मराकाशतेजोबाविर्भावति-रोभावान्नबलविज्ञानध्यानचित्तसङ्कल्पमनोवाङ्नाममन्त्रकर्मैतत्सर्वान्तानामुक्तत्वात्केवलानन्दप्र-धानभूमजन्यत्वमाह । तत्रा'प्यात्मत' इत्यव्ययप्रयोगेणाविकृतत्वमात्मन आह, तेनै-तादृशादात्मन उत्पन्नमेतादृशमेव तद्भवतीत्यर्थः संपद्यते । अतो मुक्तस्य यच्छरीरं तदे-वमात्मजन्यत्वेन भूताजन्यत्वादशरीरम्', 'आत्मरति'रित्यादिना 'सोऽश्नुत' इत्यादिना च भोगश्रावणेन तदायतनत्वाच्च शरीरमित्युभयविधमित्यर्थः । नन्वानन्दमयाधिकरणे विषय-श्रुतौ एवंविदो भक्तस्य एतल्लोकत्यागः 'अस्माल्लोकात्प्रेत्ये'त्यनेनोक्तः, सोत्र 'वाङ्मनसी'-त्यादिना 'सोध्यक्षे तदुपगमादिभ्य' इत्यन्तेन व्युत्पादितः । या पुनस्तदग्रे 'एतमन्नमयमा-त्मानमुपसङ्क्रामती'त्यादिना विभूतिरूपाणां प्राप्तिरुक्ता फलानुभवोपयोगिनी, सात्र 'संप-द्याविर्भावा'दिसूत्राभ्यामुक्त्वा 'ब्राह्मेणे'त्यादि'द्वादशाह'सूत्रान्तैः व्युत्पाद्यते । फलानुभवस्त्वति-विगाढभावेन सर्वात्मभावे सत्येव भवतीति तद्बोधनार्थं या पूर्वं विरहदशा, सा तत्र ब्रह्मवि-त्प्रपाठकश्रुतौ 'यतो वाचो निवर्तन्त'इत्यारभ्य 'उभे ह्येवैष एते आत्मानꣳस्पृणुत' इत्यन्तेन भृगुप्रपाठके च 'हावुहावु'इत्यारभ्य 'अहं विश्वं भुवनमभ्यभवां सुवर्णा ज्योती'रित्यन्तेनोक्ता । तथा सति यस्तादृशः स आनन्दमयं ब्रह्मस्वरूपमात्मादेशोक्तप्रकारेणाहंकारादेशोक्तप्रकारेण वानुभवतीति सिद्ध्यत्यतो विभूतिरूपाणां प्राणादीनां लयाङ्गीकारोनुपपन्न इति चेत् । न । अहंकारादेशे आत्मादेशे च सर्वस्मिन् स्वाभेदस्यात्माभेदस्य च भानोक्त्या लयस्यार्थादेव बोधितत्वात् । अथ तत्र तेषां भक्तानां पार्थक्येन प्राणाद्यभानमेवाभिप्रेतम् , न सर्वात्मना लय इत्युच्यते, तदापि तस्यां दशायां ब्रह्मणा सह सर्वकामाशनरूपस्यात्मरतिरित्यादिनोक्तस्या-नुभवस्याभावात् फलतस्तौल्यमेवेति तयाङ्गीकारो नानुपपन्न इति जानीहि । एकस्य मुक्त-जीवदेहस्य विरुद्धोभयधर्मवत्त्वममन्वानमृष्यन्तरं बोधयितुं वैदिकं दृष्टान्तमाह **द्वादशाह-वदि**ति । 'यः कामयेत प्रजायेयेति स द्वादशरात्रेण यजेते'ति यजतिचोदनया द्विरात्रादिव-

दहीनत्वम् । तथा 'द्वादशाहमृद्धिकामा उपेयु'रित्युपैतिचोदनया च सत्रत्वं द्वादशाहस्य गम्यते, तद्वत्, षष्ठयर्थे वतिः । एवमेतैरष्टभिः सूत्रैः संपद्याविर्भावसूत्रोक्तो मुक्तस्याविर्भावो विचारितः ॥ १२ ॥ इति द्वितीयं ब्राह्मेणेत्यधिकरणम् ॥ २ ॥

**तत्त्वभावे सन्ध्यवदुपपत्तेः** ॥ १३ ॥ ( ४-४-३ )

अतः परं 'आत्मा प्रकरणा'दित्यादिसूत्रद्वये यद्ब्रह्मस्वरूपमुक्तं तदत्र विचारयति **तत्त्वभाव** इत्यादिद्वाभ्याम् । तत्रावतारकालीनैर्द्रष्टृभिः पुरुषैरवतीर्णे भगवति व्रणश्रमग्लान्याद्यवस्था दृश्यन्त इति तस्य स्वरूपस्य कथमप्राकृतत्वमित्याशङ्क्य तन्निवारणाय तादृग्दर्शनं तदभावेपीत्यत्रोपपत्तिमाह **तत्त्वि**त्यादि । तुः शङ्कानिरासे । **तत्** भगवत्स्वरूपे व्रणश्रमादिदर्शनं व्रणाद्यभावे, अविद्यमानानां दर्शनं कथमुपपद्यत इत्यत आह **सन्ध्यव**दिति । स्वाप्निकपदार्थवत् । 'न तत्र रथा न रथयोगा न पन्थानो भवन्त्यथ रथान् रथयोगान् पथः सृजत'इति श्रुतौ मायामात्रायाः सृष्टेरुक्तत्वात्तस्या यथा अविद्यमानाया एव वासनावशाद्दर्शनम्, तथा तेषामपि दर्शनमुपपद्यते । अत एवं दर्शनस्योपपत्तेः स्वरूपस्याप्राकृतत्वमप्रत्यूहमित्यर्थः । एतच्च ब्रह्माण्डपुराणे नारदं प्रति ब्रह्मणोक्तम् । तथा हि । 'निर्दोषश्चेत्कथं विष्णुर्मनुष्येषु प्रजायते । चिन्ताश्रमव्रणाज्ञानदुःखयुग्दृश्यते कथम् ॥ एवं मे संशयो ब्रह्मन् हृदि शल्य इवार्पित ।' इति नारदप्रश्ने, 'स्त्रीपुंमलानुषङ्गात्मा देहो नास्य विजायते । किन्तु निर्दोषचैतन्यसुखनित्यां स्वकां तनुम् । प्रकाशयति सैवेयं जनिर्विष्णोर्न चापरा । तथाप्यसुरमोहार्थं परेषां च क्वचित् क्वचित् । दुःखाज्ञानश्रमादींश्च दर्शयेच्छुद्धसद्गुणः । क्व व्रणादि क्व चाज्ञानं स्वतन्त्राचिन्त्यसद्गुणे । दौर्लभ्याच्चैव मोक्षस्य दर्शयेत्तानजो हरिः ॥ कृष्णो ह्यत्यक्तदेहोपि त्यक्तदेहस्य देहवत् । लोकानां दर्शयामास स्वरूपसदृशाकृति'मिति ॥ १३ ॥

**भावे जाग्रद्वत्** ॥ १४ ॥

एवं दोषदर्शन उपपत्तिकथनेन ब्रह्मत्वं निर्णीय गुणदर्शने तत्कथनेन ब्रह्मत्वं निश्चाययति **भाव** इत्यादि । अत्रापि पूर्वसूत्रादुपपत्तेरित्यनुवर्तते । तथा च रिङ्गणादिलीलासु परिच्छिन्नत्वादिना लौकिकवद्भासमाने मुग्धत्वादिभावे च यद्भक्तानां तद्वत्तया दर्शनं तत्तु **भावे** विद्यमान एव तादृशे धर्मे भवति । तत्र दृष्टान्तः । **जाग्रद्व**दिति । मोहाभाववतः पुंसो जाग्रद्दशायां यथा विद्यमानानामेव दर्शनं चक्षुःसन्निकर्षेण भवति तथेति । अत्रापि उपपत्तेरित्येव हेतुः । 'तेन लोकवत्तु लीला कैवल्य'मिति न्यायेन या लीलाः करोति, ता भगवतो नैसर्गिकधर्मरूपानन्दात्मकत्वेन विद्यमाना एव भक्तानां दर्शनगोचरतां प्राप्नुवन्ति । धर्मधर्मिणोर्भिन्नत्वेपि प्रकाशाश्रयादिन्यायेनाभेदात् । अत एव लीलानां कैवल्य एव प्रवेशात् 'साक्षी चेता केवलो निर्गुणश्च' 'स यथा सैन्धवघन' इत्यादीनामपि न विरोध इति ब्रह्मत्वं तदापि निःप्रत्यूहमित्यर्थः । एवं द्वाभ्यां भगवत्स्वरूपं फलभूतं विचारितम् ॥१४॥ इति तृतीयं तत्त्वभावाधिकरणम् ॥ ३ ॥

**प्रदीपवदावेशस्तथा हि दर्शयति॥ १५॥ (४-४-४)**

एवमधिकरणत्रयेण फलप्राप्तिं सपरिकरं फलस्वरूपं च विचार्येदानीं फलानुभवोपकरणं विचारयति। तत्र भगवद्भोगरूपोनुभवो जीवस्य संभवति न वेति संशयः। तत्र 'सोऽश्नुत' इति श्रुत्या भोगस्योक्तत्वेपि जीवस्य पूर्णज्ञानक्रियाशक्त्योरभावेन योग्यत्वाभावात् 'न तत्सम' इति श्रुत्या साम्यस्य वक्तुमशक्यत्वान्न संभवतीति प्राप्ते तद्वारणायोपपत्तिमाह **प्रदीपव**दित्यादि। सत्यं जीवसामर्थ्येन न संभवति, किन्तु **प्रदीपवदावेशः,** यथा प्रकृष्टः प्राचीनो दीपोऽर्वाचीनायां स्नेहयुक्तायां वर्त्यां प्रविष्टः स्वसामर्थ्येन तां स्वसमानकार्यक्षमां करोति, स्वयं च स्नेहाधीनस्थितिस्तस्यां भवति, तथात्रापि स्वावेशेन तौल्यसंपादनात्सर्वं संपद्यते इत्यर्थः। आवेशे प्रमाणमाह **तथा हि दर्शयती**ति। तैत्तिरीयारण्यके भर्तृसूक्तारम्भे 'भर्ता सन् भ्रियमाणो बिभर्ति एको देवो बहुधा निविष्ट' इति श्रुतिस्तथा आवेशं दर्शयति। न चायं निवेशोन्तर्यामिरूपेण यः प्रवेशस्तदात्मक इति वाच्यम्। तस्यैकविधत्वेन बहुधेति पदकोपप्रसङ्गात्। अतः 'सोऽश्नुते सर्वान्कामा'नित्युक्तत्वाद्यस्य कामस्य यथा भोगो भवति, तदनुरूपो यस्तत्र तत्र प्रवेशः, स एव बहुधेति पदेऽभिप्रेयत इत्यर्थः। 'सर्वस्येशान' इति श्रुत्या सर्वेश्वरत्वेपि तत्पदं विहायात्र श्रुतौ भर्तृपदप्रयोगात् यं जीवं स्वीयत्वेन वृणुते, तस्य विवाहितः पतिरिव भर्ता भवतीति बोध्यते। तथा च स्वयं भर्ता सन् वरणजस्नेहातिशयेन भक्तैर्भ्रियमाणः सन् त इव स्वयमपि तान् स्वस्मिन्बिभर्ति। अत एव प्रदीपदृष्टान्तमुक्तवान् व्यासः। स्नेहराहित्ये त्वयोगोलकादिकमेव दृष्टान्तीकुर्यात्, तादृशप्रवेशस्य तत्रापि सत्त्वादिति। अतोयमेवाभिप्राय इत्यर्थः॥ १५॥

**स्वाप्ययसंपत्त्योरन्यतरापेक्षमाविष्कृतं हि॥ १६॥**

नन्वस्थूलादिश्रुतौ 'न तदश्नोति कंचन न तदश्नोति कश्चने'त्यनेन भोगाभाव उच्यते, 'सोऽश्नुत' इति श्रुतौ च भोग इत्युभयोर्विरोधाभावाय सगुणनिर्गुणभेदेन विषयभेदोऽवश्यं वाच्य इत्याशङ्कायामाह **स्वाप्यये**त्यादि। **आविष्कृतं** आविष्कारः प्रादुर्भवनमिति यावत् तत् **हि** यतो हेतोः **स्वाप्ययसंपत्त्योरन्यतरापेक्षं** स्वाप्ययः सुषुप्तिः संपत्तिर्ब्रह्मप्राप्तिस्तदन्यतरापेक्षमिति सुषुप्तौ संपत्तौ च भवति। तेनाद्ये प्रकारे यो भोगाभावः, स 'न तदश्नोति कंचने'त्यादिनोच्यते, यः पुनर्भोगः स द्वितीये प्रकारे 'सोऽश्नुत' इत्यादिनोच्यत इति विरोधाभावात्सगुणनिर्गुणविभागकल्पनं ब्रह्मणि न कर्तव्यमित्यर्थः॥ १६॥ इति चतुर्थं प्रदीपवदित्यधिकरणम्॥ ४॥

**जगद्व्यापारवर्जं प्रकरणादसन्निहितत्वाच्च॥ १७॥ (४-४-५)**

एवं भोगोपकरणं विचार्य भोगप्रकारं विचारयितुमधिकरणान्तरमारभते। तत्र ब्रह्मणा सह भोगकरणे भक्तस्य लौकिकव्यापारोस्ति न वेति संशये भोगस्य सर्वत्र लौकिकव्यापारयुक्तत्वादस्मिन्नपि सोस्तीति प्राप्तम्, तत्राह **जग**दित्यादि। प्राप्तसायुज्यभक्तस्य यद्ब्रह्मणा सह

भोगकरणम्, तत् **जगद्व्यापारवर्जं** जगतो लोकस्य संबन्धी यो व्यापारस्तद्रहितम्। तत्र हेतुः। **प्रकरणादसन्निहितत्वाच्चे**ति। 'ब्रह्मविदाप्नोति पर'मित्यत्र हि मुक्तिः प्रकृता, अत इदं मुक्तिप्रकरणम्, मुक्तौ च सर्वेषामिन्द्रियाणां ब्रह्मणि लये सति तेभ्यो भजनानन्दं दातुमानन्दरूपाणीन्द्रियादीनि दीयन्तेऽतस्तानि भजनार्थान्येवेति तेषां लौकिकव्यापारोऽसंभावितः। किञ्च, 'क्षयन्तमस्य रजसः पराक' इत्यादिश्रुतौ 'न यत्र कालोऽनिमिषां परः प्रभुः कुतो नु देवा जगतां य ईशिरे। न यत्र सत्त्वं न रजस्तमश्च न वै विकारो न महान्प्रधानम्, परं पदं वैष्णवमामनन्ती'ति द्वितीयस्कन्धे द्वितीयेध्याये वाक्यात् 'न यत्र माया किमुता परे हरेरनुव्रता यत्र सुरासुरार्चिता' इति नवमाध्याये लोकं प्रक्रम्य वाक्याच्च भगवद्धाम्नोऽक्षरस्य कालमायाद्यतीतत्वे तत्रत्यलीलाया अपि तथात्वेन प्राकृतस्य जगतो दूरतरत्वेनासन्निहितत्वमतस्तथेत्यर्थः। किञ्च, छान्दोग्ये 'भूमैव सुखं भूमा त्वेव विजिज्ञासितव्य' इत्युक्त्वा 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमे'ति भूमलक्षणमुच्यते। तत्र 'नान्यद्विजानाती'त्येतावतैव चारितार्थ्येऽपि यत्पश्यतिशृणोतिभ्यां यदिन्द्रियान्तरस्यापि व्यापारोऽन्यविषयको निषिद्धः, तेन भगवद्विषयक एव सर्वेन्द्रियव्यापारः सिद्धो भवति, तेन भगवत एव सर्वेन्द्रियव्यापारविषयस्य स्वतन्त्रफलत्वमुक्तं भवति। तस्य सुखस्य प्रयोजनान्तराभावादिति १७

**प्रत्यक्षोपदेशादिति चेन्नाधिकारिकमण्डलस्थोक्तेः ॥ १८ ॥**

ननु छान्दोग्ये मुक्तिप्रकरण एव 'सर्वँ ह पश्यः पश्यती'ति सर्वविषयकं प्रत्यक्षमुपदिश्यते, सर्वं च जगदेव 'सर्वं खल्वि'त्यादिश्रुतौ सिद्धम्। अतस्तद्विषयकप्रत्यक्षोपदेशान्मुक्तस्य जगद्व्यापारराहित्यं नोपपद्यते इति। किञ्च, 'सर्वं हि पश्यः पश्यती'ति श्रुतावेकवचनं यदुपदिश्यते, तेन भक्तेन सह क्रियमाणानां लीलानां तु देशकालभेदेन नैकत्वम्। तासां च सविशेषणानित्यत्वं भगवद्धर्मत्वात् पूर्वमुक्तम्, तच्च विशेषणभूतस्य भक्तस्यानेकदेहत्वे सिद्ध्यति, न त्वेकदेहत्वे विशेषणविघटनात्। अतो भक्तैकत्वस्य प्रत्यक्षोपदेशाल्लीलानित्यत्वं नोपपद्यत इति च सूत्रभागेनाशङ्क्य भागान्तरेण परिहरति **नेत्यादि**। इयमाशङ्का न कार्या। तत्र हेतुः। **आधिकारिके**त्यादि। अधिकारो लीलानुभवयोग्यता तस्येदं आधिकारिकं तेषां मण्डलं चक्राकारेण परिणतः समूहस्तस्मिंस्तिष्ठतीत्याधिकारिकमण्डलस्थं तस्योक्तिस्तस्याः सकाशात्। तथा च 'सर्वँ ह पश्यः पश्यती'त्युक्त्वा अग्रे 'सर्वमाप्नोति सर्वश' इति कथनाद्दर्शनविषयवाचके सर्वपदेऽर्थं सङ्कोच्य लीलासंबन्धि यत्सर्वं तदेवोपदिश्यते, न तु जगदतो नानुपपन्नं जगद्व्यापारराहित्यम्। किञ्च, तस्यैवाग्रे 'एकधा भवति त्रिधा भवति पञ्चधा सप्तधा नवधा चैव पुनश्चैकादश स्मृतः शतं च दश चैकश्च सहस्राणि च विंशति'रित्यनेकरूपत्वं भक्तस्य पठ्यते इत्याधिकारिकदेहसमूहस्थ एव भक्तः 'सोऽश्नुत' इत्यादावुच्यतेऽतो विशेषणविघटनाभावाल्लीलानित्यत्वमपि नानुपपन्नमित्यर्थः ॥ १८ ॥

**विकारावर्ति च तथा हि स्थितिमाह ॥ १९ ॥**

ननु लीलाविशेषणीभूतानां तत्तद्देशतत्तत्कालतत्तद्भक्तदेहानां नित्यत्वे सति 'श्वस्त्वद्गेह-मायास्य'इति प्रभुणोक्ते तदाशया तस्य भक्तस्य स्थितिर्नोपपद्यते । लीलानां नित्यत्वेन द्वितीयदिनरूपस्य कालस्य तदागमनस्य पूर्वदिवस उक्तिसमयेपि विद्यमानत्वात् । तथा 'श्व' इति प्रभूक्तिरपि तत एव नोपपद्यत इत्याशङ्क्य समाधत्ते **विकारे**त्यादि । ब्रह्मणा सह भोगकरणं **विकारावर्ति**। भगवल्लीला हि कारणरूपा विकृतिभिरनुक्रियते, 'तमेव भान्तमनु-भाति सर्व'मिति श्रुतेरित्यनुकृत्यधिकरणे साधितम्, अतो भगवल्लीला प्रकृतिः । तद्विरुद्धः प्रापञ्चिकः पदार्थो विकारः कार्यत्वात् तस्मिन् विकारे न वर्तते । चकारात्तत्सलक्षणमपि । तथा च यं प्रति श्व इत्यादिकं वदति, तस्य वदनदिवसे भगवत्स्थितिज्ञानं न भवतीत्येता-वतैव तदुपपत्तेर्न लीलानां तद्विशेषणानां कालादीनां च नित्यत्वभङ्ग इत्यर्थः । अत्र प्रमाणा-पेक्षायामाह **तथा हि स्थितिमाहे**ति । 'सर्वमाप्नोति सर्वश' इति श्रुतिरेकस्यैव भक्तस्य सर्वशः सर्वैः प्रकारैः सर्वलीलारसमाप्नोतीति वदन्ती उक्तरीत्यैव भक्तस्य लीलायां स्थिति-माह । अत एव 'आत्मत आशा आत्मत आविर्भावतिरोभावा'वित्युक्तम् । यतस्तथाकृतावेव रसोदयोतो रसस्वरूपमध्यपातित्वाल्लीलाया रसस्य च भगवदात्मकत्वात्सर्वमुपपद्यत इत्यर्थः । एवं च 'रसो वै स' इति श्रुतेर्लीलाविशिष्ट एव प्रभुः सुकृतत्वश्रावणाद्रसरूप इति तादृश एव परमं फलमिति ज्ञापितं भवति ॥ १९ ॥

**दर्शयतश्चैवं प्रत्यक्षानुमाने ॥ २० ॥**

भगवदीयार्थेषु युक्तिविरोधो भूषणमेव मन्तव्यो न तु दूषणमित्येतज्जीवहिताय बोध-यन्नाह **दर्शयत** इत्यादि। एवं लौकिकयुक्त्यविरोधस्याकिञ्चित्करत्वं यथास्माभिरुक्तं तथा **प्रत्यक्षानुमाने** । 'नैषा तर्केण मतिरापनेया' । 'परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया चे'ति प्रत्यक्षं श्रुतिः, 'अलौकिकास्तु ये भावा न तांस्तर्केण योजये'दिति स्मृतिः, 'न हि विरोध उभयं भगवत्यपरिगणितगुण ईश्वरेऽनवगाह्यमाहात्म्येऽर्वाचीनविकल्प-वितर्कविचारप्रमाणाभासकुतर्कशास्त्रकलिलान्तःकरणाशयदुरवग्रहवादिनां विवादानवसर' इति श्रीभागवतपञ्चमस्कन्धवाक्यस्मृतिश्चानुमानम्, ते उभे **दर्शयतो** बोधयत इत्यास्तिकेन श्रौतवादिना दुस्तर्केभ्यो न भेतव्यम्, किन्तु त्वचिन्त्यानन्तशक्तिमत्त्वेन भगवत्स्वरूपस्यैव लीलाविशिष्टस्य परमफलत्वमवधेयमित्यर्थः ॥ २० ॥

**भोगमात्रसाम्यलिङ्गाच्च ॥ २१ ॥**

लीलाविशिष्टस्य भगवत एव परमफलत्वे हेत्वन्तरमाह **भोगे**त्यादि । यतः 'सोऽश्नुते सर्वान्कामान्सह ब्रह्मणा विपश्चिते'ति श्रुतौ भक्तस्य सर्वकामभोगे ब्रह्मणः सहभावः श्राव्यते, स च भोगमात्रे भोग एव यत्साम्यं भक्तानुरूपत्वेन तत्तौल्यं तस्य लिङ्गं ज्ञापकम् । तस्मादपि

हेतोर्लीलाविशिष्टं पुरुषोत्तमस्वरूपमेव परमं फलमिति मन्तव्यमित्यर्थः । अत्र मात्रपदं 'न तत्समश्चाभ्यधिकश्च दृश्यत'इति श्रुतिविरोधपरिहारार्थम् । 'सोऽश्नुत'इति श्रुतौ कामानामशनीयत्वेनोक्तत्वात्तेषामेव फलत्वमिति न शङ्कनीयम् । एतस्याः श्रुते'राप्नोति पर'मिति यजुर्वाक्यविवरणरूपत्वात् कामभोगस्य स्वरूपानुभवरूपत्वाच्च । तथा चानुभूयमानस्यैव सुखस्य लोके पुरुषार्थत्वेनोक्तेरत्र भूम्नोपि सुखस्यानुभूयमानत्व एव परमफलत्वं सिद्ध्यतीति ज्ञापनायानुभवं प्रति द्वारतया कामा अत्रोच्यन्त इति बोध्यम् ॥ २१ ॥

**अनावृत्तिः शब्दादनावृत्तिः शब्दात् ॥ २२ ॥**

एवं पञ्चसूत्र्या भगवतः परमपुरुषार्थरूपत्वमुक्त्वा कर्मफलभोगानन्तरमावृत्तिवदत्राप्यावृत्तिर्भविष्यतीति शङ्कानिरासायाह **अनावृत्ति**रित्यादि । भक्तानां ज्ञानिनां चानावृत्तिः संसारे पुनरनागमनम् । तत्र हेतुः । **शब्दा**दिति । 'तयोर्ध्वमायन्नमृतत्वमेति' 'न तेषां पुनरावृत्ति'रित्यादिवाक्यरूपशब्दात् ज्ञानिनाम्, तथा भक्तानां तु 'यमेवैष वृणुते तेन लभ्य'इति श्रुतेर्वरणलभ्यः पुरुषोत्तम एव फलम्, स च 'अक्षरात्परतः पर' इति श्रुते'र्यस्मात्क्षरमतीतोह'मित्यादिगीतावाक्याच्चाक्षरात्परस्तत्प्राप्तिरेव 'ब्रह्मविदाप्नोति पर'मिति श्रुत्या बोध्यते । अत इदं वाक्यं परप्राप्तिप्रकाशनसामर्थ्येन भक्तानामनावृत्तिं बोधयतीति लिङ्गरूपाच्छब्दात्तथेत्यर्थः ॥ २२ ॥ इति पञ्चमं जगद्व्यापाराधिकरणम् ॥ ५ ॥

एवमस्मिन्पादे सपरिकरं पुष्टिमार्गीयाणां फलं विचारितम् । मर्यादामार्गीयाणामनावृत्तिरूपं च । तेनाक्षरोपासकानामक्षरे लयः, सविशेषोपासकानामक्षरे सार्ष्टिमुक्तिः, ज्ञानिभक्तानां भगवत्सेवनम्, पुष्टिभक्तानां तु स्वरूपानन्दानुभव इत्यस्मिन्नध्याये फलमेवं सिद्धमिति ज्ञेयम् ॥

इति श्रीवल्लभाचार्यचरणाब्जरजोधनः ।
कृष्णचन्द्रस्तत्त्वसूत्रवृत्तिं तत्पदयोर्न्यधात् ॥ १ ॥
प्रभवस्तेऽनेन तुष्यन्तु मयि ते दीनवत्सलाः ।
ततोतिरिक्तं न मम काङ्क्षितं क्वापि विद्यते ॥ २ ॥

**इति श्रीवल्लभाचार्यचरणैकतानश्रीव्रजनाथात्मजश्रीकृष्णचन्द्रविरचितायां ब्रह्मसूत्रवृत्तौ चतुर्थाध्यायस्य चतुर्थः पादः समाप्तः ॥ ४ ॥**